# सा ग रि का

त्रैमासिकी

षष्ठवर्षम्, २०२४ वि० सं०

षष्ठवर्षे प्रथमाङ्कः

सम्पादकः
डॉ० रामजी उपाध्यायः एम० ए०, डी० लिट्०
संस्कृत-विभागाध्यक्षः

प्रकाशिका
संस्कृत-परिषद्
सागरिका-समितिः
सागर-विश्वविद्यालयः, सागरम्

देयम्

| | |
|---|---|
| प्रत्यङ्कम् | २ रूपकाः |
| वार्षिकम् | ६ रूपकाः |
| वस्त्रावरणसंहितवार्षिकचतुरङ्काणाम् | ८ रूपकाः |
| आजीवनग्राहकस्य | १०० रूपकाः |

अङ्कनिर्गमनम् आषाढाश्विन–पौष–चैत्रमासेषु
(जून-सितम्बर-दिसम्ब-मार्च)

मुद्रकः
नरहरी गोविन्द वेडेकरः
सागर-विश्वविद्यालय-मुद्रणालयः
सागरम् (म. प्र.)

# विषयानुक्रमणिका

# फ्रान्सदेशे संस्कृताध्ययनम्

महत् खल्वेतदस्माकं भागधेयं यत् सागरविश्वविद्यालयेन एतद्विश्वविद्यालयीयसंस्कृतविभागस्य तत्त्वावधाने वैदेशिकविश्वविद्यालयेषु संस्कृताध्ययनमधिकृत्य संस्कृतभाषया भाषणत्रयनिमित्तमामन्त्रितोऽस्मि। यदा मया परमादरणीयचरितानां पण्डितप्रकाण्डानां डाक्टरश्रीरामजी उपाध्यायमहाभागानामामन्त्रणमासादि, तदा तत्कालमेवाङ्गीकरणे केवलं भवद्गतानुराग एव हेतुरासीत्।

विषयोऽयमतीव जटिल इत्यहं मन्ये। जानन्त्येव भवन्तः यत्र खलु सम्भाव्यते स्वल्पेऽस्मिन् काले निखिलधरणिमण्डलमण्डनायमानसंस्कृतविद्याविषयकशोधकार्यजातस्य समाकलनमिति कृत्वा केवलं कतिपयानां विशिष्टानामेव विदुषां गरीयसाञ्च ग्रन्थानां नाम्ना वस्तुनिर्देशमात्रं कर्तुमीहे। वस्तुतः प्रत्येकं देशविशेषमधिकृत्य प्रत्येकं विशिष्टं पाश्चात्यं विश्वविद्यालयमधिकृत्य केनापि शोधकार्यं सम्पाद्यतामित्यहमिदानीं विश्वसिमि।

प्रत्येकं भाषणस्य गाम्भीर्यसंरक्षणधिया वैशिष्ट्योत्पादनबुद्ध्या च अहमेतेषु भाषणेषु केवलं तानेव देशान् परिजिघृक्षामि येषां संस्कृतविद्याया अनुसन्धानक्षेत्रे वैशिष्ट्यं सन्निश्चते। अस्मिन् प्रसङ्गे एतत्तु प्रथमत एव विनिवेदयितुमभिलष्यामि यत् पूर्वयूरोपीयविश्वविद्यालयेषु संस्कृताध्ययनमधिकृत्य* ममैको लेखः प्राकाशि अस्मादेव विश्वविद्यालयतः प्रकाशितायां सागरिकायाम्। अतो न खलु पूर्वयूरोपीयविश्वविद्यालया. विषयतामापाद्यन्ते।

संस्कृतशोधकार्यपरम्परायाः प्राचीनत्वाद्वा ग्रन्थराशेर्विपुलकलेवरत्वाद्वा, अहमेकस्मिन् भाषणे 'फ्रान्सदेशे संस्कृताध्ययनम्' द्वितीयस्मिन् भाषणे 'जर्मन-हालेण्ड इटेली-देशेषु संस्कृताध्ययनम्', तृतीयस्मिन् भाषणे 'इंग्लेण्डदेशे अमरीकादेशे च संस्कृताध्ययनम्'। इत्यनेन प्रकारेण भाषणत्रयं

उपस्थापयितुं कामये । आशासे यदनेन विधिना यावच्छक्यमयं विषयोऽपि कदाचित्परिपूर्णतां प्राप्नुयात् ।

अद्य प्रथमे भाषणे फ्रान्सदेशे संस्कृताध्ययनविषये किञ्चिद् ब्रवीमि । अतिक्रान्तः खलु शतद्वयादप्यधिकः कालः यदा फ्रान्सदेशे संस्कृताध्ययनस्य परम्परा जनुर्लेभे । अष्टादशशतके पेरिसनगरे सर्वतः सुप्रसिद्धः राजकीय-महाविद्यालयः कालेज रोय्याल (College Royal) नाम्ना परिज्ञातः, साम्प्रतं कालेज द फ्रान्स नाम्ना विज्ञायते । अष्टादशोत्तरसप्तदशशततमे ख्रिस्तीयाब्दे (1718 A.D ) अस्य राजकीयमहाविद्यालयस्य पुस्तकालयाध्यक्षेण श्रीबिन्यो महोदयेन ( Bignon ) सर्वेऽपि संस्कृतकोशग्रन्थाः भूयांसश्च साहित्यशास्त्रीया व्याकरणशास्त्रीयाश्च ग्रन्था विक्रीताः । अस्मिन्नेव समये श्रीकालमेत्तमहोदयाः ( Calmette ) दक्षिणभारताद् ऋग्यजुःसामवेदान् लेभिरे । एकत्रिंशदुत्तर-सप्तदशशततमेऽब्दे ( 1731 ) श्रीजेस्यू-बेसी महोदयाः (Jesiut Beschi) ऋग्वेदम्, ऐतरेयब्राह्मणम्, श्रीगङ्गेशोपाध्यायप्रणीतं तत्त्वचिन्तामणिञ्च पेरिस-विश्वविद्यालये प्राहिण्वन् । श्रीपोन्समहोदयाः ( Pons ) वङ्गदेशात् रामायण-महाभारतादीनि सर्वाण्यपि पुराणानि, व्याकरणशास्त्रस्य, अलङ्कारशास्त्रस्य, वेदान्तशास्त्रस्य, नव्यन्यायशास्त्रस्य, साहित्यशास्त्रस्य च सर्वानपि प्रधानप्रधान-ग्रन्थान् संजगृहुः । महाभागेनानेन केषाञ्चिद्भारतीयानां संस्कृतपण्डितानां संमन्त्रणेन द्विशतग्रन्थानां परिगणनपूर्वकं यथावैज्ञानिकपद्धति एका सूची सज्जी-कृता । सम्यगधीतसंस्कृतभाषोऽयं श्रीपोन्समहोदयः लेटिनभाषया पूर्वमनूदितस्य अमरकोशस्य साहाय्येन लेटिनभाषया प्रथमं संस्कृत-व्याकरणं प्रणिन्ये । नवत्रिं-शदुत्तरसप्तदशशततमेऽब्दे ( 1739 ) पेरिसनगरे संस्कृत-साहित्यस्य प्रथमा वैज्ञानिकी सूची प्राकाश्यमागता । तदानीं श्रीपोन्समहोदयः संस्कृतवाङ्मयस्य सर्वाण्यप्यङ्गान्यधिकृत्य एकं सुविस्तृतं विवरणमुपन्यस्तवान् । अस्मिन्नेव काल-क्रमे पाण्डुचेरीनगरवास्तव्यस्य कस्यापि तामिलभाषाविशारदस्य भारतीयस्य श्रीमारीदासपिल्लेमहोदयस्य विशिष्य निर्देशं कर्तुमिच्छामि । महाभागोऽयं स्वकीयेन फ्रेञ्चभाषाविषयकेन लेटिनभाषाविषयकेन च ज्ञानेन बहूनां फ्रान्स-देशीयानां संस्कृतानुरागिणां पण्डितानां कृते अतीव महत्वपूर्णं विज्ञापनं प्रबोधितवान । श्रीमारीदासपिल्लेमहोदयैः स्वकीयं तामिलभाषया अनूदितं श्रीमद्भागवतमहापुराणं प्रकाशनात्पूर्वं पेरिसनगरे श्री जोसेफ-देग्विय्यमहोदयानां (Joseph Degvigne) सविधे निरीक्षणार्थं प्राहायि । यः खलु सपद्येव

परीक्षितः समारभ्य भारतीयाना महीपालानां वंशावलिं पर्यचिनोत् । श्री देगिंवय्यमहोदयेनैव सर्वप्रथम ग्रीस-देशीयेन सन्ड्रकोटसेन (Sandrakottos) भारतीयस्य चन्द्रगुप्तस्य (Sandragoutten i. e. Chandragupta) अभेदः निरणायि । एतावता कालेन भारतीयैतिहासिकपुरावृत्तविवरणस्य समकालिकता Memoire de e' Academie des Inscriptions et Belles Lettres' इत्येतस्मिन् संस्मरणे प्रकाशिता बभूव। इयमेव भारतीयपुरातत्त्वविवरणस्य समकालिकता परवर्तिनि काले श्रीविलियम जोन्स महोदयैः लोकप्रियतामापादिता ।

एकोनविंशतिशतकस्य आरम्भ एव श्रीआंकतिल द्युपेरों महोदयैः (Anquetil Duperron) पर्शियनभाषया अनूदितानां पञ्चाशत्संख्यकानामुपनिषदां फ्रेन्चभाषया अनुवाद प्रकाशयामास। इतः पर्यन्तं वंगदेशीया 'एशियाटिक सोसाइटी' संस्कृत-विद्याया अध्ययनार्थं विशिष्टं केन्द्रं समजनि। अथ च गच्छति काले इंग्लैण्डदेशेऽपि भारतीयभाषाणामध्ययनार्थमनुक्रमः प्रादुर्बभूव । कालक्रमेण इंग्लैण्डदेशीय अलेग्जेण्डरहेमिल्टननामा कश्चित् नौविभागाधिकारी हस्तलिखितसंस्कृतग्रन्थाना महती सामग्रीमध्येतु पेरिसनगरं समाजगाम। अस्मिन्समये सम्पूर्णेऽपि यूरोपमण्डले श्रीहेमिल्टन महोदय एव संस्कृत साध्वजानात्। पेरिसनगरे युद्धगृहीतः सन् कारागारस्थोऽप्यय एकतः वैज्ञानिकीं पद्धतिमनुसृत्य पेरिसविश्वविद्यालये संगृहीताना हस्तलिखित-सस्कृत-ग्रन्थानां प्रामाणिकीं सूचीं विनिर्ममे, अपरतश्च अनेकं संस्कृतभाषासाहित्यानुरागिणश्छात्रान् संस्कृतं पाठयामास । श्रीहेमिल्टनमहोदयानां शिष्याणामन्यतमः प्रधानश्चासीत् जर्मनदेशवास्तव्यः श्री फ्राइडरिख-स्लेगलमहोदयः (Friedrich Schlegel) य. खलु कालान्तरे जर्मनदेशे भारतीयविद्यायाः संस्थापकानां जर्मनदेशीयानां संस्कृतपण्डितोत्तंसानां मूर्धन्यमवजगाहे ।

को हि नाम संस्कृतज्ञो न विजानीयात् यत् चतुर्दशोत्तराष्टादशशततमेऽब्दे (1814) पेरिसविश्वविद्यालये संस्कृतपरिपाठनैकधिया सर्वोच्चं प्राथमिकं प्राध्यापकाग्रेसरासनं संस्थापितमासीत् । इमामतुलहर्षप्रदायिनीं संस्कृतभाषासाहित्ययोः समुत्कर्ष प्रख्यापयित्रीं वार्तां स्मारं स्मारं अद्यापि आनन्दसुधासागरे निमज्जन्तीव नश्चेतांसि । अस्मिन् प्रसंगे एतदपि स्मरणीयमास्ते यत् कस्मिंश्चिदपि भारतीये विश्वविद्यालये पञ्चषष्ट्युत्तराष्टादशशतत-

माब्दात्पूर्वं ( 1865 ) संस्कृतप्राध्यापकाग्रेसरासनं नैव संस्थापितं बभूव । पेरिसविश्वविद्यालये संस्कृतस्यैतत् प्राध्यापकासनं फ्रान्सदेशीयाः प्राचीन-ईरान-भाषासाहित्यविद्याविशारदाः श्री द-शेजी-महोदयाः सर्वप्रथमं समलंचक्रिरे । अयं खलु संस्कृताध्यापकमन्तरैव, महान्तं परिश्रममुररीकृत्य केवलं श्रीपोन्स-महोदयानां लेटिनभाषया प्रकाशितयोः व्याकरणामरकोषयोः साहाय्येन, श्रीविल्किन-महोदयैरनूदितस्य हितोपदेशस्य चाध्ययनेन स्वयमेव संस्कृतं पपाठ । संस्कृत-काव्यस्य परमप्रशंसकोऽप्ययं वरिष्ठो वैयाकरणः समजनि । श्री द-शेजी-महोदयानामयमासीत् कोऽपि विशिष्ट एव भागधेयसमुल्लासः यदयं बहूनां महायशस्कानां शिष्याणां गुरुरासीत् । एतेषां शिष्याणां प्रथमः सुविश्रुतः जर्मनदेशीयः श्रीबॉपमहोदयः ( Bopp ) आसीत् । यः कालान्तरे जर्मनदेशे भारत-यूरोपीयभाषाणां ( Indo-European Languages ) अध्ययनार्थं तुलनात्मकस्य भाषाविज्ञानशास्त्रस्य आधारशिलां प्रत्यतिष्ठिपत् । अपरो लब्ध-प्रतिष्ठः शिष्यः मनुस्मृतेः, अमरकोषस्य च सम्पादकः श्रीलोआजलर-देलोंशा महोदयः ( Loiseleur Deslongchamps ) आसीत् । एतेषामपरेण शिष्येण श्रीलांग्लोआमहोदयेन (Langlois) ऋग्वेदस्य हरिवंशपुराणस्य च प्रथमः सम्पूर्णः फ्रेन्चभाषानुवादः सज्जीकृतः । वस्तुतः श्रीद-शेजीमहोदयानां शिष्यपरम्परायां सर्वोत्कर्षेण वर्तमानः, परां प्रसिद्धिं गतः शिष्यप्रवरस्त्वासीत् श्रीओजेनबिर्नुफमहोदयः (Eugine Burnouf) । श्रीओजेन-बिर्नुफमहोदयस्य पिता श्रीजां-लुईबिर्नुफमहोदयः लेटिनभाषाया विशेषज्ञ आसीत् । किन्तु पुत्रोऽयं स्वगुरुवरेण्येभ्यः श्रीद-शेजी-महाभागेभ्यः संस्कृतमधीत्य प्रथमे वयसि वर्तमानोऽपि स्वीयानां गुरुचरणानां श्रीद-शेजीमहोदयानां स्थाने संस्कृतस्य प्राचीनभारतीय-भाषाविज्ञानशास्त्रस्य च प्राध्यापकाग्रेसरासनमुपलेभे । श्रीओजेनबिर्नुफमहोदयः अत्यन्तमेव कुशाग्रबुद्धिः अनन्यसाधारणमेधासम्पन्नश्चासीत् । अनेन अचिरादेव अनेकासु भाषासु, संस्कृत-विद्यायाश्च अनेकासु शाखाप्रशाखासु परं प्रावीण्यं प्रापि । षड्विंशत्युत्तर-अष्टादशशततमेऽब्दे ( 1826 ) यदा यूरोपमण्डले पाली-भाषाया नामापि केनापि नाज्ञायि, तदा श्रीओजेन-बिर्नुफ-महोदयः स्वकीयेनैकेन नार्वेदेशीयेन क्रिश्चियनलेसननामकेन ( Christian Lassen ) यूना शिष्येण सह पालिभाषाविषयकं विशिष्टमेकं निबन्धं प्राकाशयत् । अयमेव श्रीलेसन-महोदयो गच्छति काले जर्मनदेशे सुप्रसिद्धो भारतीयविद्यानदीष्णः संबभूव । चिरकालपर्यन्तं कृतभूरिपरिश्रमः श्रीबिर्नुफमहोदय इरानियनयस्नमवलम्ब्य स्वकीयां प्रशस्तपाण्डित्यपरिमण्डितां टीकां प्रकाशितवान् । ग्रन्थोऽयमेतेषां

ग्रन्थानां मूर्धन्यं भजते। तदानीन्तने पारसीयानां अवेस्तानामकस्य धर्मग्रन्थस्य याथार्थ्यं विलुप्तप्रायमासीत्। पहलवीभाषया कृतानुवादस्य औचित्यं न खलु सर्वेऽपि विद्वांसः अन्वमोदन्त। अनेन समयेन अवेस्ताग्रन्थस्य फ्रेन्चभाषानुवाद श्रीद्यु पेरोंमहोदयाः प्राकाशयन्, अनेनैव समयेन श्रीनैरोसिंहमहोदयाः अवेस्ता-ग्रन्थस्य पहलवीभाषानुवादमाश्रित्य संस्कृतेनाशिकमनुवादं प्रकाशयामासुः। अवेस्ताग्रन्थस्य फ्रेन्चभाषया संस्कृतभाषया च विहितयोरनयोर्द्वयोः अनुवाद-ग्रन्थयोः साहाय्येन श्रीबिर्नुफमहोदयाः स्वकीयां यस्नविषयिणी टीकां प्रकाशितवन्तः। अनेन तुलनात्मकेन अध्ययनेन इमे महानुभावा अवेस्तासंस्कृतयोः पारस्परिकं सम्बन्धं निरदीधरन्। अनेन प्रकारेण श्रीबिर्नुफमहोदयाः भारत-ईरानभाषाविज्ञानशास्त्रस्य द्रढीयांस प्रतिष्ठितस्तम्भं पेरिस-विश्वविद्यालये संस्थापयामासुः। एतत्सत्यं यत् आर्षप्रयोगप्रधानं वैदिकवाङ्मयं पेरिसविश्व-विद्यालये बहुकालपर्यन्तं अनन्विष्टमेवातिष्ठत्, तथापि संस्कृतावेस्तयोः साम्या-न्वेषणधिया श्रीबिर्नफमहोदयाः वैदिकवाङ्मयस्य पाणिनिव्याकरणशास्त्रस्य च सुव्यवस्थितं वैज्ञानिकमध्ययनं समारेभिरे। शनैः शनैः पेरिसविश्वविद्यालयः संस्कृतविद्याया अध्ययनार्थं यूरोपमण्डले प्रधानं केन्द्रं समजनि। अत्रैव च भारत-ईरानभाषाविज्ञानशास्त्रस्य प्रधानमासनं प्रतिष्ठितम्। यूरोपमण्डलस्य प्रत्येकं देशात् नवनवा मेधाविनश्छात्रा. श्रीबिर्नुफमहोदयानां धवलातिधवलं यशः श्रावं श्रावं पेरिसनगरे समागत्य संस्कृतमधिजिगांसिरे। श्रीबिर्नुफमहो-दयानां शिष्यपरम्परायां जर्मनदेशवास्तव्यान् श्रीमैक्समूलरमहोदयान् उदाजि-हीर्षामि। नूनं जगद्विख्यातकीर्तयः इमे संस्कृतपण्डिताः आजीवं वेदाध्ययनैकव्रताः स्वात्मानं मोक्षमूलरभट्टनाम्ना प्राचीचरन्। भारते वर्षे तु को हि नाम संस्कृतज्ञः असंस्कृतज्ञो वा अपरिचितः स्यादेतेषां संस्कृतविद्याविषयकपाण्डित्य-यशःपटलेन। अत्रायमेव हेतुः यत् श्रीमैक्समूलरमहोदयानां ग्रन्थाः आंग्ल-भाषया प्राकाश्यमुपागच्छन्। फ्रान्सदेशीयानां विद्वद्वरेण्यानां सर्वेऽपि अद्यावधि प्रकाशिता भारतीयविद्याविषयकाः शोधग्रन्थाः फ्रेन्चभाषयैव विनिर्मिताः, अत्रापि तेषां स्वमातृभाषाविषयकानुराग एव निमित्तमित्यभिमन्यामहे। वस्तुतः श्रीमैक्समूलरमहोदया अपि स्वकीये त्रयोविंशे वर्षे पेरिस-विश्वविद्यालये ऋग्वेदमध्येतुं श्रीबिर्नुफमहोदयैः दीक्षिताः संबभूवुः।

यूरोपमण्डलीयानां बहूना पण्डितप्रवराणां गुरुः, सकलशास्त्रपारङ्गतः श्रीबिर्नुफ महोदयः न केवलं ऋग्वेदावेस्तयोः तुलनात्मकेन अध्ययनेन भारतयूरोपीय-

भाषाविज्ञानशास्त्रस्य भारतईरानीयभाषाविज्ञानशास्त्रस्य वा स्वाध्यायेन स्वात्मानं परिबबन्ध, अपि त्वेकतः भारतीयं बौद्धसाहित्यमध्येतुं अपरतश्च श्रीमद्भागवतमहापुराणस्य फ्रेन्चभाषानुवादकार्ये त्रिंशद्वर्षपर्यन्तं निरर्गलमनवच्छिन्नरूपेण न्ययुङ्क्त । सफ्रेन्चभाषाविस्तृतभूमिकं दशभागेषु प्रकाशितमेतेषां श्रीमद्भागवतमहापुराणं पुराणेषु अनुसन्धित्सूनां कृते अवश्यमेव साक्षात्करणीयः पन्थाः ।

त्रिपञ्चाशदुत्तराष्टादशशततमेऽब्दे(1853)श्रीबिर्नुफमहोदयाः दैवदुर्विपाकादकाल एव कालकवलिताः इति सत्यं महत् दौर्भाग्यमासीत् संस्कृतज्ञानाम् । एतेषां भूयांसः पटीयांसो विद्वांसः सुहृदः शिष्याश्च तेषामसम्पूर्णान् अप्रकाशितान् ग्रन्थान् सम्पादयितुमुपचक्रमिरे । तन्मित्रेषु श्रीसें-तिलेर (Saint-Hilaire) महोदयः न्यायशास्त्रे सांख्यशास्त्रे च श्रीबिर्नुफमहोदयैः विरचितान् ग्रन्थान् परिपूरयामासुः । तच्छिष्येषु च इटेलीदेशवास्तव्यः श्रीगोरेशियोमहोदयः ( G rresio ) वाल्मीकिरामायणस्य उत्कृष्टं संस्करणं सम्पादितवान् । श्रीफूशोमहोदयः (Foucaux) तिब्बतीविद्यामन्वेषयामास । श्री पावीमहोदयेन (Pavie) भोजप्रबन्धस्य महाभारतस्य च केषाञ्चित् स्थलानां, श्रीलांसरो महोदयेन (Lancerean) श्रुतबोधस्य पञ्चतन्त्रस्य हितोपदेशस्य च फ्रेञ्चभाषानुवादाः प्रकाशिताः । एवमेव संस्कृतग्रन्थानां फ्रेञ्चभाषानुवादक्षेत्रे संस्मरणीयाः श्रीमन्तः फोशे महोदयाः (Fauchi) यैः कविकुलगुरोः कालिदासस्य सर्वेषां ग्रन्थानां सम्पूर्णस्य वाल्मीकिरामायणस्य, महाभारतस्य आद्यानां नवपर्वणां, दण्डिनो दशकुमारचरितस्य, भर्तृहरेः शतकत्रयस्य, शूद्रकप्रणीतस्य मृच्छकटिकस्य, शिशुपालवधस्य अन्येषाञ्च अनेकेषां ग्रन्थानां फ्रेञ्चभाषानुवादपुरस्सरं भगवती श्रीसुरसरस्वती समुपासिता ।

प्रेष्ठाः !

विदितमेव समेषां विदुषां यत् द्वाविंशत्युत्तराष्टादशशततमेऽब्दे (1822) पेरिसनगरे 'सोसिएते आजिआतिक' (Societi Asiatique) नाम्नी प्राच्यविद्यापरिषद् तत्रत्यैः संस्कृतभाषासौन्दर्यसमावर्जितान्तःकरणैः पण्डितोत्तंसैः संस्थापिता आसीत् । एतत्स्मरणीयमास्ते यत् सम्पूर्णेऽपि यूरोपमण्डले इयमासीत् प्रथमा प्राच्यविद्यापरिषद् । अस्याः तत्त्वावधाने नियमितरूपेण फ्रेञ्चभाषया 'जुर्नालआजिआतिक' नाम्नी त्रैमासिकी प्राच्यविद्यासम्बन्धिनी पत्रिका प्राकाश्य-

मुपगच्छति। अस्यां पत्रिकायामसंख्याता एतादृशा दीर्घकलेवरा निबन्धा नयनगोचरतामागच्छन्ति येषामध्ययनं भारतीयेषु विश्वविद्यालयेषु संस्कृतं पठतां विद्यार्थिनां निमित्तं अनिवार्यमेवाहं मन्ये। संस्कृतविद्याक्षेत्रे अनुसन्धित्सूनां कृते फ्रेञ्चभाषाज्ञानमन्तरा परां समृद्धिं गतेय फ्रान्सदेशीया शोधपरम्परा सर्वथा असंस्पृष्टैवावशिष्यते, इति नूनमनुकम्पतेऽस्माकं हृदयम्।

एकोनविंशतिशतकस्य आरम्भ एव फ्रान्सदेशे प्राच्यकलां प्राच्यशिल्पशास्त्रं प्राच्यवास्तुशास्त्रं प्राच्यनिर्माणशास्त्रं प्रति च स्वाध्यायक्रमः समुन्मिमेष। फलतः अशीत्युत्तराष्टादशशततमेऽब्दे (1880) 'म्यूजे गिमे' नामक. सुप्रसिद्धः प्राच्यसंग्रहालयः स्थितिमभजत, यत्र धर्माणामितिहासविषयकं भारतविषयकं सुदूरप्राच्यदेशीयकला-शिल्प-वास्तुविषयकं वा दुर्लभतरं वस्तुजातं संगृहीतमास्ते। अधुनास्मिन् प्राच्यसंग्रहालये श्रीमती जानीनअोबोदय्येमहोदया निदेशकपदवीमलंकुर्वन्ति। अस्याः प्राच्यकलाविषये बह्वो ग्रन्था निबन्धाश्च प्रकाशिता विद्यन्ते।

अस्मिन्समये भूयांसः सुप्रसिद्धाः प्रान्सदेशीयाः संस्कृतपण्डिताः भगवत्यै सुरसरस्वत्यै स्वकीयं ग्रन्थपुष्पाञ्जलिं समर्पयामासुः। एतेषु नाट्यालकारविशारदा श्रीरेनांमहोदयः (Renaud) श्रीबार्थ-बर्गेन्य-सेनारमहोदया. सर्वदा भारतीयविद्याविशारदैः सादरं संस्मरिष्यन्ते। श्रीबार्थमहोदयाः (Barth) चत्वारिंशद्वर्षेभ्योऽप्यधिकं . भारतीयधर्माणामितिहासक्षेत्रे, आलंकारिकाणाञ्च मूलभूतानां सिद्धान्तानां सूक्ष्मेक्षिकया पर्यालोचने, आत्मानं न्ययोजयन। श्रीवर्गेन्यमहोदया आजीवनं ऋग्वेदस्य सम्यगध्ययनं विधाय स्वकीयमनन्यसाधारणं समालोचनं प्रकाशितवन्तः। मूलतः वैदिकोऽयं विद्वान् स्वकीयेनाध्ययनेन भारतीयं भाषाविज्ञानशास्त्रं काल्पनिकसमालोचनपथः पौराणिकैतिहासिकदिशः परावर्त्य उन्मोचयामास। एतेषां द्वौ ग्रन्थौ विशिष्य निर्देशमर्हतः

(१) The Vedic Religion according to the Hymns of the Rgveda.

(२) Researches on the Samhitas of the Rgveda.

श्रीबर्गेन्यमहोदयेनैव सोरबोनापरपर्याये पेरिसविश्वविद्यालये संस्कृतस्य पठनपाठनविषयिणी आधारभित्तिः सुदृढीकृता।

बौद्धसाहित्यविषयकशोधकार्यक्षेत्रे श्रीफूशोमहोदयाः तिब्बतीभाषया फ्रेन्चभाषया च ललितविस्तरमन्ववदन् । एवमेव श्रीलेभ्रोंलिएरमहाभागा बहूनां पाली-तिब्बती-मंगोल-चीनीभाषाग्रन्थानां फ्रेन्चभाषया प्रामाणिकमनुवादमुपन्यस्तवन्तः । शनैः शनैः श्रीबर्गेन्यमहोदया भारतचीनयोः प्राचीनेतिहासविषये, बृहत्तरभारतविषये च जातानुरागाः सन्तः चम्पादेशस्य प्राचीनेषु भागेषु भारतचीनद्वीपानामुपपूर्वतीरं समुपलब्धान् भूयसः काम्बोजसंस्कृतशिलालेखान सफ्रेन्चभाषानुवादं विशदीचक्रिरे ।

एकोनविंशतिशतकस्य अन्तिमे काले फ्रान्सदेशे भारतीयविद्याविषयकं शोधकार्यं फ्रान्सदेशीयैः तत्तादृशैः विद्वद्वरेण्यैः समारब्धं, ये किल दिष्टया भारतमध्यैशिया-इण्डोचाइना-इण्डोनेशिया-जापानदेशान प्रत्यक्षं साक्षाच्चक्रिरे ।

चतुर्नवत्युत्तराष्टादशशततमेऽब्दे (1894) श्रीबर्गेन्यमहोदयानां यशस्विनः शिष्याः भारतीयविद्यायाः सर्वेष्वपि क्षेत्रेषु समन्ततः कृताधिकाराः श्री सिल्वें लेवीमहाभागाः ( Svlvain Levi ) प्रथमे वयसि वर्तमाना अपि केवलं एकत्रिंशद्वर्षकल्पाः पेरिसनगरे 'कालेज-द-फ्रान्स' इत्येतस्मिन् सर्वतः सुप्रसिद्धे शोधमहाविद्यालये श्रीफूशो महोदयानां स्थाने संस्कृतस्य प्राध्यापकाग्रेसराः संवृत्ताः । एतेषां सर्वतः समं प्रसर्पन्त्याः धीवृत्तेर्निमित्तात् इमे फ्रेञ्चविद्वत्परम्परायां 'अपरे विर्नुफाः' इति रूपेण विज्ञायन्ते । संस्कृतसाहित्ये ब्राह्मणधर्मग्रन्थेषु च मूलतः समावर्जितस्वान्ताः भारतीयनाट्यशास्त्रं ब्राह्मणानाञ्च याज्ञिकविधिविधानानि च पर्यालोचयन् । एतत्तावत्—'The Indian Theatre'; The Doctrine of the Sacrifice of the Brahmanas इत्येतादृशैः ग्रन्थरत्नैः स्फुटीभवति । अल्पीयस्येव वयसि भारतवर्षे, तत्रापि प्राधान्येन नेपालप्रदेशे सम्पादिताभिः स्वकीयाभिः प्राथमिकीभिः यात्राभिः अयं संस्कृतहस्तलिखितग्रन्थेषु च नितरां समाकृष्टः समजायत । अथ च श्रीशावानमहाभागैः (Chavannes) सह संगः सांहचर्यञ्च श्रीसिल्वेंलेवीमहोदयानां संस्कृतविद्यानुरागं बौद्धसाहित्याध्ययनं प्रति परावर्तयामासतुः । अल्पीयसैव कालेन अमीभिः तिब्बतीभाषा चीनीभाषा च साधिकारं वशीकृते । बहूनां बौद्धसंस्कृतग्रन्थानां असङ्गप्रणीतमहायानसूत्रालंकार - वसुबन्धुप्रणीतत्रिंशिकाविंशतिकादीनां तिब्बतीचीनीसंस्करणानामाधारेण परिशुद्धं स्वरूपमुपस्थाप्य बौद्धसंस्कृतसाहित्यक्षेत्रे चिरस्मरणीयं योगदानमकारि । केन वा न

ज्ञायते यद् वाराणस्यां यदा श्रीसिल्वेंलेवीमहाभागाः काशिकराजकीयसंस्कृत-महाविद्यालये (साम्प्रतं वाराणसेय-संस्कृतविश्वविद्यालये) वक्तु प्रावर्त्तन्त तदा ललित-ललितया संस्कृतभाषयैव स्वकीयं भाषणं कृत्वा सर्वानपि काशिक-पण्डितवरेण्यान् विस्मयस्तिमितमानसानानन्दाम्भोनिधौ निमज्जयामासुः ।

स्वकीयेन सुनिर्मलेन यशःपटलेन प्रद्योतितनिखिलदिगन्तरालाः श्रीफूशे-महोदया न केवलं साहित्य-शास्त्रमर्मज्ञाः, अपि तु प्रौढा वैयाकरणाः, नैयायिकाः, पुरातत्त्वशास्त्रपारङ्गताश्चासन् । भारतवर्षे अफगानिस्तानदेशे च नैकशः सम्पादितयात्राका गान्धारपरम्परायां ग्रीस-बौद्धकलायाः लोकोत्तरचमत्कारपूर्णाया विच्छित्तेश्छटाया विलक्षणं समन्वयं समकार्षुः । श्रीफूशेमहोदयाः, श्रीलुई-फिनोमहोदयाश्च इन्डोचाइनामण्डले सुदूरपूर्वदेशीय-फ्रेन्चविद्यासंस्थान Ecole Francaise d' Extreme Orient ) संस्थापितवन्तः । यतः खलु अद्यावधि फ्रेन्चभाषया सप्तपंचाशत्संख्याका अतीव महत्त्वपूर्णा ग्रन्थाः प्रकाशिता विद्यन्ते । इत एवैका प्राच्यविद्यासम्बन्धिनी षाण्मासिकी फ्रेन्चभाषामयी पत्रिकापि नियमतः प्रकाश्यते । प्राकाश्यमुपगच्छन्त्या अस्याः ( Bulletine de e' Ecole Francaise d' Extreme Orient ) इत्याख्यायाः शोधपत्रिकाया व्यतीयाय नूनं त्रिपञ्चाशद्वर्षपरिमितः कालः । पत्रिकायाः प्रत्येकमङ्के विराजते पृष्ठानां प्रायशः सप्तशती । एवमेव अस्यैव विद्यासंस्थानस्य तत्त्वावधाने फ्रेन्चभाषामय्याः Arts Asiatique नामिकाया त्रैमासिक्याः पत्रिकायाः त्रयोदशवर्षाणि व्यतीतानि । अस्याः पत्रिकायाः प्रधानसम्पादकाः श्रीमन्तः जां फिलियोजामहोदयाः सुप्रसिद्धा बृहत्तरभारतविद्याविशारदा विद्यन्ते । अत्रापि महती एतादृशी सामग्री सन्निधत्ते यया शोधकार्ये महानुपकारः स्यात् । वस्तुतोऽस्य सुदूरपूर्वदेशीयफ्रेन्चविद्यासंस्थानस्य प्रमुख-मुद्देश्यमासीत् कम्बोडियामण्डले चम्पा-मण्डले च समुपलब्धानां सर्वेषां ब्राह्मण-धर्मस्य समाधिमन्दिराणां बौद्धधर्मस्य च स्तूपानां संरक्षणम्, तद्विषयकञ्च शोधकार्यसम्पादनम् । श्रीफूशेमहोदय एव काबुलदेशे फ्रेन्चपुरातत्त्वसंस्थानं, जापानदेशे च टोकियोनगरे 'फ्रेन्कोजापोनेमेन्शन' नामकं फ्रेन्चविद्यासंस्थानं संस्थापितवन्तः । भूयांसः खलु फ्रांसदेशीयाः प्राच्यविद्याविशारदा विद्वांस एतेषु फ्रेन्चविद्यासंस्थानेषु बहुकृतपरिश्रमाः स्वकीयैः स्वकीयैः प्राच्य-विद्या-विषयक-नानाविधशोधग्रन्थ-पुष्पांजलिभिः फ्रान्सदेशीयानां प्राच्यविद्यानुरागित्वं सर्वतः प्रख्यापितवन्तः, इति यत्सत्यं नातिशयोक्तिवचो ब्रूमहे । अस्मिन् प्रसंगे नृवंश-विद्याविशारदस्य भाषाविज्ञानशास्त्रिणः अधिगतवेदवेदांगविचित्रविभवस्य

निगडीकृत-बौद्धसाहित्यस्य श्रीजां-प्रज्युलिस्की ( Przyliski ) महोदयस्य निर्देश एव अलम् ।

साम्प्रतं श्रीज्यूल-ब्लाकमहोदयान् निर्देष्टुमीहे । श्रीसिल्वेंलेवीमहोदयाना मप्रतिमप्रतिभानां भाषाविज्ञानशास्त्रिणां श्रीमेइय्ये ( Meillet ) महोदयानाञ्च यशोवितानका अद्वितीयाः शिष्यप्रवराः श्री–ज्यूल–ब्लाकमहोदयाः स्वात्मानं–व्याकरण–शास्त्राध्ययने च व्यापारयामासुः । महाभागानामेतेषां अधोनिर्दिष्टा द्वित्रा ग्रन्थाः तेषां भारतीय–विद्या–विषयकं प्रशस्तं पाण्डित्यं भारतीय–विद्याविषयानुरागञ्च सडिण्डिमघोषमुद्घोषयन्ति -

(१) The Doctrine of the Indo-Aryans from the time of the Veda to the Modern Times.
(२) The Functions of the Marathi Language
(३) The Grammatical Structure of Dravidian Language.

अनेन अंगुलिमात्रपरिगणनेनापि फ्रान्सदेशीयानां पण्डितोत्तंसानां योगेन सुस्पष्टं प्रतिपद्यते यदस्मिन् देशे प्रख्यात - यशसां संस्कृत - पण्डितानामतीव प्राचीना परम्परा अद्यापि जीवन्ती संस्कृतानुसन्धानकर्तॄणां कृते प्राणदायिनी सर्वोत्कर्षेण वर्तते ।

अद्यत्वे सोरबोनविश्वविद्यालये वयोवृद्धाः संस्कृतपण्डिताः श्रीलुइरेनू-महोदयाः प्रख्याता वैयाकरणाश्च पञ्चाशद्ग्रन्थानां प्रणेतारः, वेदवेदाङ्गव्याकरणालङ्कारादिक्षेत्रेषु शताधिकं विस्तृतशोधनिबन्धानां रचयितारः कस्य वा संस्कृतज्ञस्या परिचिताः । न खलु कश्चिदपरः प्रादुरासीदस्मिन् शतके श्रीलुईरेनू महोदयेभ्यो गरीयस्तरो वेदशास्त्रनिष्णातः, पाणिनिव्याकरणदीष्णो वा पण्डितः शोधकार्यधिया । नूनं चेखिद्यतेऽस्माकं चेतः यद् भारतीयाः संस्कृत-विद्वांसः एतेषां शोध-ग्रन्थ-रत्नानि न परिचिन्वन्तीति । नातिचिरं दिवंगतेभ्य एभ्यो गुरुवरेण्येभ्यः श्रद्धाञ्जलिसमर्पणैकधिया एतेषां प्रधानग्रन्थानां वैशिष्ट्यं दिङ्मात्रमुदाहरामि ।

अहो नु खलु भोः किमिति आश्चर्यमावहति चेतः यत् विद्यमानायामपि परः शतेभ्यो वर्षेभ्यः पेरिसनगरे भारतीयविद्याविषयिण्यां विशालायां शोधसम्पत्तौ न खलु कोऽपि प्रामाणिकः संस्कृत - फ्रेन्चकोषग्रन्थः फ्रान्सदेशीयैः विद्वद्भिः प्रणीतः । फ्रान्सदेशीयाः प्राच्यविद्याविशारदा एकत महत्त्वपूर्णेषु साहित्यिकेषु शोधकार्येषु व्यापृता बभूवुः अपरतश्च षट्षष्ट्युत्तराष्टादशशततमेऽब्दे

(1866) एमिल बिर्नुफमहोदयैः विनिर्मितेन (Dictionaire Classique Sanskrit Francais i. e. Classical Sanskrit French Dictionary) इत्यात्मकेन कोष-ग्रन्थेन सन्तुष्टा अभूवन् । अयं कोश इतः पर्यन्तं जर्मनभाषया आंग्लभाषया च प्रकाशितानां वरेण्यानां संस्कृतकोशानां प्रकाशनानन्तरं दुर्गतः परिक्षीणो गतव्यवहारोऽनुचितश्चासीत् । द्वात्रिंशदुत्तरैकोनविंशतिशततमेऽब्दे (1932) श्रीरेनूमहोदयाः स्वकीयं संस्कृत फ्रेन्चकोशं विरचय्य फ्रान्सदेशीयायां भारतीय-विद्या-परम्परायाममुमभावं परिपूरयामासुः। अष्टात्रिंशदुत्तरैकोनविंशतिशततमेऽब्दे (1938) श्रीरेनू-महोदयाः सम्पूर्णायाः ऋग्वेदसंहितायाः फ्रेन्चभाषया अनुवादात्मकमत्यन्तमेव महत्त्वपूर्णं प्रचुरयशः-प्रेप्सु-शोधकार्यं समारेभिरे । अनेकवर्षपर्यन्तं महाभागोऽयमात्मानं यागविधि-सम्बद्धानां पारिभाषिकाणां वैदिकानां शब्दानां स्वाध्याये विवादास्पदमहत्त्वपूर्ण-वैदिकशब्दांश्चाधिकृत्य टिप्पणीनिर्माणकार्ये न्ययुंक्त । गरीयः खल्विदं शोधकार्यं (Etudes Vediques et Paninienes i.e. Vedic & Paninian Studies) इति नामकेन ग्रन्थेन प्रकाश्यमानमासीत्, यस्य च ग्रन्थरत्नस्य निर्गमिता भागानां विंशतिः । श्रीरेनूमहोदयानामयं वेदविषयकः शोधव्यवच्छेदः सुस्पष्टमुद्घोषयति यन्नाद्यावधि ऋग्वेदमधिगन्तुं कोऽपि विशिष्टः प्रयत्नः समजाघटीत् । नेदं तत्पूर्वाचार्याणां फ्रेन्चजर्मनदेशीयानां वेदविद्यापारंगतानां विदुषां शोधग्रन्थानां पुनः पर्यालोचनमात्रं, न च प्रकारान्तरेण पूर्वपरिचितानां सिद्धान्तानां पुनः संस्थापनमात्रमपि तु वस्तुत ऋग्वेदस्य विधिसूक्तानां साक्षात् वैदिकसंस्कृतात् फ्रेन्चभाषानुवादः । देहावसानात्पूर्वमप्ययमस्मिन्नेव कर्मणि समापृत आसीदिति हन्त अन्यव्यक्तिरिक्त एव कोऽपि विशिष्टः प्रेमा ।

सप्तचत्वारिंशदुत्तरैकोनविंशतिशततमेऽब्दे (1947) श्रीरेनूमहोदयाः श्रीजां-फिलिओजा-श्रीओलिविएरलाकोम्ब-श्रीपियर-मैल-महोदयानां साहाय्येन भारतीयविद्यानां सार-संग्रहरूपेण L. Inde Classique नामकस्य ग्रन्थस्य प्रथमं भागं प्रकटय्य, द्वितीयं भागं षड्वर्षानन्तरं प्राकाशयन् । फ्रान्सदेशीयानां भारतीयविद्याविदामयं संस्कृतसाहित्यस्येतिहासग्रन्थः सर्वानपि पूर्वप्रकाशितानितिहास-ग्रन्थानतिक्रम्य शीर्षण्यमवाप । श्रीरेनूमहोदयानां ग्रन्थेषु कांश्चन विशिष्टान् ग्रन्थमणीन् निर्दिदर्शयिषामि ।

### (१) फ्रेन्चभाषायामनूदिताः संस्कृतग्रन्थाः

(क) महाकविकालिदासप्रणीतो रघुवंशः । (1927)

(ख) बृहत्कथाश्लोक - संग्रहः । (1929)
(ग) राजशेखर-प्रणीता काव्यमीमांसा । (1946)
(घ) ईश–केन–कठोपनिषदः । (1943)

**(२) पाणिनेः व्याकरणशास्त्रे फ्रेन्चभाषया निर्मिता ग्रन्थाः**

(क) Structure in Sanskrit Grammar 1936
(ख) Sanskrit Grammar 2 Vols. 1930
(ग) दुर्घटवृत्ति of शरणदेव
(घ) Elements of Sanskrit Grammar 1946
(ङ) The Grammar of Pāṇini
(च) काशिकावृत्तिः
(छ) अष्टाध्यायी of Pāṇini

**(३) वैदिकसाहित्ये फ्रेन्चभाषया शोधग्रन्थाः**

(क) The Value of Perfect in Vedic Hymns (1925)
(ख) Vedic Bibliography (1931)
(ग) Vedic Index (1935)
(घ) The Hymns and Prayers of the Vedas (1938)
(ङ) Vedic Vocabulary
(च) Etudes Vediques et Paniniens
(छ) Les Ecoles Vediques

**(४) वैदिकभाषाविज्ञानक्षेत्रे**

(क) वृत्र et वृत्रघ्न A Study of Indo-Iranian Mythology (1934)

**(५) धर्मेतिहास-संस्कृतिक्षेत्रे**

(क) L, Inde Classique, Vols 2 1947-1953
(ख) The Religious Poetry of Ancient India (1942)
(ग) Sanskrit and Culture (1950)
(घ) The Civilisation of Ancient India
(ङ) Hinduism.

इदानीन्तनेऽस्मिन् समये श्रीरेनूमहोदया अष्टाध्याय्याः सुप्रसिद्धां संस्कृत-टीकां काशिकावृत्तिमाश्रित्य शोधपरायणा आसन् । संस्कृतव्याकरण-शास्त्रक्षेत्रे गरीयः खल्विदं सटिप्पण फ्रेन्चभाषयानुवादकार्यं जापान-देशीये क्योटो-विश्व-विद्यालये संस्कृतप्राध्यापकानां श्रीयूटाकाओजिहारामहोदयानां साहचर्ये समारेभिरे। श्रीओजिहारामहोदया अपि नूनमनन्यसाधारणा वैय्याकरणाः । इमे खलु स्वकीयं पाण्डित्यं Bulletine of the Maison Franco-Japanaise of Tokyo इत्येतस्यां विशिष्टायां फ्रेन्चपत्रिकायां घनश्याम-प्रणीतस्य भाणस्य, मदन-सञ्जीवनस्य च प्रकाशनेन पूर्वमेव प्रतिष्ठापयामासुः । काशिकावृत्तेरिदं फ्रेन्च-भाषासंवलितं संस्करणं न केवलं सटिप्पणमनुवादमात्रं तु ग्रन्थरत्ने-ऽस्मिन् पदमंजर्याः, न्यासस्य, व्याकरणमहाभाष्यस्य च प्राचुर्येणाध्ययनं समाकलितमास्ते । ग्रन्थस्यास्य केवलं द्वावेव भागौ Ecole Francaise d' Extreme Orient' इत्यस्यां ग्रन्थमालायां प्रकाशितौ स्तः । श्रीरेनूमहोद-यानां देहावसानानन्तरं फ्रेन्चभाषया स्वोपज्ञभाष्यपुरस्सरं पाणिनेरष्टाध्यायी द्वाभ्यां भागाभ्यां पूर्वस्मिन्नेव सप्ताहे प्राकाश्यमुपागच्छदिति नूनं किं वा वक्तव्यम-स्माकमेतेषां संस्कृतानुरागित्व-विषये संस्कृतेनानुप्राणितजीवनविषये, प्रशस्त-पाण्डित्य-विषये, शोधकार्यविषये वा ।

अपरे सुप्रसिद्धाः वयोवृद्धाः संस्कृतपण्डिताः पूर्वं लील - विश्वविद्यालये ( Lile ), साम्प्रतं सोरबोनविश्वविद्यालये प्राच्यप्रतीच्यदर्शन-शास्त्रयोः प्राध्यापकाग्रेसरा अस्मद्गुरुचरणाः श्रीओलिविएरलाकोम्बमहोदयाः केषां वा संस्कृतज्ञानां दार्शनिकानामपरिचिताः । एतेषां प्रकाशितेष्वनेकेषु Comparative Study of Sankara and Rāmānuja, श्रीरामानुजाचार्य प्रणीतस्य श्रीभाष्यस्य च फ्रेन्चभाषानुवादः प्राधान्यमवगाहेते ।

मूलतश्चिकित्साशास्त्रिणः ( Doctor of Medicine ) संस्कृतविद्यया वशीकृतान्तःकरणा महायशस्विनः श्रीजां-फिलिओजामहोदयाः 'कालेज द फ्रान्स' नामके सुप्रसिद्धे महाविद्यालये श्री ज्यूलब्लाक महोदयानां आसने समासीना भारतीयविद्याया वरेण्याः प्राध्यापकाः । सर्वतः प्रसर्पन्त्या नवनवोन्मेषशालिन्या प्रतिभया विद्यायाः नानाविधेषु क्षेत्रेषु कृताधिकारा ग्रीक - लैटिन - जर्मन - फ्रेन्च - बंगाली - मराठी - तामिल - तेलेगु - कन्नड - तिब्बती - ख्मेर - इण्डो-नेशियन प्रभृति प्रायशो विजानन्ति भाषाणां त्रिंशतिम् । एतेषां ग्रन्थेषु The Doctrine of Medicine, its Indian and Greek Parallels तथा च External Relations of India before Alexander, सुप्रसिद्धौ

स्तः । इमे खलु पाण्डुचेरीनगरेऽपि भारतीयविद्यायाः फ्रेन्चविद्यासंस्थाने (Institut Francais d' Indologie) निदेशकाः सन्तः प्रतिवर्षं त्रिचतुः भारतमागच्छन्ति । केवलं दशवर्षपूर्वं संस्थापितादस्मात् फ्रेन्चविद्यासंस्थानात् श्रीफिलियोजामहाभागानां तत्त्वावधाने प्रकाशिता विद्यते अत्यन्तमेव महत्त्वपूर्णशोधग्रन्थानां शैवागमशास्त्रस्य च मूलग्रन्थानां त्रिंशतिः । श्रीजां-फिलियोजा-महोदया बृहत्तर-भारतविषयक-शोधकार्यक्षेत्रेऽप्यनन्वया इन्डोनेशियामण्डले कम्बोडियादेशे च सुदूरफ्रेन्चविद्यासंस्थानस्य निदेशकाः सन्तः तत्रापि किञ्चित्कालपर्यन्तं प्रतिवर्षं निवसन्तो भारतभारतीं समुज्ज्वलयन्ति ।

एतेषां चिरञ्जीवाः पुत्राः श्रीपियरफिलियोजामहोदया अपि पितृतुल्यं बुद्धिवैभवं जन्मसिद्धाधिकाररूपेणाधिगत्य अल्पीयसापि वयसा ज्ञानवृद्धाः फ्रेन्चभाषया सटिप्पणमनूदितप्रकाशितप्रतापरुद्रीयाः त्रयोविंशतिवर्षायुष्काः पेरिस-विश्वविद्यालये श्रीरेनूमहोदयानां स्थाने संस्कृतप्राध्यापकाः संवृत्ताः साम्प्रतं सम्पूर्णस्य व्याकरणमहाभाष्यस्य फ्रेन्चभाषानुवादकार्ये बद्धपरिकराः ।

वेदेषु ब्राह्मणग्रन्थेषु च कृतभूरिश्रमाः श्रीमिनारमहोदयाः (A. Minard) पूर्वं लियोंविश्वविद्यालये (Lyon), साम्प्रतं पेरिसविश्वविद्यालये संस्कृतप्राध्यापकाः स्वकीये A study of the 'शतपथब्राह्मण' इत्यात्मकेन सुविख्यातेन पुस्तकेन लब्धप्रतिष्ठाः ।

अन्ततो न खलु यूनः पण्डितस्य श्रीसेकोररुएगमहोदयस्य स्मरणमन्तरा लेखोऽयं समाप्तिमश्नुयात् । परमलघुमञ्जूषायाः सफ्रेन्चभाषानुवादं प्रामाणिकसंस्करणसम्पादने संलग्ना भर्तृहरेर्वाक्यपदीयमधिकृत्य Linguistic Speculation in the वाक्यपदीय of भर्तृहरि' इति पुस्तकं सोरबोनविश्वविद्यालयग्रन्थमालायां प्राकाशयन् । नातिक्रान्ते कियतिचित्काले इमे हालैण्डदेशे लाइडनविश्वविद्यालये (Leiden) बौद्धदर्शनविभागाध्यक्षाः समजनिषत ।

# जर्मनी-इटेली-होलैण्डदेशेषु संस्कृताध्ययनम्

द्वितीयस्मिन् भाषणे जर्मनी-इटेली-होलैण्डदेशेषु संस्कृताध्ययनमधिकृत्य सूत्रप्रणाल्या भवतां पुरस्तात् किञ्चिद् वक्तुमिच्छामि। एतेषु देशेषु अद्यावधि विहितस्य संस्कृत-शोधकार्यजातस्य अत्रास्ति समाकलनमित्यभिधाय न खल्वहमात्मानं भवतो वा वञ्चयितुमिच्छामि, मम जर्मन-इटेलियन-डचभाषा-ज्ञानस्य नितरां परिमितत्वात् सर्वथा अशक्यमेतदिति कृत्वा केवलं प्राधान्येन तदपि सूत्रप्रणाल्या परिकलयितुमुपक्रमे।

## I

प्रथमं तावत् जर्मनदेशीये संस्कृताध्ययने प्रक्षिप्ते दृष्टिनिक्षेपे ज्ञायते यदस्मिन्देशे संस्कृताध्ययनपरम्परा एकोनविंशतिशतकस्य उषःकाल एव प्रावर्तत। जर्मनदेशे संस्कृताध्ययनाध्यापनपरम्परासंस्थापनात्मकं श्रेयः श्लेगलभ्रातरौ अधिजग्मतुः। श्रीफ्राइड्रिख-फान-श्लेगलमहोदयः (1802 तमेऽब्दे) पेरिसनगरे युद्धगृहीतात् कारागारस्थात् इंग्लैण्डदेशीयात् नौविद्याधिकारिणः श्रीअलेग्जेण्डर हेमिल्टनमहोदयात् समधीतसंस्कृतः अष्टोत्तराष्टादशशततमेऽब्दे (1808) भाषाविज्ञान-भारतीयधर्मदर्शनसम्बद्धञ्च स्वकीयं The Language and Wisdom of India इत्याख्यं पुस्तकं, महाभारतस्य, श्रीमद्भगवद्गीतायाः, रामायणस्य, मनुस्मृतेश्च केषांश्चनस्थलानां जर्मनभाषया अनुवादं प्रकाशितवान्। अस्याग्रजोऽपि संस्कृतपण्डितः भाषाविज्ञानविच्च श्रीआगस्टविल्हेल्म-फान श्लेगलमहोदयः (August Wilhelm Von Schlegel) अष्टादशोत्तराष्टादशशततमेऽब्दे बोनविश्वविद्यालये (Bonn) भारतीयविद्यायाः सर्वप्रथमः प्राध्यापकः सन् भाषा-विज्ञानक्षेत्रे On the Present Condition of Indian Philology इत्याख्ये पुस्तके संस्कृतसाहित्यस्य, भारतीयदर्शन शास्त्रस्य, भारतीयानां कविप्रवराणां कोमलकोमलाया रमणीयायाः कल्पनाशक्तेः असामान्यं महत्त्वं प्रत्यपादयत्। महाभागेनानेन बोननगरे एकं स्वकीयं संस्कृतमुद्रणालयं संस्थाप्य देवनाग-

रांक्षराणां वरीयस्त्वापादनैकधिया स्वयमेवाक्षरमिश्रककार्यं सम्पाद्य श्रीमद्-भगवद्गीताया लेटिनभाषया सानुवादं प्रामाणिकं संस्करणमुपन्यस्तम् ।

तदनन्तरं श्रीफाइड्रिख-रूकर्तमहोदया अनेकान् नलोपाख्यान-गीतगोविन्द-अमरुशतकप्रभृतीन् ग्रन्थान् जर्मन-भाषया अनूदितवन्तः । एतेषां संस्कृताध्यय-नानुरागविषये शृण्वन्तु भवन्त एतेषां जीवनविषयिणीमिमां विलक्षणां घट-नाम् । भगवत्या महालक्ष्म्याः कृपाकटाक्षविरहिता यथासंस्कृतपाठशालाच्छात्रं सर्वथा निर्धनाः श्रीसकर्तमहोदयाः श्रीविल्सनमहोदयानां तदानीं प्रकाशितं संस्कृतांग्लकोशं विक्रेतुमशक्नुवानाः स्वाध्ययनोपयोगार्थं सहस्रपृष्ठात्मकस्य सम्पूर्णस्य कोषस्य सूक्ष्माक्षरैः प्रतिलिपिमकार्षुः । श्रीसकर्तमहोदयानां कृते एतदपि सुप्रसिद्धमास्ते यदेभिः उपाध्यायमन्तरैव केवलं चतुर्भिरेव मासैः तामिलभाषा हृदयङ्गमिता । एते प्रायशो वशीकृतनिखिलप्राच्यभाषारमणीकाः कथ्यन्ते ।

अपरे हि नाम एतादृशा एव अनन्यसाधारणधिषणाः बर्लिनविश्वविद्या-लयस्य संस्थापकाः, जर्मन देशस्य शिक्षा-मन्त्रिणः, राजनीति निपुणाः अपि भाषा-विज्ञान-भारतीय-दर्शनशास्त्रप्रवीणाः, श्रीविल्हेम-फोनहम्बोल्ट-महोदया अपि उपाध्यायमन्तरैव संस्कृतभाषां प्रपठ्य संस्कृतव्याकरणशास्त्रक्षेत्रे महत्त्वपूर्णं योगदानमकार्षुः । बर्लिनप्रकादमीतः प्रकाशिते स्वकीये श्रीमद्भगवद्गीतायाः संस्करणे इमे सुस्पष्टमुद्घोषितवन्तः, यद्भगवद्गीता हि नाम अर्थगौरवधिया, भावानां सुस्पष्टेन विन्यासेन, शब्दानाञ्च संक्षिप्तेन राशिना, विश्वसाहित्ये सर्वोत्कृष्टं ग्रन्थरत्नम् । भारतीयविद्यायाः सुहृत्प्रवरोऽयं श्रीहम्बोल्टमहोदयः जर्मनदेशस्य प्रायः प्रत्येकं विश्वविद्यालये संस्कृतप्राध्यापकासनं प्रतिष्ठापयामास ।

अस्मिन् प्रसंगे समन्तात् विश्रुतकीर्तेः लोकप्रियस्य जर्मनदार्शनिकस्य श्रीशोपनहावरमहोदयस्य ( Arthur Shoppenhauer ) विषयेऽप्यस्ति किञ्चित्विजिज्ञसितव्यम् । उपनिषदां दर्शनस्य भारतीयधर्मस्य च परमप्रशंस-कोऽप्ययं कदाचिदपि संस्कृतं पठितुं स्वकीयं मनः न प्रावर्तयत् । उपनिषदां दर्शनञ्चायं दाराशिकोह-महोदयेन पर्शियनभाषया अनूदितानामुपनिषदां लेटिन-भाषया कृतानुवादेन अबोधि । तदानीन्तने समये यदा बौद्धधर्मः यूरोपमण्डले अज्ञातप्राय एवासीत्, तदा श्रीशोपनहावरमहोदयः स्वात्मानं बोधिसत्त्वरूपेण समुदघोषयत् स्वकीये स्वाध्यायकक्षे चायं एकामनिन्द्यसुन्दरीं शुद्धसुवर्णपरि-पुटितां भगवतो बुद्धस्य तिब्बतीं प्रतिमां निवेशयामास ।

पेरिसविश्वविद्यालयीयैः महायशस्कैः भारतीयविद्याविद्भिः श्रीओजेन्-

त्रिर्नुकमताभागैः केवलं त्रयोविंशतिवर्षात्मकेऽप्यायुषि अन्तःप्रच्छन्न-सुरसरस्वती-समाराधनमस्कारवन्तः श्रीमैक्समूलरमहोदया ऋग्वेदाध्ययने वृता दीक्षिताश्च। एवं पेरिसविश्वविद्यालयालङ्कारऋग्वेदवेदाङ्गदृष्टय इमे सायणभाष्यसवलिता सम्पूर्णां ऋग्वेदसंहिता वैज्ञानिकया पद्धत्या सम्पादयितुं बद्धपरिकरा बभूवुः। पञ्चविंशतिवर्षानन्त ( 1849 - 74 ) रात्रिदिवं वेदाध्ययनैकमानसाः श्रीमन्त मैक्समूलरमहोदया 'ईस्ट–इण्डिया–कम्पनीत उपलब्धप्रकाशनव्यवस्थाकाः ऋग्वेदमलञ्चक्रिरे। निगमागमपारावारीणोऽय Sacred Books of the East इत्यात्मिकायां ग्रन्थमालाया पञ्चाशद् ग्रन्थान् सम्पाद्य अमर्त्यभावं भेजे। तुलनात्मकधर्मशास्त्रस्याध्यापनार्थमिमे जर्मनदेशे पितामहाः कथ्यन्ते।

जर्मनदेशीयाना संस्कृतपण्डिताना विरचितेषु ग्रन्थेषु श्रीबोटलिंगराथ-महोदयाभ्यां त्रयोविंशतिवर्षपरिमिते सुदीर्घे काले (1852 - 1875) सप्तसु भागेषु दशसहस्रपृष्ठात्मकः संस्कृतजर्मनकोषोऽन्यतम प्रधानश्चेति दृढं प्रतिपद्यते चेतः। वैदिकभाषाविज्ञानक्षेत्रे अनयोः द्वयोः पण्डितयोरय श्रद्धाजलिः सर्वदैव सादर संस्मरिष्यते।

एकोनविंशतिशतकस्य उत्तरार्धे, विंशतिशतकस्य च पूर्वार्धे यूरोपमण्डले वेदाध्ययन ममेषां भारतीयविद्याविदां विदुषामाकर्षणकेन्द्रमासीत्। अस्मिन्काले फ्रेन्चसंस्कृत–पण्डितानामपेक्षया जर्मनसंस्कृत–पण्डितानामपि योगदान कथञ्चिदपि न्यूनतां नावजगाहे। यथा हि, ऋग्वेदसंहिताया ऐतरेयब्राह्मणस्य च श्री आफरेच्टमहोदयेन संपादिते जर्मनभाषामये संस्करणे, माध्यमिकविद्यालये गणितस्य प्राध्यापकेन श्रीग्रासमानमहोदयेन जर्मनभाषया प्रणीत ऋग्वेदस्यानुवाद ऋग्वेदकोशश्च (1872), श्रीबेन्फे-राथमहोदयाभ्यां सामाथर्ववेदयोः प्रामाणिकसंस्करणविषयकः प्रयत्न, श्रीश्राडरमहोदयेन सम्पादिते मैत्रायणीकाठक-संहिते, किमधिकं--बहूनां संस्कृतशोधग्रन्थानां लेखकेन श्रीवेबरमहोदयेन सपादितौ तैत्तिरीयसंहिता-शुक्लयजुर्वेदौ च विशिष्य निदिदर्शयिषामि।

ततोऽर्वाचीनेऽपि काले भूयांसः खलु प्रादुर्बभूवुः संस्कृतज्ञा जर्मनदेशे, येषां मेधया विहितविताने मण्डपे समधिक विजहार भगवती देववाणी वेदवाणी। वैदिकविधीनामभिनिविष्टः पण्डितः श्रीहिलब्रांण्टमहोदयः Vedic Mythology इत्यस्य त्रीन् भागान्, वैदिक–पालिभाषाविज्ञानशास्त्री श्रीओल्डनवर्गमहोदयः द्वाभ्या भागाभ्यां ऋग्वेदसंहितायां जर्मनभाषानुवादं, विनयपिटकस्य प्रामाणिक संस्करणं, Religion of the Veda इत्याख्यं ग्रन्थरत्नं, बहूंश्च महत्त्वपूर्णान् निबन्धान् प्रकाश्य बौद्धसाहित्यमध्येतुमाधार-

भित्ति विनिर्ममे । श्रीगेल्डनरमहोदय ऋग्वेदावेस्तयो तुलनात्मकेनाध्ययनेन हार्वर्ड-ओरिएन्टलग्रन्थमालायां त्रिभिर्भागैः ऋग्वेदस्य जर्मनभाषानुवादं प्रकाशितवन्तः । महाभागेनानेन पिशलमहोदयस्य साहचर्ये वेदमधिकृत्य पौनःपुन्येन महता ग्रन्थराशिना शोधकार्यमकारि ।

जर्मन-देशीयानां संस्कृतज्ञानां चाइनीजतुर्किस्तानमण्डलस्य मरुस्थले सम्पादिताया यात्राया विषयेऽपि किञ्चिद् वक्तुं कामये । यतः खलु सहस्रशो हस्तलिखिता ग्रन्थाः सम्प्राप्ताः । ये च अद्यापि बर्लिनविश्वविद्यालये संरक्षिताः सन्ति । अस्मादेव हस्तलिखितग्रन्थसंग्रहाद् बह्वोऽज्ञाता विस्मृताश्च बौद्ध-संस्कृतग्रन्थाः प्राकाश्यमुपाजग्मुः । उदाहरणरूपेण श्रीलूडर्समहोदयेन अन्विष्टानि अश्वघोष–प्रणीतानि नाटकानि ।

महतः प्रमोदस्यायं विषयो यदिदानीं जर्मनदेशे बर्लिन-गार्टिगन-बोन-म्यूनिख-लाइप्जेक-हाइडलबर्ग-प्रभृतिषु दशाधिकेषु विश्वविद्यालयेषु भारतीय-विद्यायाः प्राध्यापकाग्रेसरा विद्यन्ते । यद्यपि द्वितीयमहायुद्धानन्तरं न खलु जर्मन-देशीयेषु विद्वत्सु तादृशः संस्कृतानुरागः अवलोक्यते, न च तादृशी परम्परा नयनगोचरतामागच्छति, अद्यत्वे तेषां आधुनिकभारतविषयानुरागित्वात् बौद्ध-साहित्यानुसन्धान-परत्वाद्वा, तथाप्यवलोक्यतामेतेषां विद्यायामेकान्तानुरागः । बौद्धसंस्कृतसाहित्यक्षेत्रे महापरिनिर्वाणसूत्रप्रभृतीनां बहूनां ग्रन्थानां सम्पादकाः श्रीवाल्डस्मिटमहोदया गार्टिन्गनविश्वविद्यालये भारतीयविद्यायाः प्राध्यापका-ग्रेसराः स्वकीयं पुस्तकालयं गृहादिकञ्च सर्वस्वं विश्वविद्यालयाय समर्प्य केवलं वेतनेनैव स्वकीयं जीवनं यापयन्तः सुरसरस्वतीमुपासते ।

द्वितीयमहायुद्धावसरे यदा नाजीसाम्राज्याधिकारिणः यहूदिनं संस्कृतपण्डितं श्रीवाल्टररूबिनमहोदयं कारागारे आनेतुमितस्ततः अन्विष्यन्त आसन्, श्री रूबिनमहोदया टर्कीदेशे गुप्तरूपेण निवसन्तः स्वकीयं श्रीकृष्णविषयकं ग्रन्थरत्नं प्रकाशयामासुः । एवमनेकवर्षपर्यन्तं प्रच्छन्नरूपेण कृतनिवसतय इमे सम्प्रति बर्लिनविश्वविद्यालये संस्कृतविभागाध्यक्षाः कालिदासविषये स्वकीयं विशिष्टं स्थानं भजमानाः कौटिल्ये अर्थशास्त्रे विशिष्य स्निह्यन्ति ।

ट्यूबिन्जनविश्वविद्यालये तु परमवैज्ञानिका महावैयाकरणाः श्रीपालथीमे-महोदया भारतीयविद्याध्यापकाग्रेसरासनं समासीनाः । एते हि प्रयागनगरे चिरकालपर्यन्तं स्थित्वा पण्डितप्रवरेभ्यः श्रीकमलाकान्तशास्त्रि-महाभागेभ्यः वैयाकरणसिद्धान्तकौमुदीं, लघुशब्देन्दुशेखरं, परिभाषेन्दुशेखरं, परमलघुमंजूषाञ्च भारतीयपण्डितपरम्परादिशा समधीत्य नव्य-व्याकरणशास्त्रक्षेत्रे गृहीतदृष्टय

ऋग्वेदादिक्षेत्रे पाणिनिव्याकरणक्षेत्रे च नूनमनन्वयाः । न केवलं संस्कृतशोध-कार्यधीजुषः इमे, अपि तु संस्कृतभाषया भाषणेऽप्येतेषामस्ति अभूतपूर्वा शक्तिः प्रौढिश्च नातिचिरमेतेषां शिष्यप्रवरेण श्रीवेत्सलरमहोदयेन परिभाषाविषये एको विलक्षणो ग्रन्थः प्राणायि । यद्यपि श्रीपालथीमेमहोदयाना पञ्चत्रिंशद्वर्षपूर्वं प्रकाशिते 'Atri and Aryaman' इत्याख्ये ऋग्वेदावेस्तयोः तुलनात्मकेऽध्ययन-विषये विप्रतिपद्यन्ते विद्वासः, यथा हि फ्रान्सदेशीयाना श्रीद्यु मेजिलमहोदयानां कियन्तो वा न प्रादुरासन् निबन्धा ग्रन्थाश्चास्यां विचिकित्सायां—तथापि को हि नाम मंशयीत श्रीथीमेमहोदयानां पाण्डित्यं, कश्च नाटीकेत तेषां विद्यावैशिष्टयम् ।

## II

इटेलीदेशीया संस्कृताध्ययनपरम्परा न खलु फ्रेन्च-जर्मनपरम्परावत्प्रभूत-ग्रन्थराशिपरिमण्डितकलेवरा, तथापि वैदेशिकविद्यालयेषु साम्प्रतं विशिष्टपदा-वगाहित्वात् दिङ्मात्रमुदाहरामि ।

षोडशशतकस्य अन्तिमे भागे (1583) इटेलीदेशीयः श्री फ्लोरेन्टाइन-फिलिप्पो सासेत्तीमहोदयः अध्वनीनरूपेण भारतमागत्य पञ्चवर्षानन्तरं गोवा-प्रदेश एव दिवं जगाम । अयं खलु भारतीयायुर्वेदशास्त्रे, ज्यौतिषशास्त्रे, भारतीयाचारविचारपरम्परायामतीव अनुरक्त आसीत् । अनेन संस्कृतभाषाया इटेलियनभाषया सह परं साम्य निरधारि । एवञ्च इटेलीदेशे भारत-यूरो-पीयभाषाविज्ञान - परम्पराया आधारशिला प्रतिष्ठापिता ।

सप्तदशशतकस्य समारम्भ एव श्रीगिआकोमो फेनीसियोमहोदयः (Giacomo Fenicio) स्वकीयेन Libro do Seita dos Indos Orientales नामकेन पुस्तकेन पुराणानामाधारेण भारतीयां पौराणिकीं परम्परां इटेलीदेशे परिचायितवान् । श्रीफेनीसिओमहोदयोऽपि भारतवर्षे कोचीनप्रदेशे, द्वात्रिंशदुत्तरषोडशशततमेऽब्दे (1632) दिवं गतः । सप्तदशशतकस्य अन्तिमे भागे (1693 - 98) इटेलीदेशीयः श्रीगिओवान्नीफरान्सेस्को-गेमेली-कारेरीमहोदयः (Giovanni Franceso-Gemelli-Careri) विश्वभ्रमणाय निर्जगाम । पञ्चवर्षमितायां स्वकीयायां ससारयात्रायामनेन सप्तसु भागेषु एकं महत्त्व-पूर्णं विश्वसंस्कृतिसाहित्ययोः परिचयात्मकं पुस्तकं निरमायि । एतेषां सप्त-भागानां एको भारतीयसंस्कृतिसाहित्यसम्बद्ध आसीत् । ग्रन्थस्य शीर्षकमासीत्

Giro Dil Mando. इटेलीदेशीयानां अध्वनीनानामयं साहित्यकार्य-भारः गच्छति काले ईसाईधर्मप्रचारकोपदेशकैः प्रचालिता । वस्तुतः ईटेलीदेशे तुलनात्मकभाषाविज्ञानशास्त्रस्य संस्थापका ईसाईधर्मप्रचारका एव समभवन् । अस्मिन् प्रसंगे अहं श्री सेबर्तो-द-नोब्लिलीमहोदयमुदाजिहीर्षामि, यः खलु चत्वारिंशद्वर्षपर्यन्तं (1605–46) स्वात्मानं बौद्धसाहित्यस्य यथार्थस्वरूपान्वेषणे न्ययुङ्क्त । धृतकाषायाम्बरोऽयं विशुद्धरूपेण शाकाहारी सन् बौद्धसाहित्य-मनुसंदधे ।

अष्टादशशतकस्य उत्तरार्धे श्रीफरान्सिसेश्रानमार्को-देल्ला-तोम्बोमहोदयः (Francisean Marco Della Tombo) भारतीयदर्शनशास्त्रस्य षड्दर्श-नानां संक्षिप्तं विवरणं इटेलियनभाषया उपनिबबन्ध । अस्मिन्नेव समये श्रीपरकोते-अमादुज्जो-कारपानी-जर्मानोमहोदयाः स्वात्मानं बौद्धसाहित्यानुसन्धान-कर्मणि दीक्षयामासुः ।

अनेन इटेलीदेशीयानामध्वनीनानामीईसाईधर्मप्रचारकोपदेशकानां नैरन्तर्येण प्रयासक्रमेण रोमनगरे Instituto di Propoganda नामकम् इटेलियनविद्यासस्थानं प्रादुर्बभूव । अस्माद्विद्यासंस्थानात् अनेकः संस्कृत-पालि व्याकरणशास्त्रविषयको ग्रन्थः, बहवश्च कोषग्रन्थाः प्राकाश्यमुपगताः । एतेषां ग्रन्थानां Alphabetum Brahmani Cum Semindostanum Universitatis Kasi इत्यात्मकं पुस्तकं विशेष निर्देशमर्हति ।

अनेन पर्यालोचनेन सर्वथा सुस्पष्टं संपद्यते यच्चिरकालं यावत् इटेलीदेशे संस्कृतानुसन्धानपरम्पराया यथाविधि वैज्ञानिकः क्रमः नैव दृढः सञ्जातः । वस्तुतः अयं क्रम एकोनविंशतिशतकस्य मध्य एव समुन्मिमेष, यदा श्री गास्पेरोगोरेसिओमहोदयाः (Gaspero Gorresio) पेरिसविश्वविद्यालये श्रीओजेन-बिर्नुफ-महोदयेभ्यः संस्कृतमधीत्य रामायणस्य प्रामाणिक संस्करणं प्रकाशयामासुः ।

एतदनन्तरमेव षट्पञ्चाशदुत्तराष्टादशशततमेऽब्दे (1856) श्रीगिओवान्नी फ्लेचिआमहोदय उराध्यायं वि ैत्र अधीतसंस्कृतः त्युरेंविश्वविद्यालये (Turin) प्रधानसंस्कृताध्यापकः सन् वैज्ञानिकपद्धत्या इटेलियनभाषया संस्कृतव्याकरणं प्रकाशितवान् । तत एव फ्लोरेन्सनगरं प्राच्यविद्यानुसन्धानार्थं विशिष्टं केन्द्रं समजनि । श्रीआन्जेलो-द-गुबर्नातिसमहोदयः (Angelo de Gubernatis) भारतीयान् हस्तलिखितग्रन्थान् संगृह्य सम्पादितवान्, भूयोभूयश्च वेदानां विषये स्वकीयान निबन्धानुपस्थापयामास । एवमेव श्रीफरान्सेस्कोलोरेन्जो

पुल्लेमहोदयः मूलतः भाषाविज्ञानशास्त्री जैनसाहित्यमध्यैष्ट, तथा च श्रीवार्लो प्युनीमहोदयः (Wailo Puini) भारतीयचाइनीज-तिब्बती - मंगोल-साहित्यप्रमाणान्वेषणपूर्वक बौद्धसाहित्यं ममन्थ। अपरे सुप्रसिद्धाः श्रीएमिलिओ तेजीमहोदया अनेकस्याः प्राच्यभाषाया वेत्तारः भूयसः लेखान् निर्ममिरे।

महाभारतस्य केषाचित्स्थलानां शूद्रकप्रणीतमृच्छकटिकस्य च इटेलियन-भाषयानुवादकाः श्रीगिआकोमो लिन्नाना महोदया नेपल्सविश्वविद्यालये प्राच्य-विद्याध्ययनस्य सुदृढा भित्ति सस्थापयामासुः। श्री एमिलिओ-पावोलिनीमहोदयाः संस्कृतात् फिनिशभाषापर्यन्तं, पालितः हृगेरियनभाषापर्यन्तं प्रसृतानुरागा अपि विशिष्य बौद्धसाहित्ये एव शोधकार्यतत्परा अभवन्। श्रीपावोलिनी-महोदयानां शिष्यप्रवरा मूलत. प्राकृतभाषाविशारदा महाराष्ट्रजैनसाहित्येऽपि नदीष्णा रामचरितमानसस्य भाषावैज्ञानिकमध्ययनं प्राकाशयन्। श्रीकार्लोफो-र्मिशीमहोदयैः इटेलियनभाषया अनूदिता रघुवश-बुद्धचरित-कादम्बरीप्रभृतयः ग्रन्थाः तेषां संस्कृतविद्याविषयकं पाण्डित्यमुद्घोषयन्ति।

साम्प्रतं इटेलीदेशे संस्कृतस्य मूर्धन्या विद्वांसः श्री टुच्ची महोदया रोमनगरे इटेलियनप्राच्यविद्यासंस्थाने विराजन्ते। सस्कृतविद्याया अनेके क्षेत्रे अबाधितगतिका भारते वर्षेऽपि असकृत् कृतयात्राका भारतीयेतिहासे दर्शनशास्त्रे, बौद्धन्यायदर्शने, बौद्धसाहित्ये, तिब्बतीकला-पुरातन्वविद्यायाश्च समं विचरन्ति। एतेषां तत्त्वावधाने प्रकाशिता बहवो बहुमूल्या ग्रन्था इटेली-देशे अद्यापि जीवन्तीं संस्कृतपरम्परां निर्दिशन्ति।

## III

सप्तदशे अष्टादशे च शतके हालैण्डदेशीया अध्वनीना व्यावसायिका हिन्दूनां जीवनचर्यामधिकृत्य स्वकीयाननुभवान् निबन्धेषु उपनिबबन्धुः। हिन्दूनामाचार-विचारान्, धार्मिकान् विश्वासान् सम्प्रदायांश्च, पुराणेतिहास-विषयांश्चाधिकृत्य भर्तृहरेः वैराग्यशतकनीतिशतकयोः डचभाषया सानुवादं प्रकाशनं एकपञ्चाशदुत्तरषोडशशततमेऽब्दे (1651) चक्रुः। अनयोर्द्वयोः शतकयोः हालैण्डदेशे कोऽपि डचदेशीयः विद्वान् संस्कृतभाषां न पर्यचिनोत्। केवलमपवादरूपेण श्रीहर्बर्ट-द-जागेमहोदया उदाहरणरूपेण निर्देष्टुं शक्यन्ते। एतेषां विविधविद्यानुरागः संस्कृतादारभ्य दक्षिणभारतीयासु भाषासु, गणितादारभ्य वनस्पतिशास्त्रे ज्यौतिषशास्त्रे च समन्तादनुस्यूत आसीत्। दैवदुर्विपाकात्

नोपलभ्यन्ते श्री-द-जागेमहोदयानां संस्कृतविद्याविषयका ग्रन्थाः ।

हालैण्डदेशे संस्कृतविद्याया यथाविधिवैज्ञानिकमध्ययनमन्यान्ययूरोपीयदेशानामपेक्षया किञ्चिद्विलम्बेन समारेभे । एकोनविंशतिशतकस्य पूर्वार्धे लाइडन विश्वविद्यालये (Leyden) श्रीहामाकरमहोदयाः (Hamaker) प्रथमं संस्कृतप्राध्यापकाग्रेसराः समवर्तन्त । तथापि वस्तुतः हालण्डदेशे संस्कृतपरम्परायाः प्रतिष्ठितिस्तम्भस्य आधारशिला श्रीहेण्ड्रिककर्नमहोदयैरेव (Kern) विन्यस्ता बभूव । इमे खलु मूलतः जर्मनिक-स्लाविक-इन्डोईरानियनभाषाणां पण्डिता आसन् । शनैः शनैः संस्कृतभाषायाः सौन्दर्येण, भावगांभीर्येण, तुलनात्मकभाषाविज्ञानशास्त्रधिया च शोधपथेन समाकृष्टमानसाः संस्कृतं पठितुमारेभिरे । सुप्रथितयशसां जर्मनदेशीयानां श्रीवेबरमहोदयानां प्रेरणया श्रीकर्नमहोदया वराहमिहिरप्रणीताया बृहत्संहिताया अनुवादकर्मणि प्रामाणिकसंस्करणसम्पादने च मनोभिनिवेशेन तत्पराः ।

अचिन्त्यः खलु कालस्य महिमा । अयं संस्कृतपण्डितः अनेकानेकवर्षपर्यन्तं ग्रीकभाषाध्यापने संलग्नः सन्, शनैः शनैः कालिदास-प्रणीतस्य अभिज्ञानशाकुन्तलस्य डचभाषया संस्करणमपि सम्पादयामास । इत्थं सुरसरस्वत्या अनिन्द्येन सौन्दर्येण वशीकृतमानसा वाराणस्यां क्वीन्सकालेजसंज्ञके संस्कृतमहाविद्यालये हि द्वित्रेषु संस्कृतमध्याप्य, पुनः स्वकीयं देशं परावर्त्य पंचषष्ट्युत्तराष्टदशशततमेऽब्दे (1865) लाइडनविश्वविद्यालये संस्कृताध्यापकाः समजनिषत । अस्मिन् विश्वविद्यालये एतेषां तत्त्वावधाने बहवो मेधाविनश्छात्राः सुप्रसिद्धाः संस्कृतपण्डिताः समजायन्त । पातञ्जलयोगसूत्रं, आर्यभटीयं, जातकमालां, सद्धर्मपुण्डरीकञ्चाधिकृत्य बहुकृतप्रकाशनकृत्याः प्राचीनजावाभाषा-साहित्ययोः महान्तं प्रभावं निरदीधरन् । हालैण्डदेशे लाइडननगरे पंचविंशदुत्तरैकोनविंशतिशततमाब्दे (1925) श्रीहेण्ड्रिककर्नमहाभागानां स्मृतौ भारतीय-इन्डोनेशियनपुरावृत्तशास्त्रमध्येतुं 'कर्नविद्यासंस्थानं' संस्थापितमभूत् । अस्मात् विद्यासंस्थानात् प्रकाशमागच्छन्ती भारतीयपुरातत्त्वविषयिणी वार्षिकी ग्रन्थसूची अस्मिन् क्षेत्रे शोधकार्यपरायणानां कृते नूनमनिवार्यमित्यत्र नास्ति मे काचिदपि विचिकित्सा ।

श्रीकर्नमहोदयानामुत्तराधिकारिणः संस्कृतपालिवाक्यरचनाविन्यासप्रवीणाः श्रीस्पेयरमहोदयाः (Spayer) अभूवन् । इमे खलु बौद्ध-साहित्यक्षेत्रे अवदानशतक-बुद्धचरित-सौन्दरनन्द-प्रभृतीननेकग्रन्थान् सम्पाद्य कथासरित्सागरे स्वकीयं पाण्डित्यप्रकर्षं प्रबोधयामासुः ।

अस्मिन्नेव काले यूट्रेख्तविश्वविद्यालये ( Utrecht ) श्रीकैलेण्ड-महोदयाः ( Caland ) ब्राह्मणग्रन्थेषु च स्वकीयं चिरस्मरणीयं योगदान-मकार्षुः। अस्मिन्नवसरे श्रीव्यूनिंगमहोदयैः कृतस्य ब्रह्मसूत्राणां शांकरभाष्यस्य, श्रीफोगलमहोदयैः विहितस्य च मृच्छकटिकस्य निर्देशं समीचीन संपत्स्यते, इत्यहं मन्ये। विंशशतकस्य अरुणोदये श्रीबालिनिमहोदयाः ( Ballini ) भारतीयधर्मविषये अधिगतप्रावीण्या उपमितिभवप्रपञ्च-कथामुपस्थापयामासुः।

लाइडनविश्वविद्यालये इण्डो-यूरोपियन-भाषाविज्ञानक्षेत्रे, इण्डो-ईरानियन-भाषाविज्ञानक्षेत्रे च सुप्रथिताः पण्डितवरेण्याः श्रीक्विपरमहोदयाः (Kuiper) साम्प्रतं गृहीतविश्रान्तयः। पाणिनिव्याकरणशास्त्रे, वैशेषिकदर्शने, भारतीय-संगीतशास्त्रे च लब्धयशसां श्रफेडेगानमहोदयानां स्थाने ( Fadegon ) साहित्यसुधापानरसिकाः श्रीशार्पेमहोदयाः प्राध्यापकत्वमासाद्य स्वायुषः चतुः-विंशतिवर्षात्मके काले महाकवेः बाणभट्टस्य कादम्बरीं डच-भाषया अनूद्य त्रिभिर्भागैः अनुक्रमणसूच्यादिकं विरचय्य, इदानीं महाकवेः कालिदासस्य कविताकामिन्यां बद्धानुरागा दृश्यन्ते। एवमेव ग्रोनिन्जनविश्वविद्यालये श्रीएन्सिन्कमहोदयाः (Ensink) भारतीयदर्शनशास्त्रविषयिणीं साधिकारां दृष्टिमुपलभ्य सांख्यशास्त्रे कृतकर्माणो विद्यन्ते।

सर्वोपरि विराजन्ते हालैण्डदेशे यूट्रेख्तविश्वविद्यालये जगद्विख्यातकीर्तयः श्रीखोण्डामहोदयाः ( G. Gonda ) संस्कृतविद्यायाः प्राच्यविद्याया भाषा-विज्ञानस्य च नानाविधेषु क्षेत्रेषु प्रायशः प्राकाशयन् ग्रन्थानां पञ्चविंशतिम्। एतेषां शोधनिबन्धानामपि स्यान्नाम त्रिशती इत्यहमनुमिनोमि। इमे खलु कदाचिज्जर्मनभाषया, कदाचित्फ्रेञ्चभाषया, कदाचिदांग्लभाषया कदाचिच्च डचभाषया स्वकीयग्रन्थकुसुमाञ्जलिं भगवत्यै सुरसरस्वत्यै समर्पयन्ति। न खल्वेतैर्विरचितानां पुस्तकानामेकस्यापि भाषान्तरेणानुवादः प्राकाशीति हन्त कथं वा पठ्यन्तामेतेषां सर्वेऽपि ग्रन्थाः, कथं वा विज्ञायन्तां सर्वा अपि शोधकार्ये व्यापृण्वाना विशिष्टा भाषाः।

एतेषां श्रीखोण्डामहाभागानां विषयनिर्वाचनक्षेत्रमपि अत्यन्तमेव सुवि-स्तृतमास्ते। **मूलतः वैदिकाः** इति परिस्फुटत्येतेषां ग्रन्थैः यथा हि—

1. Epithets in the Ṛgveda, 1959
2 Four Studies in the Language of the Veda 1959
3. The Vision of the Vedic Poets, 1963

4. Relations between Gods and Powers in the Veda.
5 Stylistic Repetition in the Ṛgveda 1959.
6. Aspectual Function of the Ṛgvedic Present and Aorist.

व्याकरण-शास्त्रे—

1. Na, in Old Indian Phrase
2. Remarks on Sanskrit Passive

अलंकार-शास्त्रे—

1. Remarks on Simile in Sanskrit

भाषाविज्ञाने—

1. Sanskrit in Indonesia 1946
2. Numerals 'One' and 'Two' in Ancient Indo-European Languages 1953
3. Grammatical Elements in Sanskrit Speech 1948
4. The Character of Indo-European Mood, with special Reference to Greek and Sanskrit 1950
5. Indian Ojas, Latin au gos and Indo European Houns 1952

धर्मशास्त्रे—

Aspects of Early Visnuism, 1954

अनेन पर्यालोचनेन स्फुटं प्रतिपद्यते चेतः यच्छ्रीखोण्डामहोदयाः स्वकीयेन प्रतिवर्षमुपचीयमानेन स्वाध्यायप्रकाशनक्रमेण सुष्ठु प्रमाणयन्ति 'स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम' इति

# इंग्लैण्डदेशे अमरीकादेशे च संस्कृताध्ययनम्

अधिविश्यमानाया अस्या व्याख्यानमालायाः तृतीयस्मिन् व्याख्याने इंगलैण्डदेशे अमरीकादेशे च संस्कृताध्ययनमधिकृत्य स्वकीयं वक्तव्यं समारभे ।

I

अष्टादशशतकस्य चतुर्थे चरणे (1773) बंगालप्रान्तस्य तदानीन्तना राज्यपालाः (Governor General) श्रीवारेन–हेस्टिंग्समहोदयाः संस्कृत-साहित्याध्ययनं प्रचोदयामासुः । महाभागेनानेन केषाचित् पण्डितानां साहाय्येन हिन्दुधर्ममवलम्ब्य विवादार्णवसेतुनामक स्वकीयं पुस्तकं संस्कृतेन प्राकाशि । अस्यैव ग्रन्थस्य कालान्तरे पारमीकभाषया, तस्याश्च आंग्लभाषया पुनरनुवादः समजनि । तथाप्येतत् स्मरणीयमास्ते यत् श्रीवारेन-हेस्टिंग्ज-महोदया न खलु मूलतः संस्कृतज्ञा आसन् । एतेषामन्तःकरणे तु केवलं संस्कृताध्ययने महाननुरागः प्रादुरासीदित्येवं केवलमभिमन्यामहे ।

एतद्देशीयायां संस्कृताध्ययनविषयिण्यां परम्परायां चार्ल्स विल्किन्स (Wilkins) महोदया एव प्रथमे विद्वांस आसन्, ये खलु वाराणस्यां केभ्यश्चन पण्डितप्रवरेभ्यः यथाविधि संस्कृतमधीत्य श्रीमद्भगवद्गीताया हितो-पदेशस्य च आंग्लभाषानुवादमुपन्यस्तवन्तः ।

वस्तुत इंगलैण्डदेशे संस्कृतशोधपरम्पराया वास्तविकी आधारशिला सरविलियमजोन्समहोदयैः संस्थापिता । तस्मिन् समये श्रीविलियमजोन्स-महोदयाः फोर्टविलियमनामके न्यायालये प्रधाना न्यायाधीशा आसन् । इमे खलु तदानीं (1783) कविकुलगुरोः कालिदासस्य अभिज्ञानशाकुन्तलाख्यं नाटकं आंग्लभाषया अनूद्य भारतीये साहित्ये समेषां यूरोपमण्डलीयानां साहित्यानुरागिणां विद्वज्जनानां वास्तविकं प्रेमाण प्रादुर्भावयामासुः । अभिज्ञानशाकुन्तलस्य अस्मा-दांग्लानुवादादेव जर्मनभाषानुवादः प्रादुर्बभूव । एतदन्तरमेव बहवः यूरोपदेशीया विद्वांसः भारतीयं साहित्यं मुक्तकण्ठं प्रशशंसुः । केनाप्यभाणि यत् कुत्रापि ग्रीसदेशीये रोमदेशीये वा साहित्ये अभिज्ञानशाकुन्तले चित्रितेन अत्युत्तमेन नारीसौन्दर्येण तुलितं ललनालावण्यं लोचनगोचरतां नागच्छति । गच्छति काले श्रीविलियमजोन्समहोदया बंगदेशे 'एशियाटिक सोसाइटी' नाम्नीं प्राच्य-

विद्यासभां संस्थापयामासुः। अस्याः परिषदस्तत्त्वावधाने धर्मशास्त्रे, व्याकरण-शास्त्रे, ज्यौतिषशास्त्रे, भारतीयगणितशास्त्रे, दर्शनशास्त्रे च बहूनां संस्कृत-ग्रन्थानां प्रामाणिकानि संस्करणानि प्राकाशन्त। अयमेव बंगदेशात् संस्कृत-हस्तलिखितग्रन्थानां विपुलं राशिं सावहितेनान्तःकरणेन संगृह्य इंग्लैण्डदेशं प्राहिणोत्। तत्र अद्यापि इमे हस्तलिखिताः संस्कृतग्रन्था 'इण्डिया आफिस लाइब्रेरी' नामके प्रशस्ते पुस्तकालये अमूल्यनिधिरूपेण संरक्षिताः सन्ति।

संस्कृतविद्याया अध्ययनार्थं आक्सफोर्डविश्वविद्यालयेऽपि बोडन-संस्कृतप्राध्यापकासनं द्वात्रिंशदुत्तराष्टादशशततमेऽब्दे (1832) प्रतिष्ठितं बभूव। अस्मिन्नासने भूयांसः सुप्रसिद्धा इंग्लैण्डदेशीयाः श्रीविल्सन-मोनियरविलियम्स-मैकडानल-थाम-सप्रभृतयः पण्डितोत्तंसा व्यराजन्त। एतेषां विरचिता ग्रन्था आंग्लभाषया प्रणीतत्वात् भारतीयैः संस्कृतज्ञैः सम्यक् ज्ञायन्ते इति कृत्वा न खलु तान्निर्देष्टुं प्रवर्तते मनः। श्री टामसमहोदयाः चिरकालपर्यन्तं 'इण्डिया–आफिस–लाइब्रेरी' नामके पुस्तकालयेऽपि पुस्तकालयाध्यक्षा अभूवन्। वेदविद्याक्षेत्रे, मध्यैशियादेशीयानां पूर्वोत्तरभारतीयानाञ्च भाषाणां क्षेत्रे, चाइनिज-तुर्किस्तानमण्डले च समुपलब्धानां बौद्धसंस्कृतस्य तिब्बतीग्रन्थानां क्षेत्रे चैतेषां चिरमविस्मरणीयः सन्देशः। आक्सफोर्डविश्वविद्यालये संस्कृतप्राध्यापकासनमिदानीं संस्कृतभाषाविज्ञान-शास्त्रिभिः श्रीबरोमहोदयैः समलंक्रियते।

केम्ब्रिजविश्वविद्यालये संस्कृताध्यापकपीठं ऊनविंशशतकस्य द्वितीयस्मिन् चरणे (1826) प्रतिष्ठितम्। तत्र च प्रथमे अध्यक्षाः साहित्यशास्त्रमर्मज्ञा महाकविबाणभट्टप्रणीतस्य हर्षचरितस्य स्वकीयेन प्राथमिकेन आंग्लभाषानुवादेन विश्रुतकीर्तयः श्रीकावेलमहोदया अभूवन्। यथाकालं इतिहासविशारदाभ्यां श्रीबेन्डल-रेप्सनमहोदयाभ्यां समलंकृतं पीठमिदं साम्प्रतं भाषाविज्ञानविदा इतिहासशास्त्रिणा बौद्धसाहित्यानुरागिणा च श्रीबेलीमहोदयेनालंक्रियते। यद्यपि सत्यमिदं यन्न खल्वेतेषां संस्कृतं प्रति विशेषगतिः। इमे तु प्राधान्येन मध्येशियामण्डलेऽधिगतानां संस्कृत-बौद्धग्रन्थानां अनुवादसम्पादन-कर्मणि दत्तचित्ताः, यदा कदा इतिहासक्षेत्रे च स्वकीयं पाण्डित्यं प्रकटयन्ति।

द्विषष्ट्युत्तराष्टादशशततमेऽब्दे (1862) श्रीजोनम्यूरमहोदया एडिनबरा-विश्वविद्यालये संस्कृतपीठं संस्थापयामासुः। इदमासनं विशिष्टैः इंग्लैण्ड-देशीयैः श्रीएग्लिंग-आफ्रेक्ट-कीथमहोदयैः सहचरितं सत् पंचपंचाशदुत्तरैकोनविंशतिशततमाब्दपर्यन्तं (ई० स० 1955 यावत्) संस्कृतविदुषा भाषाविज्ञान-शास्त्रिणा मुद्राविद्याविशारदेन च श्रीएलनमहोदयेन (Allen) अलंकृतं बभूव।

सप्तदशोत्तरैकोनविंशतिशततमेऽब्दे (1917) पंचमजार्जमहोपालानां प्रेरणया लण्डनविश्वविद्यालये School of Oriental & African Studies नामकं ब्रिटिशविद्यासंस्थानं प्रादुर्बभूव । तत्र च चिरकालं यावत् श्रीराल्फ-टर्नरमहोदयाः संस्कृतविभागाध्यक्षाः आसन् । एतेषां सुप्रसिद्धाः Comparative and Etymological Dictionary of Nepalese Language इत्यात्मको नेपालीभाषाया निर्वचनात्मकः कोषः कोषसाहित्य-परम्परायां स्वकीयममरभावमुद्घोषयति । इदानीमस्मिन् आसने गोत्रप्रवर-मञ्जरीसम्पादका युवानः ब्रिटिशसंस्कृतपण्डिताः श्रीब्राउमहोदयाः समासीनाः ।

मेन्चेस्टरविश्वविद्यालये संस्कृतप्राध्यापकाग्रेसरासने (1893–1926) श्रीराइसडेविडमहोदया, भारतीयधर्म-दर्शनशास्त्रपारगताः श्रीफर्क्युहरमहोदयाश्च सुरसरस्वतीमुपासांचक्रिरे ।

अन्ततोऽहं इंग्लैण्डदेशीयानां श्रीग्रिफिथमहोदयानां स्मरामि, यैः त्रिंशद्-वर्षपर्यन्तं वाराणस्यां 'क्वीन्सकालेज' संज्ञके महाविद्यालये स्थित्वा सर्वेषां वेदानां श्रीवाल्मीकिरामायणस्य च आंग्लभाषानुवादः प्राणायि । ब्रिटिश-संग्रहालयीयस्य च प्राच्यविद्याविभागस्य स्मरणमन्तरापि न खलु इंग्लैण्डदेशीय-संस्कृतविद्याविषयकशोधकार्यसम्बद्धं वक्तव्यमिदं समाप्तिमश्नुते, यतो हि बहवः पटीयांसः संस्कृतज्ञाः काले काले इत एव समुदभूवन् ।

## II

अमरीकादेशे संस्कृताध्ययनं सर्वप्रथमं येलविश्वविद्यालये ( Yale ) प्रादुर्बभूव । एकचत्वारिंशदुत्तराष्टादशशततमेऽब्दे (1841) श्रीएडवर्ड-सेलिस्बरी महोदया येल-विश्वविद्यालये संस्कृतअरबीभाषयोः एककालावच्छेदेन प्रथमे प्राध्यापकाग्रेसराः समजनिषत । श्रीसेलिस्बरीमहोदया अपि तदानीं पेरिस-विश्वविद्यालये सर्वतः सुप्रथितमहिम्नां श्रीओजेन-बिर्नुफमहोदयानां दिग्दिगन्त-प्रसर्पिणा ज्ञानगन्धराशिना बलादाकृष्टाः पेरिसनगरे समागत्य श्रीबिर्नुफमहो-दयानां चरणयोः संस्कृताध्ययनपरम्परायां विद्यादीक्षां जगृहुः । तदनन्तरं श्रीबिर्नुफमहोदयानां शिष्यप्रवरेभ्यः जर्मनदेशीयेभ्य. श्रीवापमहाभागेभ्यः बर्लिन-विश्वविद्यालये, श्रीलेसनमहोदयेभ्यश्च बोनविश्वविद्यालये स्वकीयं संस्कृतभाषा-विषयकं ज्ञानं अकुरितं पल्लवितं सर्वतः कुसुमितं विधाय येलविश्वविद्यालये संस्कृतप्राध्यापकासनमासीनाः । एतत्सर्वथा सत्यं यन्न खल्वनेन महाभागेन बहु-लिखितं प्रकाशितं वा, किन्तु एतत्तु सर्वथा सत्यं यत् संस्कृतमध्येतुं बहवो मेधाविनश्छात्राः अमरीकादेशे श्रीसेलिस्बरीमहाभागेभ्य एव स्वाध्ययप्रेरणामुप-

लेभिरे । अमरीकादेशीयानां संस्कृत-पण्डितानामन्यतमः विद्वत्तल्लजः श्रीह्विटने-महोदयः श्रीसेलिस्बरीमहोदयानामेव शिष्यप्रवर आसीत् । 'शिष्यप्रकर्षेण गुरोः प्रकर्षः' इति सत्यं चरितार्थता भजते आभाणकं श्रीसेलिस्बरीमहोदया-नामुदाहरणेन । यः कोऽप्येतेषां साहचर्यमन्वभवत्, स एव संस्कृतेऽनुरक्तः । एतेषामेव प्रयत्नेन प्रेरणया च बोस्टन-नगर-निवासिभिः कैश्चित् साहित्या-नुरागिभिः American Oriental Society नाम्नी प्राच्यविद्या-परिषद् संस्थापिता, यस्याश्च प्रथमः संयोजकमन्त्री श्रीसेलिस्बरीमहोदय एव समपद्यत । इयं 'अमेरिकन ओरियण्टल सोसाइटी' नाम्नी संस्थापरिषद् स्वकीयेन प्रभूततमधनराशिनैव हेतुना शनैः शनैः गच्छति काले अमरीका-देशीयानां संस्कृतज्ञानां शोधग्रन्थप्रकाशनार्थमत्यन्तमेव शक्तिशालिनी प्रमाणिता बभूव ।

श्रीसेलिस्बरीमहोदयानां शिष्यप्रवराः श्रीह्विटनेमहोदयाः चतुःपञ्चाश-दुत्तराष्टादशशततमेऽब्दे (1854) येलविश्वविद्यालये स्वगुरोः आसनमलंचक्रिरे । अथ च बहुकालपर्यन्तं तत्र संस्कृतभाषायाः तुलनात्मकभाषाविज्ञानशास्त्रस्य च प्राध्यापकाग्रेसराः सन्तः वस्तुत अमरीकादेशे संस्कृताध्ययनपरम्परायाः सुदृढां भित्तिं संस्थापयामासुः । श्रीह्विटनेमहोदया यद्यपि बर्लिन-विश्वविद्यालये श्रीवेबरमहोदयेभ्यः सम्यगधीतसंस्कृतविद्याका आसन् किन्तु भारतमागन्तुमेषा-मभिलाषः कदापि पूर्तिं नागादिति नूनं विचित्रं कालविलसितम् । वैदिका वैयाकरणाश्च इमे एकतः भट्टोजीदीक्षितप्रणीतायाः सिद्धान्तकौमुद्या अपरतश्च अथर्ववेदस्य गंभीराध्ययने आजीवं गृहीतव्रताः सुरसरस्वतीमुपासांचक्रिरे । एतेषां वैयाकरणत्वं Sanskrit Grammar इत्येतस्मिन् ग्रन्थे, वैदिकत्वञ्च वेदविषयकेषु ग्रन्थेषु साक्षात्कर्तुं शक्यते । तथा हि—

(1) An English Translation of the Atharvaveda
(2) Index Verborum of the Atharvaveda.
(3) The Atharvaveda Prātiśākhya.
(4) The Taittirīya Prātiśākhya

श्रीह्विटनेमहोदयानां स्थाने श्रीहाप्किन्समहोदयाः समाजग्मुः । पुराणे-तिहासयोः धर्मनीतिशास्त्रयोर्वा विशेषज्ञा अमी मानवधर्मशास्त्रं हृदये कौस्तु-भमणिमिव धारयामासुः । एतदेवावलम्ब्य—

(1) The Ordinances of Manu
(2) The Social and Military Position of the Ruling

Caste in Ancient India
(3) The Mutual Relations of the Four Castes according to the Mānavadharmaśāstra
इत्येतादृशान् धर्मेतिहाससम्बद्धान् ग्रन्थान् समये समये प्रकाशयामासुः

षड्विंशत्युत्तरैकोनविंशतिशततमेऽब्दे (1926) श्रीब्लूमफील्डमहोदयानां शिष्याः श्रीफ्रैंकलिन-इजर्टनमहोदया येलविश्वविद्यालये श्रीहापकिन्समहोदयानां स्थाने नियुक्ताः । वेदविद्यायां, मीमांसाशास्त्रे (मीमासान्यायप्रकाशस्य प्रकाशितांग्लानुवादाः) भाषाविज्ञानक्षेत्रे, बौद्धमिश्रितसंस्कृतक्षेत्रे च एतेषामास्ते महत्त्वपूर्णं योगदानम् । असकृद् भारतमागतानामेतेषां विशिष्टः ग्रन्थः Buddhist Hybrid Sanskrit इत्ययं कोषः ।

जानन्त्येव भवन्तः यत् अमरीकादेशे कुत्रापि प्रोफेसरपदनिमित्तं विज्ञप्तयो न प्रकाश्यन्ते, अपि तु कस्यापि देशस्य कोऽपि ख्यातनामा विशिष्टः पण्डितः आमन्त्र्यते । येलविश्वविद्यालयेऽपि श्रीइजर्टनमहोदयेषु विश्वविद्यालय-कार्यभारान्निवृत्तेषु गृहीतविश्रान्तिषु सत्सु पेरिसविश्वविद्यालयात् श्रीलुईरेनूमहोदया आमन्त्रिता आसन् श्रीरेनूमहोदयास्तु केवलं मासमेकं येलविश्वविद्यालये स्थित्वा पेरिसविश्वविद्यालयं प्रतिनिवर्तयामासुः । ततः जर्मनदेशीयाः प्रौढा वैदिका वैयाकरणाश्च श्रीपोल-थीमेमहोदया येलविश्वविद्यालये षड्वर्षपर्यन्तमतिष्ठिन् । एतेऽपि जर्मनदेशे ट्यूबिन्जनविश्वविद्यालये प्रत्यावर्तयन् । अधुना येलविश्वविद्यालये आस्ट्रियादेशीयाः संस्कृतपण्डिताः श्रीपोल-तेडेस्कोमहाभागाः संस्कृताध्यापकपदे विराजन्ते । संस्कृतप्राकृतभाषाक्षेत्रे भारतीय-पारसीक-भाषा-विज्ञानक्षेत्रे च एतेषामस्ति प्रचुरतमो ग्रन्थराशिः ।

बहूनामरीका-देशीयानां श्रीलेनमान - ब्लूमफील्ड - ह्रोप्किस - विलियम-जेक्सनप्रभृतीनां संस्कृतपण्डितानां संस्कृतपरम्परा जर्मनदेशीयेभ्यः संस्कृतोपाध्यायेभ्यः समुदियाय । षट्सप्तत्युत्तराष्टादशशततमेऽब्दे (1876) यदा जोन्स-हाप्किन्सविश्वविद्यालयः संस्थापितो बभूव, तदा सर्वप्रथमं श्रीह्विटनेमहोदयानां शिष्यप्रवरा वेदविद्यायां व्याकरणशास्त्रे च अद्वितीया आचार्याः श्रीलेनमान-महोदयाः संस्कृताध्यापकत्वेन वृताः । वर्षद्वयानन्तरमेव इमे हार्वर्डविश्वविद्यालयेन निमन्त्रिताः सन्तः हावर्डविश्वविद्यालये संस्कृतविभागस्य संस्कृताध्ययनपरम्परायाश्च संस्थापनार्थं समाजग्मुः । अस्मिन् विश्वविद्यालये तिष्ठतानेन ऋग्वेदे व्याकरणशास्त्रे च स्वकीयं पाण्डित्यं स्वाध्यायश्रमश्च समुद्घोषितः । तथाप्येतेषां वास्तविकी सुरसरस्वत्याः सपर्या तु Harvard Oriental

Series इत्येतस्या ग्रन्थमालायाः संस्थापकरूपेण प्रथमसंपादकरूपेण च सर्वदैव संस्मरिष्यते ।

श्रीलेनमानमहोदयानां कश्चित् संस्कृतमधीयानश्छात्रः श्रीहेनरीक्लर्कवारेननामा अतीव धनाढ्य आसीत् । गुरोः प्रेरणया अनेन विद्यार्थिशिष्येण गुरोराज्ञा सादरं परिपालनीयेति प्रतिपद्यमानेन हार्वर्ड-ओरिएण्टल-सीरीज' इत्याख्यायाः प्राच्यग्रन्थमालायाः सम्पादनार्थं प्रचुरतमः धनराशिः प्रादायि । अनेनैव राशिना प्रचचाल अस्या ग्रन्थमालायाः प्रकाशन-कार्यम् । इतः खलु प्रायशः चत्वारिंशदतीव महत्त्वपूर्णा ग्रन्थाः प्राकाश्यमुपाजग्मुः । न खलु अत्र प्रकाशितानां ग्रन्थरत्नानां नामानि परिजिगणयिषामि, यतो हि विदितचराण्येव भवेयुरेतानि सर्वेषां विदुषामित्यत्र सन्देहकणिकाया अप्यनुदयाच्चित्ते ।

सप्तविंशत्युत्तरैकोनविंशतिशततमेऽब्दे (1927) श्रीलेनमानमहोदयानां स्थाने भारतीयेतिहासशास्त्रिणः, बौद्धसंस्कृतविशारदा भारतीयगणितशास्त्रपारङ्गताश्च श्रीवाल्टर-ओजेन-क्लार्कमहोदयाः समागत्य सर्वेषां संस्कृतज्ञानां मनांसि प्रमोदयामासुः । साम्प्रतं अस्मिन्नासने समासीनाः श्रीइंगल्समहाभागा भारतीयदर्शनक्षेत्रे तत्रापि प्रायो नव्यन्यायक्षेत्रे, भारतीयकाव्यशास्त्रे च पारदर्शिनो विद्वांस इत्यहं सुदृढं विश्वसिमि । वाराणस्यां कलकत्तानगरे च प्राचीनपरम्परानुसारं नैयायिकप्रवरेभ्यः समधीतनव्यन्याया नव्यन्यायशास्त्रक्षेत्रे एकं अभूतपूर्वं Materials for the Study of Navya Nyāya Logic इति नामकं पुस्तकं प्राकाशयन् । यद्यपि अस्मिन् ग्रन्थे केवलं व्याप्तिपंचकस्य माथुरी-जागदीशी-गदाधरीटीकानां आंग्लभाषया सानुवादं सटिप्पणं सभूमिकमध्ययनमास्ते, तथापि लाक्षणिकन्यायेन संवलितः सन् काञ्चिदभिनवामेव दिशं निर्दिदेश ।

अष्टादशे शतके यदा संस्कृतं सर्वप्रथमं यूरोपमण्डले परिचितमभूत् तदा यूरोपदेशीयैः संस्कृतज्ञैः नव्यन्यायशास्त्रस्य ग्रन्थाः समाघ्राय पुस्तकालयस्य एकस्मिन् कोणे प्रक्षिप्ताः, तदानीं तेषु ग्रन्थेषु कथमपि प्रवेशमलभमानैः । किन्त्विदानीं पुनर्वैदेशिकानां पण्डितप्रवराणां दृश्यते तत्र महती प्रवृत्तिः । अद्यत्वे बहवो विशिष्टा वैदेशिकाः पण्डिता नव्यन्यायशास्त्रक्षेत्रे संलग्ना दृश्यन्ते । यथा हि, यूरोपमण्डले परंवृद्धा अशीतिवर्षायुष्का वियानाविश्वविद्यालयाद् गृहीतविश्रान्तयः श्रीफ्राउवाल्नरमहोदया भारतीयदर्शनशास्त्रस्य अद्वितीया व्याख्यातारः स्वकीयस्य भारतीयदर्शनेतिहासस्य अष्टमं भागं नव्यन्यायशास्त्रविषयकेण अध्ययनेन परिमण्डयन्ति । एतेषां शिष्याः

श्रीओबरहामरमहोदया अपि अस्मिन्नेव क्षेत्रे रात्रिंदिवं प्रयतन्ते ।

श्रीलेनमानमहोदयेषु हार्वर्डविश्वविद्यालये संस्कृतप्राध्यापकाग्रेसरत्वेन गतेषु सत्सु अशीत्युत्तराष्टादशशततमेऽब्दे (1880) श्रीह्विटनेमहोदयानामपरे उदीयमानाः शिष्याः श्रीमोरिस-ब्लूमफील्डमहोदया जोन्स - हाप्किन्सविश्वविद्यालये संस्कृताध्यापकाः समजनिषत । एभिः वेदेषु, जैनसाहित्ये, भाषाविज्ञानक्षेत्रे च बहवः ग्रन्था, भूयांसश्च निबन्धाः प्राकाशिषत । एतेषां Vedic Concordance नामको ग्रन्थः कदाचिदेव कस्यचिदज्ञातः । एतेषां स्थानं वेल्जियमदेशीया महाभारते ब्राह्मणग्रन्थेषु च कृतभूरिश्रमाः श्रीपोल-एमिल-द्यूमोंमहोदयाः समलंचक्रिरे ।

कोलम्बियाविश्वविद्यालये सस्कृतविभागाधिपतिना श्रीविलियमजेक्सनमहोदयेन इटालियनभाषाविज्ञानक्षेत्रे अनेकपुस्तकानि प्राणायिषत, किन्त्विमे केवलं श्रीहर्षप्रणीतप्रियदर्शिकयैव परिज्ञायन्ते, एतेषामुत्तराधिकारिणः श्रीग्रेमहोदया अपि साहित्यशास्त्रमर्मज्ञाः सुबन्धोः वासवदत्तामांग्लभाषया अनूद्य यशस्विनः संवृत्ताः ।

सप्तविंशत्युत्तरैकोनविंशतिशततमाब्दपर्यन्त (1927) शिकागोविश्वविद्यालये श्रीवाल्टरओजेन-क्लार्कमहोदयाः संस्कृतविभागाध्यक्षा आसन् । अधुना डचदेशीयाः संस्कृतपण्डिताः श्रीव्युएटनिनमहाभागा विराजन्ते । एतेषां सांख्यदर्शने भास्कराचार्ये च वैशिष्ट्यं सन्निधत्ते । एतेषां सरलसरला संस्कृतेन भाषणपद्धतिरपि बलान्मनो मोहयति । केलिफोर्नियाबर्कले-विश्वविद्यालये श्रीराइडर ( Ryder ) महोदया मृच्छकटिकं आंग्लभाषया अन्ववदन् । श्रीलेनमानमहोदयानामनेन शिष्यप्रवरेण बहूनां संस्कृतरूपकाणां गीतीनाञ्च आंग्लानुवाद उपन्यस्तः । इदानीमस्मिन् विश्वविद्यालये श्रीएमनोमहोदया वैदिकव्याकरणशास्त्रे द्राविडीषु भाषासु, संस्कृतकथाख्यायिका - नाटकादिषु च लब्धप्रतिष्ठा विद्वांसः । केलिफोर्निया-वर्कले विश्वविद्यालयीयायां ग्रन्थमालायां प्रायशः पंचविंशतिः बहुमूल्या ग्रन्थाः प्रकाशिता विद्यन्ते । अस्यां ग्रन्थमालायां न केवलं अमरीका-देशीयानां संस्कृतज्ञानां ग्रन्थाः अपि तु भारतीयानामपि, श्रीकृष्णमूर्तिमहोदयानां (Dravidian Verbs) प्रभृतयः ग्रन्थाः स्थानमलभन्त । द्राविडभाषाविज्ञानानुसन्धानक्षेत्रे नास्ति कोऽप्यपरः गरीयस्तरः विश्वविद्यालय इत्यहं मन्ये ।

त्रयोदशोत्तरैकोनविंशतिशततमेऽब्दे (1913) पेनसिल्वानिया-विश्वविद्यालये (Pennsylvania) संस्कृतप्राध्यापकासनं श्री फ्रेन्कलिन इजर्टनमहोदयैर-

लमकारि। इदानीं स्थानमिद श्री ब्लूमफील्डमहोदयानां सुप्रसिद्धैः शिष्यप्रवरैः श्रीनार्मनब्राऊनमहाभागैरलंक्रियते। असकृद्भारते वर्षे कृतयात्राणां वयोवृद्धानामेतेषां सम्पादितेषु ग्रन्थेषु सौन्दर्यलहरी वसन्त-विलासश्च सुप्रथितौ स्तः।

नातिचिरं अमरीकादेशे नैकत्र मिनिसोटा–मिशिगन–विसकाउन्सिन कोर्नेल-हवाई–सिस्यूकिस–टैक्सस–प्रभृतीषु विश्वविद्यालयेषु संस्कृताध्ययनस्य बीजमारोपितमास्ते। आशास्यते यदेतेषु विद्यासंस्थानेषु शनैः शनैः भारतीयाया विद्यायाः समुत्कर्षः स्वकीयेन महिम्ना, स्वकीयेन च शोधकार्यविषयकेण गरिम्णा अमरीकादेशीयानां विदुषां विद्यार्थिनाञ्च जीवनं संस्कृतानुरागेण अनुप्राणयिष्यते, इति ध्रुवोऽस्माकः प्रत्ययः इत्येव केवलं प्रतिपाद्य सर्वेभ्यः धन्यवादप्रदानपुरस्सरं विरमामि।

# कलचुरिकविर्मायुराजः

डा० वा० वि० मिराशी

विदितचरमेवैतिहासिकानां यत्प्राचीनभारते कलचुरिनामा राजवंशो महतीं ख्यातिमवाप। खिस्तीयषष्ठसप्तमशताब्द्योस्तस्य माहिष्मतीनाम्नी राजधान्यासीद्या राजशेखरेण स्वनाटके 'माहिष्मतीं कलचुरे कुलराजधानीम्' इत्याकारिकया रीत्या प्रशस्ता। तदनन्तरं पूर्वकालिक-चालुक्यानामुदयादूर्ध्वं कलचुरिपतिभिः जबलपुर-समीपवर्ति-त्रिपुरीनगरे राजधानी स्थापिता। तन्मध्यवर्तिनि समये तेषां मध्यभारते कालंजरदुर्गेऽपि कतिचित्कालं राजधान्यासीत्। तत्र राज्यं कुर्वाणो भीमटो नाम कलचुरिनृपतिर्नाटकपञ्चकं कृतवानिति सूक्तिमुक्तावल्यामुच्यते—

> कालञ्जरपतिश्चक्रे भीमटः पञ्चनाटकीम्।
> प्राप प्रबन्ध-राजत्वं तेषु स्वप्नदशाननम्॥

तेषु पञ्चनाटकेषु स्वप्नदशाननं नाम नाटकमतीव प्रथितमभूत्। दुर्भाग्यवशात् तदद्यावधि स्मृतिशेषावस्थायामेव वर्तते।

मायुराजो नामान्योऽपि कालञ्जरपतिः कलचुरिनृपतिरभूद्यद्विषये वयं तुलनयाधिकं जानीमः। सूक्तिमुक्तावल्यां राजशेखरस्येदं पद्यं संगृहीतं वर्तते

> मायुराजसमो नान्यो जज्ञे कलचुरिः कविः।
> उदन्वतः समुत्तस्थुः कति वा तुहिनांशवः॥

कलचुरि-राजवंशे बहवो नृपाः स्वकाव्यनिर्मित्या ख्यातिमीयुः किन्तु तेषु मायुराजः सर्वश्रेष्ठः। न कोऽप्यन्यस्तत्पदवीं प्राप्तुं शशाक। सागराद्बहूनि रत्नानि समुत्पन्नानि, किन्तु तेषु भगवान् शीतरश्मिरनन्यसाधारणः सर्वजननयनाह्लाददायकः। तथैव न कोऽप्यद्य यावत् स्वकाव्येन मायुराजसमः संजातः।

अस्य मायुराजस्य 'उदात्तराघवम्' नाम संस्कृतनाटकमतीव प्रथितमासीत्। दुर्भाग्यवशात्तदधुनाऽप्राप्यम्। किन्तु दशरूपके उद्धृतेभ्यस्तदीयश्लोकेभ्यस्तद्गुणगरिमानुमातुं शक्यते। 'उदात्तराघवम्' इति नाटकनाम्नस्तस्य संविधानकं रामचरित्रमासीदित्यनुमातुं सुशकम्। भगवतो रामचन्द्रस्य चरित-

मधिकृत्य परः शतैः कविभिः स्वकाव्यानि नाटकानि च विरचितानि । भासकवेः प्रतिमा, अभिषेकश्च, भवभूतेः 'महावीरचरितम्' 'उत्तररामचरितम्' च, राजशेखरस्य 'बालरामायणम्' मुरारेः 'अनर्घराघवम्' जयदेवस्य 'प्रसन्नराघवम्' इत्यादीनि सन्ति रामचरितविषयकाणि प्रथितानि नाटकानि । एतेषु तैस्तैर्नाटककर्तृभिर्भगवतो वाल्मीकि-रामायणे वर्णितं रामचरितं स्वनाटकसंविधानोचिततया क्वचित् परिवर्तितं दृश्यते ।

मायुराजेनापि तथैव कृतमित्यनुमातुं शक्यते । तत्र च रामचरितस्योदात्तीकरणमेव हेतुरासीदिति 'उदात्तराघवम्' इति नाटकनाम्ना स्फुटीभवति । यद्यपि भगवतो रामचन्द्रस्य चरितमलौकिकं सर्वजनवन्द्यं च तथापि तस्मिन्नपि सन्ति केचन प्रसङ्गा येषु काकस्य दोषैकदृष्टयाऽऽक्षेपः कर्तुं शक्यते । तथाहि भवभूतिना स्वीयोत्तररामचरिते लवोक्तौ कानिचित् सम्भवनीयदूषणानि सूचितानि-

वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु किं वर्ण्यते
सुन्दस्त्रीमथनेऽप्यकुण्ठयशसो लोके महान्तो हि ते ।
यानि त्रीण्यकुतोभयान्यपि पदान्यासन् खरायोधने
यद्वा कौशलमिन्द्रसूनु - निधने तत्राप्यभिज्ञो जनः ।।

किन्तु प्रधाननायकस्यैवं दूषणसूचने भवत्यौचित्यहानिरिति सुस्पष्टं प्रदर्शितं क्षेमेन्द्रेण स्वीयौचित्यविचारचर्चायाम् । मायुराजेन तु स्वनाटक-संविधाने वाल्मीकि-कथायां परिवर्तनं विधाय भगवतो रामचन्द्रस्य चरिते दोषस्य संभावनापि निरस्तेत्यधुना प्रदर्श्यते—

रामचरिते बहुभिः सूचितं दूषणं, यद्भवभूतिनाऽपि लवोक्तौ 'यद्वा कौशलमिन्द्रसूनुनिधने' इति लक्षीकृतं, वालिवधे वर्तते । वालिसुग्रीवयोर्युद्धे यदा रामः सुग्रीवं हीयमानमपश्यत्तदा स स्वीयेनाशीविषोपमेन शरेण वालिनं विव्याध । ततो वाली महीतले निपपात । तत्खलु धर्मयुद्धविरोध्यासीत् । तथा हि मनुना—'नायुध्यमानं पश्यन्तं न परेण समागतम्' नरो हन्यादित्युक्तम् । ततो वाली कोपाविष्टः सन् रामं जगर्हे ।

'हत्वा बाणेन काकुत्स्थ मामिहानपराधिनम् ।
किं वक्ष्यसि सतां मध्ये कर्म कृत्वा जुगुप्सितम् ।।
शठो नैकृतिकः क्षुद्रो मिथ्या प्रश्रितमानसः ।
कथं दशरथेन त्वं जातः पापो महात्मना ।।'

ततो रामेणैवमात्म-समर्थनं कृतम्—

'इक्ष्वाकूणामियं भूमिः सशैलवनकानना ।
मृगपक्षिमनुष्याणां निग्रहानुग्रहेष्वपि ॥
तां पालयति धर्मात्मा भरतः सत्यवानृजुः ।
धर्मकामार्थतत्त्वज्ञो निग्रहानुग्रहे रतः ॥
तस्य धर्मकृतादेशा वयमन्ये च पार्थिवाः ।
चरामो वसुधां कृत्स्नां धर्मसन्तानमिच्छवः ॥
तदेतत्कारणं पश्य यदर्थं त्वं मया हतः ।
भ्रातुर्वर्तसि भार्यायां त्यक्त्वा धर्मं सनातनम् ॥
नहि लोकविरुद्धस्य लोकवृत्तादपेयुषः ।
दण्डादन्यत्र पश्यामि निग्रहं हरियूथप ॥

भासेनापि स्वीयेऽभिषेकनाटके एवमेव रामकृत्यस्य समर्थनं कृतम्। किन्तु तादृशं समर्थनं न युक्तिसंगतं मत्वा मायुराजेन स प्रसङ्ग एव स्वनाटके परित्यक्त इति धनञ्जयस्य दशरूपकोक्तादधस्तनाद्वचनाज्ज्ञायते ।

छद्मना वालिवधो मायुराजेनोदात्तराघवे परित्यक्तः ।'

अन्यत्रापि मायुराजेन रामायणकथायां परिवर्तनं कृतमिति ज्ञायते । रामः सीता लक्ष्मणश्च पञ्चवट्यां यदा वसन्ति स्म तदैकदा मारीचः सुवर्ण-मृगरूपं गृहीत्वा पर्णकुटी - समीपे विचचार। तस्य तद्विलोभनीयं रूपं दृष्ट्वा मोहिता सीता रामं प्राह—

'आर्यपुत्राभिरामोऽसौ मृगो हरति मे मनः ।
आनयैनं महाबाहो क्रीडार्थं नो भविष्यति ॥

तदा रामेण मृगानयनार्थं गच्छता सौमित्रिरादिष्टः—

यावद्गच्छामि सौमित्रे मृगमानयितुं द्रुतम् ।
पश्य लक्ष्मण वैदेह्या मृगत्वचि गतां स्पृहाम् ॥
त्वया प्रधानया ह्येष मृगोऽद्य न भविष्यति ।
अप्रमत्तेन ते भाव्यमाश्रमस्थेन सीतया' ॥

ततो मृगानुसारिणा रामेण क्षिप्त आत्मनः शरः—

मारीचस्यैव हृदयं बिभेदाशनिसंनिभः ।
तालमात्रमथोत्प्लुत्य व्यपतत्स भृशातुरः ॥

किन्तु म्रियमाणेन तेन मारीचेन राघवसदृशेन स्वरेण 'हा सीते, हा लक्ष्मण' इत्याचुक्रुशे । तच्छ्रुत्वा राघवस्यार्तं शब्दं परिज्ञाय सीता लक्ष्मणमाह—

न हि मे जीवितं स्थाने हृदयं वावतिष्ठते ।
क्रोशतः परमार्तस्य श्रुतः शब्दो मया भृशम् ॥
आक्रन्दमानं तु वने भ्रातरं त्रातुमर्हसि ।
तं क्षिप्रमभिधाव त्वं भ्रातरं शरणैषिणम् ॥

किन्तु लक्ष्मणो राक्षसमायां सुष्ठु व्यजानात् । स सीतामुवाच । नायं रामस्य स्वरः । राक्षसेषु देवमानुषेषु वा न स विद्यते यो रामं प्रतियुध्येत । अपि च—

'न्यासभूतासि वैदेहि न्यस्ता मयि महात्मना ।
रामेण त्वं वरारोहे न त्वां त्यक्तुमिहोत्सहे ॥'

तच्छ्रुत्वा लक्ष्मणस्य चारित्रं शङ्कमाना सीता तमत्यन्तकटुवचनैस्ताडयामास । सा उवाच—

सौमित्रे मित्ररूपेण भ्रातुस्त्वमसि शत्रुवत् ।
यस्त्वमस्यामवस्थायां भ्रातरं नाभिपद्यसे ॥
इच्छसि त्वं विनश्यन्तं रामं लक्ष्मण मत्कृते ।
लोभात्तु मत्कृते नूनं नानुगच्छसि राघवम् ॥
व्यसनं ते प्रियं मन्ये स्नेहो भ्रातरि नास्ति ते ।'

इति मर्मभेदिभिः शब्दैस्ताडितो लक्ष्मण उवाच—

'उत्तरं नोत्सहे वक्तुं दैवतं भवती मम ।
वाक्यमप्रतिरूपं तु न चित्रं स्त्रीषु मैथिलि ॥
स्वभावस्त्वेष नारीणामेषु लोकेषु दृश्यते ।
विमुक्तधर्माश्चपलास्तीक्ष्णा भेदकराः स्त्रियः ॥'

एतादृशो वाक्कलहो न सीताया न वा लक्ष्मणस्य प्रशस्यः । अतो मायुराजेनैष प्रसङ्गः परिवर्तितः । तेन उदात्तराघवे लक्ष्मण एव प्रथमं सुवर्णमृगमानेतुं प्रस्थित इति प्रदर्शितम् । तस्मिन् दूरं गते चित्रमायो नाम राक्षसो दूराद्राममाक्रोशति— 'भगवन् कुलपते रामभद्र परित्रायताम्'

'मृगरूपं परित्यज्य विधाय विकटं वपुः ।
नीयते रक्षसानेन लक्ष्मणो युधि संशयम् ॥'

तच्छ्रुत्वा रामः स्वगतमाह—

'वत्सस्याभयवारिधेः प्रतिभयं मन्ये कथं राक्षसात्
त्रस्तश्चैष मुनिर्विरौति मनसश्चास्तीव मे सम्भ्रमः ।
माहासीर्जनकात्मजामिति मुहुः स्नेहाद्गुरुर्याचते

न स्थातुं न च गन्तुमाकुलमतेर्मूढस्य मे निश्चयः ॥'

तदित्थं कथा-परिवर्तनेन मायुराजेन सीता-लक्ष्मणयोर्वाक्कलहः परिहृतस्तयोश्च विषयेऽस्माकं मनस्यादरोऽक्षुण्णः संस्थापित इत्यहो चातुर्यं मायुराजस्य।

मायुराजस्येद नाटकं बहुगुणयुतमप्यचिरादेव प्रचारान्निर्गतमित्यनुमीयते यतोऽन्यनाटकवत्तदीयश्लोकाः सुभाषितरत्नकोषादिषु पद्यसंग्रहेषु संगृहीता नोपलभ्यन्ते। केवलं दशरूपकोद्धृतेभ्यः श्लोकेभ्यस्तस्य परिचयः सञ्जातोऽद्यावधि। अधुना तस्य नाटकस्यैकं हस्तलिखितं डा० राघवन् महाशयेनासादितमिति श्रूयते। अचिरात् तत्प्रकाशितं स्यादित्याशास्यते।

आगामिनि लेखाङ्के मायुराजस्य नाटकान्तरस्य परिचयो विधास्यते।

# अलङ्कारसर्वस्वे संशोधनम्

डॉ० रेवाप्रसाद द्विवेदी

अलङ्कारसर्वस्वं हि रसगङ्गाधरस्याप्युपजीव्यभूतो ग्रन्थः । तेनासौ संस्कृत-काव्यशास्त्रेऽप्रतिमं महत्त्वं बिभर्ति । अस्मिन् शब्दार्थालङ्कारा एव सूत्रवृत्तिभ्यां निरूप्यन्त उदाहरणपद्यैश्च ते प्रमाण्यन्ते । पद्यानि चैतानि ग्रन्थकृता स्वयमपि रचितानि सन्ति ।

अलङ्कारेषु शब्दालङ्काराः पञ्चैवात्र निरूपिताः । तेषु प्रथमाश्चत्वारः पौनरुक्त्याश्रिताः । तन्नामानि—(१) पुनरुक्तवदाभासम् (सः), (२) अनुप्रासः, (३) यमकम्, (४) लाटानुप्रासश्चेति । अन्तिमश्चैको वर्णविन्यासाश्रितः, चित्र-नामा । एतेषां मध्ये य इमे पौनरुक्त्याश्रिताश्चत्वारः, तेषां कृते निर्मितेषु लक्षण-सूत्रेषु सर्वैरपि संस्कर्तृभिरेकं सूत्रं वृत्तिरूपेण गणितमिति तत्र विचारः प्रस्तूयते ।

साम्प्रतं हि अलङ्कारसर्वस्वस्य पञ्च संस्करणानि लभ्यन्ते । तेषु त्रीणि प्राचीनानि सन्ति । द्वे च वर्षद्वयवयस्के एव । इमानि हि तानि—

१. निर्णयसागरीयम्, १९३९–ख्रीष्टाब्दे प्रकाशितम्; श्रीगिरिजाप्रसाद-द्विवेदसम्पादितं जयरथकृतविमर्शिनीसहितं द्वितीयं संस्करणम् ।

२. त्रिवेन्द्रम्नगरस्थानन्तशयनग्रन्थमालायां १९२८ ख्रीष्टाब्दे समुद्र-बन्धकृतविवरणेन द्वितीय वारं प्रकाशितं संस्करणम् ।

३. काशीतः शारदाग्रन्थमालायां श्रीगौरीनाथपाठकेन स्वोपज्ञ-टिप्पणी-सहितं १९२६ ख्रीष्टाब्दे प्रकाशितं संस्करणम् ।

४. डा० राघवन्महोदयैः संशोध्य कुमारीजानकीसंपादितया श्रीविद्या-चक्रवर्तिविरचितया संजीविनीटीकया सह १९६५–ख्रीष्टाब्दे दिल्ली-स्थमेहरचन्दलछमणदास-प्रकाशसंस्थानतः प्रकाशितम् ।

५. डा० रामचन्द्र द्विवेदिना स्वयं कश्मीरदेशीय-पाण्डुप्रतिद्वयसमीक्षण-संशोधनाभ्यां संगत्य हिन्दीभाषयाऽनूद्य संजीविन्यैव सह [illegible] ख्रीष्टाब्द एव दिल्लीस्थादेव मोतीलालबनारसीदासप्रकाशन-संस्थानात् प्रकाशितम् ।

एषु सर्वेष्वपि संस्करणेषु वृत्तितः सूत्राणां पार्थक्यं तत्तत्संस्कर्तृभिर्यथास्वं विहितम्, कुत्रचित् पंक्तिपार्थक्येन कुत्रचिच्च तेनैव सार्धं मुद्रणगतेनाक्षराकार-भेदेन । तत्र सर्वेष्वप्युपर्युद्धृतेषु संस्करणेषु, शब्दालङ्कार - लक्षणाय प्रवृत्तेन ग्रन्थकृता रचितानि सूत्राणि निम्नांकितेन क्रमेण मुद्रितानि—

१—इहार्थपौनरुक्त्यं शब्दपौनरुक्त्यं शब्दार्थपौनरुक्त्यं चेति त्रयः पौनरुक्त्य-प्रकाराः ॥१॥

२—तत्रार्थपौनरुक्त्यं प्ररूढं दोषः ॥२॥

३—आमुखावभासनं पुनरुक्तवदाभासम् ॥३॥

४—संख्यानियमे पूर्वं छेकानुप्रासः ॥४॥

५—अन्यथा तु वृत्त्यनुप्रासः ॥५॥

६—स्वरव्यञ्जनसमुदायपौनरुक्त्यं यमकम् ॥६॥

७—शब्दार्थपौनरुक्त्यं प्ररूढं दोषः ॥७॥

८—तात्पर्यभेदवत्तु लाटानुप्रासः ॥८॥

९—तदेवं पौनरुक्त्ये पञ्चालङ्काराः ॥९॥

एतेषामनुशीलनेन स्पष्टं भवति यत् प्रथमे सूत्रे पौनरुक्त्यभेदा दर्शिताः, शेषेषु च सूत्रेषु तेषामेव भेदानामेकैकशो दोषालङ्कारत्वे यथायथं दर्शिते । तत्र द्वितीये सूत्रे अर्थपौनरुक्त्यस्य, सप्तमे च सूत्रे शब्दार्थद्वयपौनरुक्त्यस्य अनुसमुद्देशो दृश्यते, द्वितीयस्य शब्दपौनरुक्त्यस्य तु सः, न क्वापि ।

तदिदमेकमत्रासामञ्जस्यम् । एतेषु नवसु सूत्रेषु यानि त्रीणि प्रथमानि, तेषु अर्थ-पौनरुक्त्यस्य विचारो दृश्यते अन्तिमेषु च त्रिषु शब्दार्थोभयपौनरुक्त्यस्य । तदित्थं यान्यत्र त्रीणि मध्यवर्तीनि चतुर्थपञ्चमषष्ठानि सूत्राणि सन्ति, तानि पारि-शेष्याच्छब्दपौनरुक्त्यविषयकाण्येव सिद्ध्यन्ति । एवं स्थिते चतुर्थे सूत्रे यत् 'पूर्वम्' इति पदं दृश्यते तत्परामर्शविषयः क इति विज्ञातुं न लभ्यते । यत्र हि एकाधिकाः पदार्थाः पूर्वमुद्दिश्यन्ते तत्र परवर्तिषु सूत्रेषु, प्रथमः पदार्थः पूर्वपदेना-नुदिश्यते । नास्ति चात्र किंचनापि शब्दपौनरुक्त्यविभागविषयकं तादृशं किञ्चित् सूत्रम् । सोऽयमपरो दोषः । अस्ति च ग्रन्थकृतः शब्दपौनरुक्त्यस्य भेदद्वयम-भिमतम् । यथा चैतत् तत् 'संख्यानियम' इति सूत्रस्य वृत्तिग्रन्थतः, षष्ठात् सूत्राच्च स्पष्टम् । 'संख्यानियम'—सूत्रस्य वृत्तौ 'पूर्वम्' इति पदमेवं विव्रियते— 'पूर्वं व्यञ्जनसमुदायाश्रितम्' इति । एतेन शब्दपौनरुक्त्यं प्रथमतः केवलव्यंजन-मात्रपौनरुक्त्यरूपं भवतीति व्यज्यते । यमकसूत्रे पुनः स्वरव्यञ्जनसमुदायपौन-रुक्त्यं कण्ठरवेणैव ग्रन्थकृतोदीरितम् । तदिदमपरं शब्दपौनरुक्त्यम् । तदित्थं

व्यंजनमात्रपौनरुक्त्यमेकम्, स्वरव्यजनसमुदायपौनरुक्त्यं चापरमिति शब्दपौन-रुक्त्यस्य द्वौ प्रकारौ चतुर्थस्य सूत्रस्य वृत्त्या, षष्ठाच्च स्वयं सूत्रादुन्मील्येते। नास्ति चानयोः शब्दपौनरुक्त्यप्रास्तावीयेषु सूत्रेषु स्पष्टरूपेण पृथगुल्लेखः। अनावश्यकमेतदिति वक्तुं न क्षमम्,* प्रथमे सूत्रेऽपि पौनरुक्त्यविभागस्य तथा वक्तुं शक्यत्वात्।

वयमत्रैवं पश्यामः—अत्र यत् तृतीयं सूत्रं तस्य 'जगन्त्यपि तथा पायाद-व्याच्चेतोहरः शिवः'—इत्यस्मादुदाहरणात् परं यौ—

(१) 'शब्दपौनरुक्त्यं व्यंजनपौनरुक्त्यं स्वरव्यंजनसमुदायपौनरुक्त्यं च।

(२) अलङ्कारप्रस्तावे केवलं स्वरपौनरुक्त्यमचारुत्वान्न गण्यत इति द्वैविध्यमेव।'

—इमौ द्वौ ग्रन्थांशौ सर्वत्र वृत्तिरूपेणैव प्रकाशितौ। अनयोः प्रथमः सूत्र-रूपो वर्तते, द्वितीयश्च तद्विवृतिरूपः। एवं मते पूर्वोक्तं दोषजातं परिह्रियते। ततश्च—

(१) इहार्थ-पौनरुक्त्यं·········त्रयः पौनरुक्त्यप्रकाराः ॥१॥

(२) तत्रार्थपौनरुक्त्यं प्ररूढं दोषः ॥२॥

(३) आमुखावभासनं पुनरुक्तवदाभासम् ॥३॥

(४) शब्दपौनरुक्त्यं व्यंजनपौनरुक्त्यं स्वरव्यंजनसमुदायपौनरुक्त्यं च ॥४॥

(५) संख्यानियमे पूर्वं छेकानुप्रासः ॥५॥

—इत्येवं सूत्रक्रमे संपन्ने पञ्चमसूत्रस्थस्य 'पूर्व'पदस्य वृत्तिनिरूपितो व्यंजनपौनरुक्त्यरूपः परामर्शविषयः सूत्रसमुद्देशेनापि प्रमाणीक्रियते। सति च परामर्शविषयस्य समुद्दिष्टपूर्वत्वे सर्वनामपदस्याप्यकुतोमुखीनत्वं परिह्रियते।

संजीविनीकारः श्रीविद्याचक्रवर्त्यपि वृत्तिरूपेण मुद्रितामिमां पंक्तिं सूत्रमेव मनुते। स हि प्रत्येकमलङ्कारस्य लक्षणसूत्रं पूर्णतया निर्दिशति। तथाहि—

'अथ सूत्रम्—'इहार्थपौनरुक्त्य·········प्रकाराः ॥१॥'' इति।

'अर्थेषु पौनरुक्त्येषु हेयांशं विभक्तुं सूत्रम्—'तत्रार्थपौनरुक्त्यं प्ररूढं दोषः ॥'२॥ इति।

'तत्र व्यंजनमात्रमधिकृत्य सूत्रम्—'संख्यानियमे पूर्वं छेकानुप्रासः ॥३॥'

अस्मदुत्प्रेक्षिताय सूत्रायाप्यसौ लिखति—

'अथ शब्दपौनरुक्त्यप्रस्तावाय सूत्रम्—'शब्दपौनरुक्त्यं व्यंजनपौनरुक्त्यं स्वरव्यंजनसमुदायपौनरुक्त्यं च ॥ इति।

विवृणोति चैतदेवम्—

'अत्राद्यं पदमुद्देश्यम्, चरमं तु द्वयं विधेयम्, शब्दपौनरुक्त्यं व्यंजनमात्रनिष्ठतया स्वरव्यंजनसमुदायनिष्ठतया च द्विप्रकारमित्यर्थः।'

दिल्लीसंस्करणयोः संजीविन्यां सूत्रत्वेन प्रख्यापितस्यापि, मूले यद् वृत्तित्वेनैव ग्रन्थांशस्यास्य मुद्रणम्, तत्र भूमिकायाम्, पादटिप्पणे, परिशिष्टेऽपि वा किंचिदपि स्पष्टीकरणं न लभ्यते। काशीसंस्करणे पुनरिदं वैचित्र्यं यत् परिशिष्टतया सर्वेषामेव सूत्राणां पृथक् मुद्रणे सूत्रं त्विदं सर्वथा विच्यावितमेव, तदर्थसंगतये पुनः प्रथमात् सूत्रात् 'शब्दपौनरुक्त्यम्' इत्यपि पदं विच्यावितम्। तत्र परिशिष्टे हि प्रथमं सूत्रम् 'इहार्थपौनरुक्त्यं शब्दार्थपौनरुक्त्यं चेति त्रयः पौनरुक्त्यप्रकारा' इतिमात्ररूपं मुद्रितं लभ्यते, मूले पुनः 'इहार्थपौनरुक्त्यं शब्दपौनरुक्त्यं शब्दार्थपौनरुक्त्यं चेत्येवमेव संस्करणान्तरवदेव। अत्रैतदाश्चर्यपदं यच्छब्दपौनरुक्त्योल्लेखमसंगतं मन्वानेन संपादकेन 'त्रय' इत्यनेन पदेनोपस्थापितस्य पौनरुक्त्यगतस्य त्रित्वस्यान्वयाय विचारो न कृतः।

इत्थमिह पूर्वपरिचायितेषु संस्करणेषु पुनरुक्तवदाभाससूत्रवृत्तितया, छेकानुप्राससूत्रावतारतया वा यदयं—'शब्दपौनरुक्त्यं व्यंजनमात्रपौनरुक्त्यं स्वरव्यंजनसमुदायपौनरुक्त्यं चे'ति ग्रन्थोऽसूत्रत्वेन प्रकाशितः तस्य सूत्रत्वे निश्चायिते, तस्यैव च चतुर्थत्वसिद्धौ, परवर्त्तिषु सूत्रेषु ग्रन्थपूर्त्ति यावद्, ये नाम ४, ५, ६ इत्येवमादयः संख्याङ्काः स्थापिताः, तेषु सर्वेष्वप्येकोनत्वमाकलयद्भिरेकाङ्कसंकलनेन ५, ६, ७ इत्येवमादय एकाधिका अंकाः स्थापनीयाः।

अलंकारसर्वस्वस्य पूर्वोक्तेषु संस्करणेषु पाठशोधनमन्यत्रापि बहुत्रापेक्ष्यते, यत्र संजीविनीप्रभृतयो विवृतयोऽपि साहाय्यं न विदधते, अथापि तत्संपादकानां वयं भृशं कृतज्ञाः, यैर्ग्रन्थरत्नमिदम् उत्तरोत्तरमधिकाधिकं संशोध्यानुशीलनाय सुकरं व्यधायि।

# अभिनेयं बालरामायणम्

डा० भास्कराचार्य त्रिपाठी

द्विनवत्यधिकसप्तशतपद्यपेशलं राजद्विविधगद्यबन्धबन्धुरितं दशाङ्कराजिका-करम्बितमिदं राजशेखरीयलेखनीललामकं बालरामायणमहानाटक[1] नाभिनेयमिति समेषां साहित्येतिहासकृतां विदुषां सम्मतम् । स्टेनकोनो-बलदेवोपाध्यायप्रभृति-महाशयानां दृशा—

ब्रूते यः कोऽपि दोषं महदिति सुमतिर्बालरामायणेऽस्मिन्,
प्रष्टव्योऽसौ पटीयानिह भणितिगुणो विद्यते वा नवेति ।
यद्यस्ति स्वस्ति तुभ्यं भव पठनरुचिर्विद्धि नः षट् प्रबन्धान्,
नैवं चेद्दीर्घमास्तां नटवटुवदने जर्जरा काव्यकन्या ॥[2]

'राजशेखरः स्रग्धरायामस्यां स्वयमेव स्वकृतिदोषं विवृणोति । 'भव पठनरुचिः' इति पदेन नाटकस्य पठनीयता समर्थ्यते निरस्यते चाभिनेयता ।' 'बालरामायणस्य प्रस्तावना एकाङ्कतुल्यास्ते, अङ्काश्च प्रत्येकं रत्नावलीसदृङ्नाटिकापरिणाहं बिभ्रति' इत्याप्टेमहोदयोल्लिखितं तथ्यं कीथ-स्टेनकोनोपुरस्सरा विद्वांसोऽनूदुः ।

वस्तुत उपर्युक्तमालोचकानां मतं सर्वथा भ्रमात्मकमस्ति । यदि वेङ्कटनाथेन चतुर्दशशताब्द्यां रचितस्य एकसप्तत्यधिकसप्तशतपद्यपिच्छिलस्य विविधगद्यांश-जुषो दशाङ्कदार्शनिकनाटकस्य सङ्कल्पसूर्योदयस्य अभिनयो भवितुमर्हति तर्हि बालरामायणमप्यभिनेयम् । विंशतिश्लोकविशदा बालरामायणप्रस्तावना सङ्कल्प-सूर्योदयस्य एकत्रिंशच्छ्लोककलितायाः प्रस्तावनायाः कथमधिकतरोद्वेजिका स्यात् । अथ वी० वी० श्रीनिवासन् महाभागः सङ्कल्पसूर्योदयस्य अनेकशः सफलाभिनयं

---

1 अङ्कैश्च दशभिर्धीरा महानाटकमूचिरे । साहित्यदर्पणः । २२४

2 बालरामायणम् १।१२ (प्रस्तावना)

दृष्ट्वा स्तुतिमुखरो बभूव ।[1] वेङ्कटनाथोऽपि स्वनाटकस्याभिनेयतां सुष्ठु प्रत्येति ।[2] महत्या रामलीलायाः प्रतिपादयितरि सप्ताङ्केऽनर्घराघवनाटकेऽपि सन्त्येव सप्तषष्ठ्यधिकपञ्चशतपद्यानि, प्रसन्नराघवस्यापि च प्रस्तावना अ्यधिकविंशतिपद्यै रन्तमेति । दामोदरमिश्रग्रथितं हनुमन्नाटकन्तु विनापि गद्यमष्टसप्तत्यधिकपञ्चशतपद्यालीमाकलयति । पुनः श्लोकसङ्गणनयैव न तारतम्यनिश्चितिरुचिता । दशाङ्केषु मृच्छकटिकमालतीमाधवादिप्रकरणरूपकेषु स्यान्नाम श्लोकसङ्ख्याल्पता, किन्तु बहुलगद्यांशशालीनि न तानि कनीयांसि बालरामायणतः सन्ति ।

सुरगिरः सर्वश्रेष्ठनाटकमभिज्ञानशाकुन्तलमपि महाशयो मुग्धानलः अभिनयानुपयोगि आह यतस्तत्र भावसुकुमारतायाः प्रकृतिपशुपक्षिणां मानवीकरणस्य च बाहुल्यमस्ति । दृशानया बालरामायणेऽपि कश्चित्करक्षेपं कुर्यात् यदत्र गृध्रवानरादयो मनुष्यवाचा व्याहरन्ति, दिव्यास्त्रैराहवे वीरा युध्यन्ति भवन्ति च विधुलोकव्यापिन्यो विमानतः स्वर्यात्राः । वक्तव्यमस्मिन् स्थले यदाङ्ग्लमनीषिणामेतादृङ्मतानि न यथावन्मन्तव्यानि । भारतीयसंस्कृतसंस्कृत्योः यावत्पुरावृत्तं ते वैज्ञानिकदृष्ट्या स्पष्टीचक्रुः तत्सर्वात्मना स्तुत्यम्, किन्तु 'घोरजङ्गलकल्पं बाणभट्टगद्यम्' उताहो 'अनभिनेयम् अमुकसंस्कृतनाटकम्' इत्यादीनि तेषां वाक्यानि श्रुतिवाक्यवदादरणीयान्यपि तु तर्कमनीषिकया परीक्षणीयानि सन्ति ।

नैतत्परोक्षं प्रेक्षावतां यत् संस्कृतस्य रसनिर्भरनाटकेषु कथावस्तुनो

---

1. 'I have, however had the good fortune of seeing it acted both in original Sanskrit and Tamil versions in various places in the province by several groups of talented and enthusiastic actors.'

Foreword by V. V. Śrinivāsan, P. XVII
Sankalpasūryodaya ed. by Pt. V. V. Kṛṣṇamāchārya

2. मौनं बिभ्रतु मत्सरेण नमितास्तूर्णं त एव ध्रुवं
कालोन्निद्रकदम्बगोलवपुषः कम्पस्फुरन्मौलयः ।
किञ्चिद्व्रीडितकुञ्चिताक्षमवशादुत्तानदत्ताननाः,
प्रस्तोष्यन्त्यवधि प्रयोगपदवीसारस्यसारस्य नः ।। सङ्कल्पसूर्योदयः १।२४

वास्तविकता न तावती अवधीयते, यावती मध्येसहृदय सञ्चारवत्ता । समेषामद्भुतदृश्यानामपि नाट्यप्रबन्धः वि सूक्ष्मतया विधेयः । पशुपक्षिणः चित्रद्वारा प्रदर्शनीयाः अथवा नटा एव निजोत्तमाङ्गे कृत्रिमपशुपक्षिरूपयन्त्राणि स्वैरं परिदधीरन् । दिव्यास्त्रहेतुको वह्निदाहो जलप्लावनं वा संस्कृतस्य बलीयश्चित्रवद्वर्णनेन यथेच्छं प्रस्तूयताम् । युगेऽस्मिन् विज्ञानवति कृत्रिमधूमादेरुपयोगोऽपि सुकरतरः स्यात् । नाट्यशास्त्रस्य मण्डलकल्पनगतिप्रचारनाम्नोरेकादशद्वादशाध्याययोः भरतमुनिना व्योमगतयुद्धहेतुमण्डलार्थं, रथविमानप्रासादगतयात्रायै, आरोहणावरोहणाभ्यां जलस्नानाय च विधिवदभिनयकृते विस्तृतविधिः साधु वर्णितोऽस्ति । आधुनिकता चेदभीष्टा, तर्हि रङ्गशीर्षं द्विधा विभज्य उत्प्लवनदृश्यानि वास्तविकानीव प्रदर्शनीयानि ।

श्रीमद्बलदेवोपाध्यायेन गैरोलाह्वेन वाचस्पतिना च स्वसंस्कृतसाहित्येतिहासयोः प्रतिपादितं यद् 'राजशेखरस्य प्रतिभा महाकाव्यरचनार्थमुपयुक्तासीत् नाटकनिर्माणार्थमसौ तावती नानुरूपासीत् । उक्तमहाकाव्यरचयितृभ्यः[1] समधिकादरप्रदर्शनेऽप्येतदेव रहस्यमस्ति । स्वमयं कविराजमवादीत् ।'[2] एतादृगतलस्पर्शिनी कतिपयेतिहासकृतामालोचनाऽपि भ्रमजन्यैव प्रतीयते । यतः साहित्ये 'काव्यम्' इति शब्दः तथा व्यापकार्थगर्भितो यथा गद्यनाटकादयः सर्वेऽप्यस्मिन्नन्तर्भवन्ति । तत एव काव्यं नाटकञ्च क्रमशः श्रव्यदृश्यकाव्येऽभिधीयेते केवलं पठ्यमानं सत् नाटकमपि काव्यमभिनीयमानञ्च सत्तदेव नाट्यमिति सुष्ठु सम्प्रदायतः स्पष्टीकृतम्—

> 'अनुभावविभावानां वर्णना काव्यमुच्यते ।
> तेषामेव प्रयोगस्तु नाट्यं गीतादिरञ्जितम् ॥[3]

भरतमुनिर्नाटकेषु वर्णनांशं प्रायशः काव्यनाम्नाकथयत् । अभिनवगुप्तपादोऽपि भूयोभूयः 'काव्यं तावन्मुख्यतो दशरूपात्मकमेव' 'काव्यञ्च नाट्यमेव'[4] इति मनुते । विचारणीयमिदं यद्राजशेखरः

[1]—बालरामायणम् १।१६

[2]—संस्कृत साहित्य का इतिहास, बलदेव उपाध्यायः । पञ्चमसंस्करणम् पृ. ४६०

[3]—व्यक्तिविवेकस्य विंशतिसङ्ख्यपृष्ठे समुद्धृतम् ।

[4]—अभिनवभारती (गायकवाडसंस्करणम्)। प्रथमखण्डे पृ० २९२

'बभूव वल्मीकभवः पुरा कविस्ततः प्रपेदे भुवि भर्तृमेण्ठताम् ।
स्थितः पुनर्यो भवभूतिरेखया स वर्तते सम्प्रति राजशेखरः ॥

बालरामायणम् १।१६

वंशस्थेऽस्मिन् वाल्मीकिभर्तृमेण्ठभवभूतिभ्यो यदादरमदात्, तेन किमु तस्य नाटककारता व्याहन्यते ? न तिरोहितं विपश्चितां - भवभूतिर्विशुद्धनाटककार एवासीदिति । वाल्मीकिरादिकविस्तु स्वोपज्ञरामकथया समस्तकविचक्रस्य मार्गदर्शी महर्षिः बभूव । भर्तृमेण्ठोऽपि स्वविशिष्टप्रतिभया राजशेखरस्यानुकार्यः स्यात् । अथवा राजशेखरो हरविजयादीनि यानि काव्यान्यरचयत् तेषु भर्तृमेण्ठकृतहयग्रीववधच्छाया भवेत् । एवञ्च निष्कर्षतो विशदितं यद् वाल्मीकिप्रभृतीनां सम्मानकरणं न कवेः कथमपि नाटकनैपुणीं व्याहन्ति । आत्मानं राजशेखरः 'कविराजं' निरदिशत् , किन्तु सकलसंस्कृतकविसमयसाधारणा एवेयं परिपाटी । ऋतेऽत्र कवेः, नाटककारकृते नामान्तरनिर्धारणा न विद्यते ।

यद्यपि दृश्यकाव्ये साक्षादाशुप्रभावोत्पादकता समपेक्ष्यते, तथापि पात्राणां चरित्रोन्नयनार्थं स्थलानि कानिचिदीषत्काव्यवर्णनात्मकान्यपि चेत्स्युः, न तर्हि कश्चिद्दोषः । 'दशरूपकस्य हीदं सर्वं विलसितं, यदुत कथाख्यायिके महाकाव्यमिति' प्रतिपादयता वामनाचार्येण पूर्वोक्तगुणविशिष्टमेव नाटकं श्रेय इत्यनुमोदितम् । इत्थं महेन्द्रपालनरेन्द्रस्य नाट्यसभायामभिनीतं बालरामायणं सर्वथाभिनेयं मन्येत । अद्यतनयन्त्रयुगस्य कार्यव्यस्तसामाजिका महीयश्चेदेतन्मन्येरन् तर्हि संस्कृतनाट्यशास्त्रपरम्परां मनाक्छ्लथयित्वा विजयदशमीकाले रामलीलाक्रमेण प्रत्यहमेकैकाङ्कतः पञ्चचत्वारिंशन्मिनटात्मकं मनोविनोदं लभेरन् । परमथ सार्धसप्तघण्टासमाप्यतो नाट्यतः समुद्वेजनं यन्त्रयुगस्य दोषो वक्ष्यते न तु बालरामायणसङ्कल्पसूर्योदययोः ।

'ब्रूते यः कोऽपि दोषम् ........' (बालरामायणम् १।१२) इत्युक्त्या कविना स्वनाटकस्यानभिनेयता नैव स्वीक्रियतेऽपितु कश्चनालोचकम्मन्यः सव्यङ्ग्यमभिधीयते यत् - 'त्वं राजशेखरादपि चतुरतरो भविष्यसि तदैव त्वित्थं कथयसि । भव पठनरुचिः अर्थादीषत्पठन-स्वभावो भव, तथा मे षट् प्रबन्धान् परिचिनु, न मया बालरामायणमेवैकं व्यरचि ।' एभिर्वाक्यशकलैरनभिनेयता न सम्बद्धा भवति । कस्यचिन्नाटकस्यापि गुणदोषौ पठनं विना न ज्ञेयौ

1–काव्यालङ्कारसूत्रवृत्तिः । १।३।३०–३२ ।

स्तः । प्रयोगतो नाटकानि नाम प्रायः पठ्यन्त एव, अभिनयावसरस्तु कर्हिचिदेवापतति । कानिचन नाटकानि केवलमभिनीयमानानि सन्ति विलसन्ति, पठ्यमानानि सन्ति च न विलसन्ति । अयन्तु वरीयान् नाटकस्यैव गुणगरिमा यत्पठ्यमाने दृश्यमानेऽपि च तस्मिँस्तुल्यानन्दसमुद्वेल्लन स्यादिति सर्वैः पाश्चात्यपौरस्त्यमनीषिभिः समर्थितम्[1] ॥

---

1—डा० राघवन् महाभागो 'भोजज् शृङ्गारप्रकाश' (पृ० ८१–८५) नाम्नि स्वशोधग्रन्थे अरिस्तूडेसियरलेसिङ्ग् पुरस्सराणां पाश्चात्यविदुषामेतद्विषयिणीं विचारणां समुद्धृतवानस्ति ।

भारतीयविचारकेषु द्रष्टव्योऽभिनवगुप्तः— 'अतएव तेषां (सहृदयानां) काव्यमेव (Read drama) प्रतीत्युत्पत्तिकृदनपेक्षितनाट्यमपि ।' अभिनवभारती I पृ० २८८ ( गायकवाडसंस्करणम् )

# "मेघदूतीयं पद्यम्"

## श्री शिवचन्द्र भट्टाचार्यः

साम्प्रतं हि मेघदूतस्य पद्यमेकमधिकृत्य "सागरिकायां" विचारोऽस्माभिर्दृष्टः चतुर्थवर्षस्य चतुर्थाङ्के। तद्दर्शनाद् हृष्टमस्माकं हृदयम्। तत्रोपस्थापितः सिद्धांतो मान्य एव हि नः। स एव च सिद्धान्तः प्रकारान्तरेणापि शक्यते स्थापयितुमित्यत आरभ्यते कश्चन नवीनो विचारः। तथाहि मेघदूते पद्यमिदमुक्तम्—

"त्वामालिख्य प्रणयकुपितां धातुरागैः शिलायां,
आत्मानं ते चरण-पतितं यावदिच्छामि कर्तुम्।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे,
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः॥"

इति, प्रियामुद्दिश्य यक्षस्योक्तिरियम्। विरहकालिका ये तावच्चत्वारो विनोदोपाया वर्णिताः सन्ति, तेषामेकोऽपि यक्षस्य सफलो नाभूदिति क्रमेण तान् वर्णयन् यक्षोऽत्र चित्रकर्मद्वारा विनोदेच्छाया असाफल्यं दर्शयति। तथाच गुणपताकायां विरहकालिका विनोदोपाया वर्णिता यथा—

"वियोगे चायोगे प्रियजनसदृक्षानुभवनं,
ततश्चित्रं कर्म स्वपनसमये दर्शनमपि,
तदंग स्पृष्टानामुपगतवतां स्पर्शनमपि,
प्रतीकारोऽनंग-व्यथितमनसां कोऽपि गदितः"।

इति अश्रुपाताद्धि यक्षस्य चित्रनिर्माणेच्छाया मतान्तरे चित्रितप्रियाचरणपतनेच्छाया असाफल्यम्। ततश्चेच्छाया असाफल्येन महान् खेदः। तस्माच्च दैवोपालम्भनमत्र यक्षेण कृतमिति। अत्र तावज्जिज्ञासा भवति, श्लोकस्थेन 'इच्छामी'ति पदेन यक्षेण स्वकीया इच्छा प्रकटीकृता, सा चेच्छा कीदृशी? किमाकारिका वेति? एवं जिज्ञासायामत्र चत्वार उत्तरपक्षाः सम्भवन्ति। तानुत्तरपक्षान् सयुक्तिकानिहास्माभिर्निरूप्य तेषां कतमः श्रेयानिति पश्चान्निर्णेष्यते। तथाहि श्लोकस्थस्य "आलिख्ये" ति पदस्य

यदि 'कर्त्तु' मिति पदेनान्वयः, तदा प्रियाचित्रनिर्माणानन्तरकालिकं यदालिखित-प्रियाचरणात्मपातकरणं, तद्विषयिणीच्छा गम्यते, एवं च विशेष्यं निरुक्तात्म-पातकरणमिच्छाविषयीभूतं, यत्र विशेषणविशिष्टं विशेष्यमिच्छाविषयीभवति, तत्र क्वचित् क्वचित् विशेषणमपि इच्छाया विषयो भवतीति स्थितिः । एवं चात्र निरुक्तात्मपातकरणांशे परम्परया विशेषणस्यापि प्रियाचित्रनिर्माणस्य इच्छा-विषयत्वमिष्यते ततश्च 'त्वामालिखेयं, ततश्चालिखितत्वच्चरणात्मपातनं च कुर्या मित्याकारिका 'प्रियाचित्रनिर्माण–निर्मित - प्रियाचित्रचरणात्मपातनोभयविष-यिणीच्छा 'इच्छामो' ति पदेनाभिव्यक्ता भवति । इच्छासमकालमेवाश्रुपातः प्रियास्मरणनिमित्तकः प्रारब्धोऽभवदिति यक्षेण न प्रिया - चित्रं निर्मितं, नापि चित्रचरणयोरात्मपातः कृतः । एवं च मनागपि चित्रदर्शनजन्यो विनोदो यक्षस्य नाभूदिति हेतोः तस्य महान्खेदस्तज्जन्यमत्रदैवोपालम्भनं मन्तव्यम् । यदि च प्रियाचित्रनिर्माणानन्तरमेवात्मपातनेच्छा यक्षस्य अंगीक्रियते तदाऽनुपपत्तिरियं द्रष्टव्या । तथाहि विरहविधुरो हि यक्षः सर्वदा प्रियाध्यानैकतान आसीत्, न च बाह्ये विषये चित्रकर्मादौ मनोयोगं दातुमर्हति । अन्यत्र मनोयोगे प्रियां प्रति यक्षस्यानुरागाभावः प्रसज्येत । न चैतद् युक्तम्, तस्मादतिशयानुरक्तचेतसः प्रिया-ध्यानैकनिपुणस्य यक्षस्य बहिर्विषये चित्ररचनादावन्तःकरणप्रवृत्तेरभावात् ध्यानकालिकं चित्रनिर्माणादि - विषयकं संकल्पमात्रमासीदिति मन्तव्यम् । अय-मुभयविषयकेच्छास्वीकाररूप एकः पक्षः, स्वीकृतश्च गोस्वामिदामोदरलालप्रभृ-तिभिः । मन्ये सुप्राचीनटीकाकारभरतसेनेनापि अयमेव पक्षः समर्थितः । अतः परं यक्षेच्छाया एकविषयकत्वस्वीकाररूपः अन्योऽपि कल्प उच्यते । तथाहि उक्त-श्लोके "आलिख्ये"तिपदस्य "इच्छामी"त्यनेन सम्बन्धः, तेन चित्रित-प्रियाचरणात्मपातविषयिणी या प्रियाचित्रलेखनानन्तरकालिकी इच्छा, सैव "इच्छामी"त्यनेन गम्यमाना भवति, एवं च "चित्रितत्वच्चरणयोरात्मानं पातयेय"मित्याकारिका चित्रितप्रियाचरणात्मपातमात्रैकविषयिणीच्छा लभ्यते सा चेच्छा प्रियाचित्रदर्शनजन्याश्रुपातेन प्रतिरुद्धा सती यक्षहृदि खेद-मुपाजनयत् । तेन खेदेनात्र यक्षस्य दैवोपालम्भनम् । एतन्मते प्रियाचित्र-निर्माणं यक्षेण समापितमासीत्, किन्तु चित्रचरणयोरात्मपातनं यक्षस्य न जातम् । यद्यपि दृश्यते रुदितपरवशस्यापि चरणयोरवलुण्ठनं तथापीह पाषाणफलके धातुरागेण निर्मितचित्रस्य अश्रुभिः प्लाविततया मृष्टत्वेन न तत्र यक्षस्यात्मपातनं शक्यमासीदित्यवगन्तव्यम् । चित्रनिर्माणास्वीकारपक्षे तु अश्रुपातकारणं खेदकारणं च न सम्यगुपपद्यते, तथाहि पूर्वकल्पे यक्षस्या-

श्रुपातस्तावत् किन्निबन्धन इत्येव प्रथमं विचारणीयमस्यैव निर्णयेन खेद-कारणानुपपत्तिः प्रकटीभविष्यति । यक्षो हि प्रियां प्रति बलवदनुरक्तहृदय आसीत् । सति च बलवत्यनुरागे येन केनापि प्रकारेण स्मृति-पथमारूढा प्रिया जनयत्यश्रूणि इति स्वभावविरुद्ध-कल्पनया उपपादयितुं शक्यते यक्षस्याश्रु पातकारणं पूर्वकल्पे । परमेवं कल्पनेन सहैव इदमपि स्वीकार्यं यत् बल-वदनुरक्तहृदयस्य विरहातुरस्य सततप्रियाचिन्तानिमग्नस्य यक्षस्य सर्वदा प्रायशो वाश्रुपातो दुर्लभो नासीदिति । एवं च स्थितौ स्वामवस्थां पश्यतः अर्थान्निजां चित्रनिर्माणस्य प्रायिकाश्रुपातजनितामयोग्यतां जानतो यक्षस्य कथं हृदि बलवती प्रियाचित्रनिर्माणेच्छा अजायत ? नहि कर्मणि स्वकीयामयोग्यतां पश्यतः पुरुषस्य तत्र बलवती साधनेच्छा प्रजायते, कथञ्चित् कार्यसाफल्ये परितो नैराश्यतिमि-रेणाव्रियमाणा स्वामयोग्यतां जानतः पुरुषस्य कर्मणि जायमानापि क्षीणादीप-शिखेव साधनेच्छा प्रतिहता सती प्रागेव 'सफला न भविष्यति' इत्येवं निश्चयेन दृढीकृतहृदयभूमौ खेदाङ्कुराणि जनयितुम् नालम्भवतीति निश्चितम् । तदेवं स्थितौ यक्षस्य यदि येन केनापि प्रकारेण प्रियास्मरणनिमित्तकोऽश्रुपातः स्वी-क्रियते, तदा विरहातुरस्य यक्षस्य प्रायिकमश्रुपातं पश्यतः चित्रनिर्माणेच्छा प्रागेवासाफल्यसम्भावनया परिभूता सती क्षीणेति न तद् विघाते यक्षस्य खेद-कारणमुपपद्यते । यदि च यक्षस्य न खेद,स्तदा कथं दैवोपालम्भनमिति दुरुत्तरम् । अतो नाय पन्थाः समीचीनः ।

किन्तु अनुरक्तस्यापि यक्षस्यासीत् तथाविधं धैर्यम्, येन तस्य येन केनापि प्रकारेण प्रियास्मरणमात्रेण हृदयावेगनिबन्धनोऽश्रुपातो न भवति स्म, सम्भवति च विनोदाशया बलवदनुरक्तहृदयस्यापि यक्षस्य बाह्यविषये चित्र-निर्माणादौ बलवताऽनुरागेणैव प्रेरणेति । स्वीकार्यमेवं च यदा यक्षो प्रियानुरागेणैव प्रेरितो विरहकालिकविनोदाशया कुपितायाः प्रियायाश्चित्रं निर्मितवान् तदा प्रियायाः प्रत्यक्षसमतुलेन चित्रसन्दर्शनेन हृदयावेगनिबन्ध-नोऽश्रुपातः समजायत, उपपद्यते च प्रियास्मरणापेक्षया प्रियाप्रत्यक्षसमतुलस्य तच्चित्रदर्शनस्याधिकतर-हृदयावेगजनकत्वम् । ततश्च हृदयावेगनिमित्तकाश्रुपातेन चित्रचरणप्रणामद्वारा यक्षस्य प्रियामानापनयनेच्छा फलनिकटमागत्याऽपि अल्पस्यकृते प्रतिहताभूत् इति फलनोन्मुखाया इच्छायाः प्रतिहतिर्यक्षस्य हृदि महान्तं खेदमुपाजनयत् । ततश्च खेदनिमित्तकं दैवोपालम्भनं यक्षस्य युज्यते इति द्वितीयः कल्पः ।

अथ तृतीयः प्रकार उभयविषयकेच्छास्वीकाररूपः कल्प उच्यते ।

अत्रापि कल्पे प्रथमकल्पोक्तयुक्तिभिः 'आलिख्ये'त्यस्य 'कर्त्तु' मित्यनेन सम्बन्धः। तेन प्रथमकल्पवत् प्रियाचित्रनिर्माणपूर्वकं यत् चित्रचरणात्मपातनं, तद्विषयकेच्छा लभ्यते, विशिष्टस्येच्छाविषयत्वे विशेषणस्यापि प्रियाचित्रनिर्माणस्य इच्छाविषयत्वं सिद्धं भवति। इयांस्तु विशेषः प्रथमकल्पे "आत्मानं ते चरणपतितं यावदिच्छामि कर्त्तु"मित्यस्य यथाश्रुत एवार्थः, इह तु "आत्मान"मित्यस्य आत्मप्रतिकृतौ लक्षणा, तेन "त्वच्चरणपतितत्वेन आत्मप्रतिकृतिं यावद् निर्मातुमिच्छामि" इति निष्कर्षो लभ्यते। यथाश्रुतार्थेऽरुचिस्तु एभिः कारणैः बोद्धव्या, तथाहि यक्षेण यदि तावत् चित्रितप्रियाचरणयोरात्मपातनमात्रं प्रणाममात्रमिति यावत् इष्यते तदा प्रणामकर्त्ता यक्षः स्वस्यैव कर्मत्वं व्यपदिश्य स्वभिन्नत्वेनेव निर्देशं किमर्थं कृतवान्? इति प्रश्नो भवति। स्वभावतस्तु तत्रेदं वक्तव्यं यक्षस्यासीद् यत् "क्रोधो गच्छेच्छमनमितिवै यावदिच्छामि नन्तुम्" इति। न च तथा कृतम्, अपि तु कर्त्तुरेव कर्मत्वेन व्यपदेशं कृत्वा "कर्त्तुरधीनं कर्म प्रायशस्तद्भिन्न"मिति प्रसिद्ध्या पाठकमनसि भ्रमसृष्टेरवकाशो दत्तः। न चैतद् युक्तं, तस्माद् "उद्वृत्तो हि ग्रन्थः समधिकफलमाचष्टे" इति नियमानुसारेणात्र "नन्तुमिच्छामी" ति वक्तव्ये "आत्मानं ते" इत्यादिनाऽधिकतरकथनं कर्त्तुश्च स्वभिन्नत्वेनेव कर्मत्वव्यपदेशः कस्यचिदभिप्रायविशेषस्यैव सूचनायेत्यवश्यमंगीकार्यम्। स चाभिप्राय "आत्मान" मित्यस्यात्मप्रतिकृतौ लक्षणास्वीकारपक्षे एव सम्यगुपपद्यते आत्मप्रतिकृतिरूपकर्मणश्च पराधीनत्वं कर्त्तृभिन्नत्वं च भवतः। यथाश्रुतार्थग्रहणपक्षे तु नैतदुपपद्यते। तस्मादात्मानमित्यस्यात्मप्रतिकृतौ लक्षणापक्ष एव श्रेयान्।

एतन्मते इच्छाया आकारस्तु "त्वामालिखेयम्, ततस्त्वच्चरणपतितत्वेनात्मप्रतिकृतिमालिखेय" मिति। अन्यत् सर्वं प्रथमकल्पोक्तदिशाऽवसेयम्। प्रथमकल्पस्यैव आत्मपदस्य लक्षणास्वीकारे अयं तृतीयकल्पः प्रकारभेदो भवति। अथास्यचतुर्थः कल्पो मल्लिनाथादिसम्मत उच्यते। अयमपि च कल्पो यक्षेच्छाया एकविषयकत्वस्वीकारपरः, आत्मपदस्य आत्मप्रतिकृतौ लक्षणास्वीकारपरश्च। एतन्मते प्रियाचित्रं यक्षेण निर्मितमासीत्, किन्तु प्रियाचित्रचरणपतितत्वेनात्मचित्रं न निर्मितम्। किन्तु यावदेव यक्षः तथाभूतात्मप्रतिकृतिं निर्मातुमिच्छति, तावदेव प्रियाचित्रदर्शननिमित्तकेनाश्रुपातेन दृष्टिलोपाद् यक्षस्य साफल्यनिकटमागतायाः किं बहुना प्रायेण सफलतां प्राप्तायाः प्रियाचित्रचरणपतितत्वेनात्मप्रतिकृति - रचना - द्वारकविनोदाशायाः प्रतिघातोऽभूदिति हेतोर्यक्षस्य हृदि महान् खेद उत्पन्नः, तथाहि यत्र बहूनां कर्मणां समाप्त्यनन्तर-

माशा सफलतां भजते, तत्र यथा यथा एकैकं कर्म समाप्यते तथा तथा आशा विवर्धते । तादृशीं वृद्धिं प्राप्ताया आशायाः प्रतिघातः सुदूरफलाया आशायाः प्रतिघातापेक्षया अधिकतरं खेद जनयति । इह च यक्षस्य चित्रदर्शनजन्य-मनोविनोदाशा चित्रद्वयनिर्माणानन्तरं सफला भाविनी आसीत् । तत्र च प्रथमचित्रनिर्माणे जाते अर्थात् प्रियाचित्रे निर्मिते "इदानीं ममाशा स्वचित्रनिर्माणमात्र-व्यवहितफला अचिरेणैव फलिष्यती" ति सम्भावनया परिबृंहिता सती पूर्वोक्तविनोदाशा मुहुरुपचितैरश्रुभिर्दृष्टि-लोपात् प्रतिहता-भूदिति हेतोर्यक्षहृदि महत्तरं दुःखमुत्पन्नमभूत् । ततश्च खेदनिबन्धनो दैवाक्षेपः । प्रथमतृतीयकल्पयोस्तु नैवम्प्रकारेण खेदोत्पादसम्भवः । द्वितीयकल्पे पूर्वोक्त-प्रकारेण खेदोत्पत्तिसम्भवेऽपि तत्रात्मपदस्य यथाश्रुतार्थपरतया "अस्रैस्तावन्मुहु-रुपचितैर्दृष्टिरालुप्यते मे" इति पंक्तेः, "तस्मिन्नपि न सहते संगमं नौ कृतान्तः" इति पंक्तेश्च सगतिः न भवति । तथाहि द्वितीयकल्पे स्वीकृतमस्ति यद् यक्षेण प्रियाचित्रनिर्माणानन्तरं यदा चित्रे आत्मपातन प्रणाममिति यावदिच्छति तदैवाश्रुपाताद् इच्छाप्रतिघात इति । परन्तु अश्रुभिर्दृष्टिलोपेऽपि का बाधा तत्रात्मपातने ? इति प्रश्नस्योत्तर द्वितीयकल्पे नास्ति । यदि च उच्यते अश्रुभिर्दृष्टिलोपात् चित्रगतप्रियाचरणावेव न ज्ञायेते, कुत्रात्मपातनं कुर्याद् यक्ष इति, तदापि इदं वक्तुं शक्यते यत् खेदकारणोपपत्तये द्वितीयकल्पे यक्षेण प्रियानिर्माणं समापितमासीदिति स्वीकृतमस्ति, तत्र प्रियाचित्रनिर्माणकाले एव चित्रगतप्रियया सह सान्निध्यरूपः संगमः यक्षस्य समभवदिति कथमुच्यते यक्षेण अग्रे "क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः" इति । तथाहि आत्मपदस्य यथाश्रुतार्थपरत्वे "तस्मिन्नपि न सहते संगममि"त्यत्र संगम-पदार्थः चित्रवहिस्थस्य यक्षस्य प्रियाचित्रेण सह सान्निध्यरूपो वाच्यः । स च चित्रनिर्माणकाले एव जात इत्यनुपपन्ना भवति तदुक्तिः । यदि च चित्रे प्रणतिरूपः संगमः उक्तसंगमशब्दस्यार्थः कल्प्यते तदा संगमपदस्य यथा-श्रुतार्थपरतानिर्वाहो न भवति, तद् वरमात्मपदस्यात्मप्रतिकृतौ तृतीयकल्पोक्त-युक्तिभिः । वस्तुतस्तु चित्रे संगमस्तावद् चित्रगतयोरेव द्वयोः सान्निध्यमिति स्वीकारः स्वारसिको भवति । एतन्मते "त्वच्चरणपतितत्वेनात्मप्रतिकृतिं रचये-यमिति इच्छाया आकारः । अयमेव कल्पः सर्वेभ्यो वरीयानिति ।

## रामनाथः तस्य आर्यालहरी विलापलहरी च

### डा० रामजी उपाध्यायः

ऊनविंशशताब्द्या उत्तरार्धे प्रादुर्भूतो रामनाथ आर्यालहरीति काव्यस्य प्रणेता पुस्तकस्यान्ते आत्मपरिचयं सरलसरलया भाषया लिखति स्म। तद्यथा—

नन्दनकाननकल्पे
भुवि कविपिककुलकलस्वनोद्गारैः।
नगरे **शान्तिपुराख्ये**
निवसति वसतौ बुधानां यः॥ ८१५
कोष-व्याकृति-काव्य-
च्छन्दोऽलङ्कार-तर्कविज्ञानम्।
योऽवाप पुण्ययशसः
श्रीनाथादग्रजादग्रे॥ ८१६
कवि **कालिदासतनयो**
विनय-सनाथः स रामनाथोऽद्य।
व्यरचयदेनां **शरशशि-**
**-वसु-वसुधा**-सम्मिते शाके॥ ८१८

एतदनुसारं कालिदासस्य सुपुत्रो रामनाथो वङ्गदेशे शान्तिपुरनगरनिवासी १८१५ शकसंवत्सरे (१८९३ ई० वर्षे) काव्यमिदं प्रणीतवान्। १८१४ शक-संवत्सरे कविनामुना विलापलहरी रचिता। तद्यथा निगदितं विलाप-लहर्या अन्ते—

मन्विभेन्दुमिते शाके विलापलहरी द्रुतम्।
निर्ममे रामनाथेन कालिदासाङ्गजन्मना॥ १०९
श्रीमतः शम्भुचन्द्रस्य चन्द्रस्येव यशःश्रिया।
मुदेऽस्तु बालिकेवैषा 'विजयस्य' सहोदरा॥ ११०

स्वकृतित्वं निदर्शयन् कविरसौ आर्यालहर्यां पुनराह—

यो वासुदेव-विजयं
विलापलहरीमपि क्रमान्निरमात्।

वेदान्तशास्त्रविषये
यस्य च कृतयो विराजन्ते ।। ८१७

उपर्युक्तविवरणै रामनाथस्य नैकविषयाणां पांडित्यं ग्रन्थकर्तृत्वं च स्पष्टमेव। रामनाथस्येमे त्रयो ग्रन्थाः कलिकातायाः प्रकाशिताः ।

कविरसौ यतीन्द्रमोहन इति विख्यातस्य महाराजस्य सहभावी बभूव। तमधिकृत्य कविना लिखितम् --

नृपतेर्यतीन्द्रमोहन-
नाम्नो धाम्नः कलाकलापानाम् ।
रचितादेशादेषा
सहृदय-हृदय-प्रमोदाय ।। आर्या० ८११

जयति महाराजोऽसौ
ठाकुर-विपुलकुलजलधि-राकेन्दुः ।
सौजन्य-जन्यममलं
स्तुवन्ति सन्तो यशो यस्य ।। आर्या० ८१२

अपरश्च कश्चित् किशोरीमोहन इति व्याख्यातो जनः कविवरस्य प्रोत्साहकोऽभवत् । तमधिकृत्य कविना वर्णितम् ---

जीव्याच्चिरं किशोरी-
मोहननामा महोदयः श्रीमान्
यस्योत्साहसमीरै-
र्मानसतो मे लहर्युदगात् ।। आर्या० ८१९

तथापि तेषां कतिपयसहायानां सद्वृत्तिभिः सर्वथा परितुष्टो नाभवत् कविवरः। अतोहि लिखित आर्यालहर्या अन्तिमः श्लोकः—

भारति सम्प्रति नाकं
प्रयाहि शम्भुरपि देवि तत्रैव ।
कविता - गुम्फन - बाधा-
बधिरैरवधीरणां मा गाः ।।

आर्यालहरी रामनाथस्याभ्यन्तरभावानां व्यञ्जिका सती तस्य व्यक्तित्वं प्रकटयति । तथा हि

गीतं सुभाषितमपि
स्तवीमि देव्याः स्तनद्वयं वाचाम् ।

आपातमधुरमेकं
चिन्तनधारामृतं चान्यत् ।। आर्या० २५

रामनाथो महाकवीनां भणितीनां परं रसास्वादको बभूव । पण्डितराज-जगन्नाथमधिकृत्य तेन स्वाभिमतं व्यञ्जितम्—

भणितिः पण्डितनृपतेः
साक्षाद्द्राक्षेक्षुमाक्षिकास्वादा ।
जीवन्तोऽपि मृतास्ते
हृदयमनार्द्रं तया येषाम् ।। आर्या० ३८

कविवरेण वाल्मीकि - व्यास - भवभूति - गोवर्धन - कालिदास - माघ - शूद्रक-सुबन्धु - भारवि - भास - बाण - रत्नाकर - बिह्लण - क्षेमेन्द्र - पण्डितराजजगन्नाथानां प्रशस्तिं कृतवान् । एतेषां कविप्रमुखाणां ग्रन्थास्तेनाधीताः स्युरिति मन्तव्यम् ।

प्रसन्न - प्रकृतिरयं कविरासीदिति निम्नाङ्कितेन श्लोकेन ज्ञायते—

सहृदयहृदयादर्शे
द्रक्ष्यसि वक्त्रं यथैव दर्शयसे ।
भ्रातर्विमृश्य ताव-
न्नयस्व कालं स्मितोल्लासैः ।। आर्या० ५९

अत्र 'भ्राता' इति पदेन कवेः स्वभावस्य साम्यप्रकृतिर्व्यज्यते ।

## आर्यालहरी

आर्यालहरी सातवाहनस्य गाथासप्तशतीति शृङ्गार-प्रधानकृतिमनुहरति । अत्रापि बहुविधनायिकानायकादीनां प्रेम-व्यापारः सरसचारुविधिना प्रकल्पितः । जगति शृङ्गारस्य प्राधान्यमिति कविना मनसि कृतम् । कवेर्दृढो विश्वासो वर्तते यत्—

सगुणा सालङ्कारा
सुपदन्यासा मनोज्ञवृत्ता च
कविता तथैव वनिता
दुर्लभमेतद् द्वयं लोके ।। ३९

अन्यच्च —

सगुणा सालंकारा
सद्वृत्ता जातिशालिनी नव्या
कण्ठे कृताच विदुषां

दयितेवेयं मुदे भवतु ॥ ८१३

कविता दयिता च लोकेऽस्मिन् मनोज्ञतमे इति कवेरभिमतम् । यदि एतयोर्द्वयो र्दुर्लभयोः सामञ्जस्यं स्यात्, तर्हि आर्यालहरी एव निष्पद्यते ।[1]

आर्या तु कवेर्बहुमता विद्यते । तन्निर्दशितमधोवाचा—

आर्याबन्धं पठितुं
पातुञ्च सरसनिबन्धमधुधाराम् ।
सम्भावयितुं भावं
भुवि विरलाः केऽपि जानन्ति ॥ ४३

आर्यालहर्या नवशत्यां प्रारम्भिक - नवतिश्लोका नैव शृंगारिताः । अतएव ते पृथगेव संहिताः संख्याताश्च सन्ति । पश्चात् शृंगारिताः श्लोकाः समारब्धाः । तेष्वपि बहवः श्लोका उपदेश - नीति - प्रार्थनान्योक्तिपराः सन्ति । प्रारम्भिकेषु नवतिश्लोकेषु आद्यास्वष्टात्रिंशति गंगा - शिव - पार्वती - श्री-सीता-हरि - गणेश - सरस्वती - कवयश्चाभिष्टुताः सन्ति । पश्चात् सत्काव्यं, गुण-दोषौ, पिशुनं, सज्जन-दुर्जनौ, मनस्विनं, प्राचीनत्वं, सहृदयं चाधिकृत्यालोचितं कविना । तद्यथा गङ्गामधिकृत्य—

स जयति जटानिरुद्धः
कपर्दिमूर्धकलिताम्भसामोघः ।
मज्जति पुनरुन्मज्जति
शफर इव सुधाकरो यत्र ॥ १

अथवा हरिमधिकृत्य—

करयुगकलितयशोदा—
स्तन-मुखविनिवेशिताधरं स्वैरम् ।
संस्मरित-पाञ्चजन्यं
पुलकित-वपुषं हरिं नमत ॥ १५
चकितः शिक्यमुपेतः

1 न खलु महदन्तरं कवितावनितयोरिति निम्नाङ्कितश्लिष्टश्लोकस्याभिव्यक्तिः —

नानाश्लेषरसाढ्या
सद्भावार्द्रा गुणोज्ज्वला सरला
अभिमतपात्रमलब्ध्वा
सीदति कविता च वनिता च ॥ आर्या० ८६

पश्यन्नभितोऽपि भीतभीत इव ।
करवदनैर्नवनीतं
हृत्वा धावन् हरिर्जयति ।। १७

देवादीनां स्तुतेः पश्चात् अकारादिक्रमेणारभ्यमाणानां श्लोकानां संहतिर्ग्रथिता । तथाहि—प्रथमात् एकाधिकशततमं यावत् श्लोकानां प्रथमो वर्णः **अ** एव वर्तते । तद्यथा—

अरुणोपरि विधुपालि—
विधुगणपरितो मुहुस्तमःस्तोमः ।
हरिपदभजनगुणोऽयं
शाबरमात्रं न कुत्रापि ।। १

अत्र 'अरुण' स्य **अ** इति प्रथमवर्णः ।

पश्चाद् **आ** वर्णारब्धाः श्लोका वर्तन्ते द्वयधिकशततमात् श्लोकात् अष्टाविंशशततमं यावत् ।

विज्ञान-विशारदस्य रामनाथस्य कल्पना - परिधौ समसामयिकविज्ञानाविष्कृतवस्तूनां परिस्फुरणमेकं परमं वैशिष्ट्यमेव । प्रायश उपमान-रूपेण तेषां समावेशः श्लोकेषु वर्तते । तथाहि

नापेक्षन्ते पात्रं
न स्नेहं न च दशान्तरं सन्तः ।
जगति सदालोकहित—
व्रता **तडिद्दीपक**प्रायाः ।।७६

अत्र तडिद्दीपकः 'बल्ब' (Bulb) एव ।

अस्तमितायास्तस्याः
स्वकण्ठगीतं तदुल्लसति ।
न्यस्तमिव कण्ठकपदात्
तव नवयन्त्रे **चिरस्वरे** दूति ।।३

अत्र चिरस्वरः 'ग्रामोफोन' (Gramophone) एव ।

कूजति कपोतमिथुनं
व्रज निजसदनं निशा गता नाथ ।
**कालनिरूपक-यन्त्र-**
ध्वनिरुच्चरति हि यथाकालम् ।।१८५।

अत्र कालनिरूपक-यन्त्रमिति 'क्लाक' (Clock) अस्ति ।

गच्छति तन्त्रसरण्या
संकेतितमंजयत्यभिज्ञेव ।
प्रथयति वार्तामपि मे
प्रणोदिता सा **तडिद्दूती** ॥

अत्र तडिद्दूतीति 'तार' (Telegraph) इति वर्तते ।

कान्ता चिन्तनचक्रै—
र्वितन्वतीयं गतागतान्यद्य ।
नूपुरशिंजितमिषतो
रटति **घटीयन्त्र-दोलेव** ॥२३४

अत्र घटी-यन्त्रदोलेति (Pendulam) (लोलकः) अस्ति

छायामात्रं तस्याः
श्रयता नयता च कल्पनोत्कर्षम् ।
**छाया-यन्त्रेणेव**
त्वयेदंमुन्मीलितं चित्रम् ॥ २८६

अत्र छाया-यन्त्रमिति (Camera) केमरा अस्ति ।

तरुण, त्वयैव कृतिना
यत्नादन्तःप्रवेशिता सुतनुः ।
छायामुररीकुरुते
**कण्ठबिलविकाशिनीवासौ** ॥ ३१८

अत्र कण्ठबिलविकाशिनीति Larynxscope नामकयन्त्रविशेषः ।

देशान्तरगतमचिरात्
पृच्छति चतुरा तदङ्गनादूती ।
इह नववाणिज, विपणौ
मिलति न वा **हिमशिलायन्त्रम्** ॥ ३५६

अत्र हिमशिलायन्त्रमिति Ice-machine वर्तते ।

नीत्वानिलसञ्चारं
स्वाङ्गुलिभङ्गचा प्रणोदिता सख्या ।
हरति स्वरलहरीभि—
र्हृदयं **हृन्मोहिनीवोच्चैः** ॥ ३६७

अत्र हृन्मोहिनीति Harmonium अस्ति ।

प्रकटय पय इव रसवति,

प्रतिहृदयं सरसमरसमथवेति ।
अनुकुर्वाणा सरसां
**क्षीराम्बुविवेकिनीमङ्कः** ॥ ४५५

अत्र क्षीराम्बुविवेकिनीति Lactometre वर्तते ।

मुञ्चसि **वि-मान**मधुना
समधिकवाष्पं प्रियं गुणाकृष्टम् ।
एषोऽम्बराञ्चलनिधि—
र्नष्टः कष्टाय ते चण्डि ॥ ५४६

अत्र विमानमिति Balloon अस्ति ।

यन्त्रिततन्त्रमनुच्चैः
समुद्घोषयस्यहो रहसि ।
**शब्दग्रहे**ण कुतुकिनि,
कान्तमुदन्तं निवेदयसि ॥ ५८७

अत्र शब्दग्रह इति Telephone टेलीफोन वर्तते ।

लघुतरमपि दयितगुणं
कलयति दयिता महत्तरं सुभग ।
प्रेमा गमयति नयनं
कक्षाम**णुवीक्षण**स्यापि ॥ ६४२

अत्र अणुवीक्षणमिति Miscroscope वर्तते ।

लाक्षाकेतुं भाले
निभाल्य शठ मन्मनोरथप्रततिः ।
नीरभसत्त्वं नीता
प्रणीतवाष्पा **रथालीव** ॥ ६४७

अत्र रथालीति Train ट्रेन एव ।

विन्दति सुन्दरि सुखमिव
वानीरवनार्पिताक्षिमधुपोऽसौ ।
**दिग्यन्त्र**-शङ्कुरनिश
धनददिशमुदीक्षते कस्मात् ॥ ६५२

अत्र दिग्यन्त्रमिति Compass वर्तते ।

शङ्के प्रोषितमपि तं
संकल्पस्ते पुरःस्थितं कुरुते ।

दूरस्थितं हि वस्तु
प्रथयति पुरतो **नलीयन्त्रम्** ॥ ६८७

अत्र नलीयन्त्रमिति Telescope वर्तते ।

सरसान्तरापि सुभग
स्वरसविकारात् तदङ्गसगेन ।
तस्या व्यनक्ति नाली
**तापमिति**र्वा-तनूत्तापम् ॥ ७०६

अत्र तापमितिरिति Thermometre अस्ति ।

सङ्घर्षमात्रजनिका—
मदृष्टचक्रभ्रमाकुलां चित्राम् ।
**लौहसरणीव** कृपणे
मनोरथालीं वृथा वहसि ॥ ७५३

अत्र लौहसरणीति Railway वर्तते ।

आधुनिक सभ्यताया अपरेऽपि शब्दाः क्वचन प्रयुक्ताः सन्ति । अधोलिखिते श्लोके Ball Dance इति योरपीयस्य नृत्यविशेषस्य चर्चा विद्यते —

रङ्गिणि, फिरङ्गिवेशं
रमय तवेशं तदिङ्गिताचरणात् ।
किं ते कलोचितं यद्
**बलाख्यलास्यं** प्रकल्पयसि ॥ ६१७

आधुनिकसभ्यतायाः शब्दानामुपर्युक्तैः प्रयोगैः काव्यगाम्भीर्यस्य कापि हानिर्न प्रतीयते, प्रत्युत तैरेव काव्ये किञ्चिदपूर्वं वैशिष्ट्यं सम्पादयति कविः ।

रामनाथस्य शृंगार - विहीनाः श्लोकाश्चमत्कारपूर्णाः सन्ति । तथाहि सेवावृत्तिं भर्त्सयन् स प्राह—

सेवा श्ववृत्तिरुदिता
यैरिह नहि तैरुदाहृतं सम्यक् ।
कुत्र श्वा निजतन्त्रः
परतन्त्रः सेवकः क्वासौ ॥ ७३८

परोपकारस्योदात्तगुणोपेतत्वं स वर्णयति—

सत्पुरुषाणां वित्तं
शैत्यं चन्द्रस्य दिनमणेरौष्ण्यम् ।
वारि च वारिधराणां

क्लृप्तानि परोपकाराय ॥ ७६२

कीदृशाः सन्ति ते महात्मानः इति

पापं तीर्थं तापं
चन्द्रो दैन्यं सुरद्रुमो हरति ।
पापं तापं दैन्य
हरन्ति सन्तो महात्मानः ॥ ४६०

जायाद्वयासङ्गस्तु भयङ्कर एवेति

बाह्याभ्यन्तरगतयो-
र्बिलस्य मार्जारभुजगयोरन्तः ।
आखुरिवासौ पुरुषो
विभाति जायाद्वयासङ्गः ॥ ५२८

यशसा भाव्यमिति

शौर्ये शीले दाने
विद्यायामर्थसंग्रहे वापि ।
यस्य यशो न प्रथितं
तस्येह निरर्थकं जन्म ॥ ६६८

उपदेशस्तु तत्र वर्तते

अपनय पिशुनामर्षं
दर्शय तर्षं परोपकारेऽपि ।
अनिलतरल - नलिनी - दल-
जलकणमिव जीवनं विद्धि ॥ ६४
काल-प्रवाह-पतितो
लोकः स्थिरतामयं कथमुपैतु ।
क्षणमपि परोपकारं
यदि गच्छति स खलु सारोऽस्य ॥ ६५
नित्यमुपजायमानं
विवर्तमानञ्च दृश्यते विश्वम् ।
स्वस्य तु तथा न पश्यति
मूढतया विपदमपि लोकः ॥ ६६

कोऽयं जनः स्वतन्त्रो भवतीति कवेरभिमतं स्वीकरणीयम्

परलोकभयं लोकाद

अपत्रपा कीर्तिसंग्रहे रागः ।
पुंसस्त्रितयं बन्धनम्
अस्मान्मुक्तः खलु स्वैरी ॥ ६७

रामनाथस्यान्योक्तयः प्रभावशालिन्यः सन्ति । तथाहि—

सुरभितसकलवनान्ते
मल्लीप्रान्ते च चम्पकोपान्ते
वितरसि कटुरसगन्धं
निम्ब, न लज्जां कथं कुरुषे ॥ ७१७
स्वच्छा भवसि सुवृत्ता
रत्नाकर-गर्भतोऽपिजातासि ।
गुण-गुम्फितापि मुक्ते
वहसि भृशं कठिनतां किमिति ॥ ७३०
हंस सरोरुहचक्रे
संचर चर चक्रचंक्रमं त्वमपि
अस्यामन्दमरन्दं
रसति हि रसयन् मुदा भृङ्गः ॥ ७८१

स्वकाव्यं पर्यालोचयन् कविः प्राह—

नवनवसदुक्तिकुसुमैः
सुकुमारैः संकुलान्तरा विमला ।
सुरसार्यालहरीयं
सरसयतुतरां मनः सहृदाम् ॥ ८१
यदि काव्ये सन्तोषं
बिभ्रति सन्तः पुराणमित्येव
अस्यामेव पुराण-
प्रतिभामाहृत्य तुष्यन्तु ॥ ८५
अवधेहि क्षणमेहि
भ्रातर्भावुक विभावय गिरं मे ।
चरमे चकास्ति चित्ते
मूकस्वप्नोपमो भावः ॥ ८७

आर्यालहरीति काव्यमाधुनिकसंस्कृतकाव्यस्यैकानुत्तमा कृतिर्विराजते । कवेः सरला भाषा, सार्वकामिका भावाः, लोकोपकारिणी दृष्टिश्च काव्यस्य

उच्चैः पदं प्रतिष्ठापयन्ति ।

## विलापलहरी

रामनाथेन वासुदेव-विजयस्य पश्चात् विलापलहरी विरचिता । काव्येऽस्मिन् मातुः पृथिव्याः पुत्रशोकस्य कारुणिकं वर्णनं प्रमुखं विद्यते ।

**कथानकम्**

नरकः पृथिव्याः पुत्र आसीत् । तस्य पिता स्वयं कृष्णो विष्णुरेवासीत् । तस्य दुःखदप्रवृत्तिभिः लोको भृशं पीडितः । पश्चात् कृष्णः तं हतवान् । पृथिवी तत्र युद्धस्थलं समागत्य स्वपतिं मुरारिमवदत्—

दत्तं पवित्रं यदि पुत्ररत्नं
हरे कथं वा हरसि क्षणेन ।
प्रदाय किञ्चित् पुनराददानो
बालस्य लीलामुररीकरोषि ॥ ८

सा तमधिक्षिपन्ती प्रोवाच

पैशुन्यमेवं न च ते नवीनं
विनष्टवत्सप्रमुखासुरस्य ।
स्तनं दिशंती जननीव साक्षात्
सा पूतना पूर्वनिदर्शनं मे ॥ १२
हा कंसनाशिन् यदुवंशदीप,
नृशंसकृत्यं व्यतनोः सुतेऽपि ।
रक्षः कुलोत्सारण, ते रणार्थम्
अकाण्डकण्डूः शमिता किमद्य ॥ ३९

माता रोदिति—

शीलानि ते चन्दनशीतलानि
श्रुतानि तावद् भुवि विश्रुतानि ।
तथापि मामेकपदे विहाय
हा हाधुना पुत्र कथं प्रयासि ॥ ४८
आगच्छ शीघ्रं सुत सज्जितानि
भक्ष्याणि साक्षादमृतोक्षितानि ।
आदाय बालव्यजनं वधूर्मे
पन्थानमुत्पश्यति कातराक्षी ॥ ६२

माता पृथिवी स्वपुत्रस्य नरकस्य केवलं गुणान् वर्णितवती, न तु दोषान् ।

तत्संलक्ष्य कविः प्राह

नैवात्र चित्रं यदियं धरित्री
विचित्रयामास सुतस्य चित्रम् ।
दोषान् पिधायैव गुणान् वितन्वन्
स्नेहो गरीयान् मुखरीकरोति ।। ७७

तस्याः शोकवचनानि, अधिक्षेपांश्च श्रुत्वा कृष्ण उवाच

मा देवि दावच्छविना विनाशं
नयस्व शोकेन विवेकवल्लीम् ।
हन्ता न कालो न मृतिर्न चाहं
सुतो हतस्ते निजकर्मणैव ।। ८१
गृहान् गृह्णाण प्रमुषाण रत्नं
हरस्व दारान् प्रणयस्व काराम् ।
इत्थं मुहुर्मोहवशात् प्रसह्य
व्यबाधतासौ बहुधा सुधाशान् ।। ८२

माता सुतस्य, पुनर्जीवनमयाचत । कृष्ण उवाच

विहारभूमौ सुरसिन्धुतीरे
प्रसादतोऽसौ भविता हरस्य ।। ९७
सदाप्रियोऽसौ मधुसूदनस्य
कामाख्यया दत्तवरप्रसादः ।
प्रतापघोषोदितपापकीर्तिः
सन्तापयिष्यत्यनिशं कवीन्द्रान् ।। १०१

अनेन वाक्येन विलापलहर्याः प्रासङ्गिकोद्देश्यं स्पष्टं प्रतीयते ।

तत्रैव नरकस्य पत्नी कशेरुः समागता । सापि विललाप—

श्रितोऽप्यजस्रं विशिखव्रणौघैः
स्फुरन्नखाङ्कैरिव शौर्य-लक्ष्म्याः ।
प्रसीद मां मंक्षु परिष्वजस्व
न मानिनीश त्वयि वंचितास्मि ।। १०३

विलाप - लहरीयं करुणरसस्य सफला कृतिः ।

# पर्वणीकरा नारायणभट्टाः तेषां कृतित्वञ्च

## डा० प्रभाकर शास्त्री

राजस्थानप्रान्तस्य राजधानी 'जयपुरनगरी' संस्कृतसाहित्याभिवर्द्धनेन विश्रुतेति, नात्र संशयलेशावकाशः। अत्रत्याः शासकाः संस्कृत-संस्कृतिपोषका आसन्। तेषु शासकेषु केचन भारतीयेतिहासेऽपि परां प्रसिद्धिं प्राप्नुवन्तः, येषां नामानि मिर्जाराजा मानसिंहः प्रथमः, मिर्जाराजा जयसिंहः प्रथमः, सवायीतिपदधारको जयसिंहो द्वितीयः, मिर्जाराजा रामसिंहप्रथमः सवायीरामसिंहो द्वितीयश्च वर्तन्ते। एभिः सुशासकैर्बहवो विद्वांसः ससम्मानमाहूताः, जयपुरनगरे च प्रतिष्ठापिताः। एषु विद्वत्परिवारेषु पर्वणीकरोपनामा एकः परिवारो जयपुरे सुप्रसिद्धो वर्तते।

जयपुरसंस्थापकस्य महाराजजयसिंहस्य (द्वितीयस्य) पिता महाराजो विष्णुसिंहः (विशनसिंह १६८८–१६९९ ई०) आमेरनगरी शशास। तत्रैकदा माधवभट्टनामा कोऽपि विद्वान् महाराष्ट्रप्रदेशात् विभ्रमन्नाजगाम। श्रीविष्णुसिंहः तं स्वपुत्रद्वयाध्यापकरूपेण नियोजितवान्। श्रीविष्णुसिंहस्य विजयसिंहो जयसिंहश्चेति द्वौ पुत्रावास्ताम्। राजगुरुपदं स्वीकुर्वता श्रीमता माधवभट्टेन एतदपि निश्चितं यत् सर्वेऽपि वंशजाः पुत्रपौत्रप्रपौत्रादयः क्रमानुसारं तत्तत्कालिकानां शासकानां गुरवो भविष्यन्तीति। ततश्च सेयं परम्परा अद्यावधि निरवच्छिन्ना आसीत्। एतेषां कृते एभ्यो यत् किमपि दानादिकं दत्तं, तस्योल्लेखनं पुरातनलेखेषु 'साहै बकाया 'रजिष्टर दस्तूर कौमवार" नाम्नि प्राचीनाभिलेखे प्राप्यते।

सवायीति पदधारको जयसिंहस्तृतीयः (१८१८–१८३४ ई०) जयपुरं नातिचिरं शशास। तस्य शासनकाले श्रीसखारामः सीतारामश्च द्वावपि विद्वांसौ उल्लेखनीयौ वर्तेते। अनयोरपि श्रीसीतारामभट्टस्तु महाकवेः कालिदासस्य कुमारसम्भवमहाकाव्यस्य अष्टमसर्गतः समाप्तिपर्यन्तं टीकाकर्तृरूपेण विश्रुत एव। एतदतिरिक्तं श्रीमतां बहवः कृतयः सन्ति, यासामुल्लेखन निम्नाङ्कितात् श्लोकादवगन्तुं पार्येत-

"टीकासंयुतकाव्यपंचकमथ स्तोत्रादिदिक्संख्यका –
न्येकश्छन्दसि चैक एव भणिते साहित्यशास्त्रे भयः।

प्राक्काव्यद्वय - टिप्पणीद्वयमिति ग्रन्थावलीसंगता
सीतारामकवेः कृतिः कृतिगले नक्षत्रमालायताम् ॥"[1]

श्रीसखारामभट्टस्य एक एव पुत्रः श्रीगंगारामभट्टनामा आसीत् । सन्ततेरभावात् श्रीमद्‌भिः ग्वालियर - नगरे निवसतां स्वगोत्रीयानां पं० महादेवभट्टपर्वणीकराणां प्रपौत्रः, श्रीकिशनभट्टस्य पौत्रः, श्रीगोविन्दभट्टस्य पंचमः पुत्रः श्रीनारायणभट्टो दत्तकपुत्ररूपेण स्वीकृतः । ततश्च नाम्नः परिवर्तनमपि संजातम् । श्रीमन्तो लक्ष्मीनारायणनाम्ना विश्रुतास्ते अभवन् । श्रीमतां वंशवृक्षोऽत्र प्रस्तूयते—




[1] श्रीसीतारामभट्ट-पर्वणीकर-विषये एकं शोधपत्रं राजस्थान-विद्यापीठ-साहित्य - संस्थान (उदयपुर) द्वारा समायोजितायां शोधगोष्ठ्यां मया पठितम्– शोधगोष्ठ्यंके च प्रकाशितम् । सेयं गोष्ठी दिसम्बरमासस्य अन्तिमसप्ताहे १९६५ तमे वर्षे समभवत् ।

[2] स जयसिंहस्य गुरुः (१६९९–१७४३ ई०)

श्रीनारायणभट्टानां जामातृमहोदयेन श्री बालकृष्णपति-वाजपेयिना आग्ल-भाषायामेको निबन्धः प्रकाश्यता नीतः १९१६ ख्रिष्टाब्दे, तत्र श्रीमतां नारायणभट्टानां परिचयादिकं विवेचितमस्ति। सम्प्रति विद्यमानानां राजगुरूणां श्रीमतां माधवरावभट्टाना निर्देशानुसारि, श्रीमतां नारायणभट्टानां जीवनपरिचय-रचनात्मकादिवर्णन क्रियते।

## जीवन-परिचयः

चरितनायकस्य जन्म लश्कर (ग्वालियर) नगरे आश्विनकृष्णपञ्चम्यां १९१२ वैक्रमाब्दे (ख्रिष्टाब्दे-१८५५) प्रात. अष्ट-वादन-समये समभवत्। श्रीमतां पितरौ श्रीगोविन्दभट्टः श्रीमती चिन्नादेवी च आस्ताम्। माता प्रसिद्धस्य विश्वरूपपरिवारस्य कुलीना विदुषी आसीत्। श्रीमतां पूर्वजा दक्षिणहैदराबाद-प्रान्ते 'पाथरी-परमनी' ग्रामस्य निवासिन आसन्। श्रीमतां पितृचरणा गोविन्दभट्टा अतः पूर्वं झासीनगरमुवास। ततश्च ग्वालियरमाजगाम। तत्कालीनः शासक 'आलीजाबहादुरः जयाजीराव सिन्धिया' इति ख्यातः, गोविन्दभट्टानां शिष्योऽभूत्।

## अध्ययनम्

आकृत्या सुन्दरः प्रतिभा - सम्पन्नो नारायणो बाल्ये पंडितधान्धू-शास्त्री - "बाबा" महादयेभ्यो व्याकरणशास्त्रं पठितवान्। अष्टमवर्षावधि आ यज्ञोपवीतं लघुकौमुदीं शब्दधातुरूपावलिं, द्वादशसर्ग यावत् रघुवंशम्, पुरुषसूक्तम्, रुद्रसूक्तम्, श्रीसूक्तञ्च अधीतवान्। भवता बालमित्रेषु श्रीकाशीनाथ-शास्त्रिणो द्राविडाः जयपुरीयसंस्कृतकालेजे व्याकरणाध्यापकाः परतश्च दिगम्बर-जैनकालेजे (जयपुरे) प्राचार्याः, धाराकोटनिवासिनो वैयाकरणाः श्री त्र्यम्बक-शास्त्रिणः, लश्करराजकीयमहाविद्यालये व्याकरणाध्यापकाः श्री बल्लूशास्त्रिणश्च नितरां विश्रुताः संति। चतुर्दशवर्षे वयसि एकदा ग्वालियरस्य पुरातने दुर्गे विद्यमानानां प्राक्तनशिलालेखानामनुवादो विहितस्तत्रभवता नारायणभट्टेन, यत्कृते आंग्लाः प्रयतमाना आसन्। सर्वञ्चैतत् कार्यं षड्भिः दिवसैः पूर्णता नीतम्। प्रसन्नेनाङ्गल-शासनेन शतं पुरस्काररूपेण प्रदत्तम्। आसीदियं पैत्रिकी प्रतिभा निसर्गत एव। श्री गोविन्दभट्टानां 'ललिताकरुणाष्टक, दुर्गापुष्पांजलिश्च' द्वे रचने प्रसिद्धे। श्री गोविन्दभट्टेन क्रमश परिणीते द्वे भार्ये, ययोः द्वितीया 'दत्तैह'स्थ (बुन्देल-खण्डीया) धर्माधिकारिवंशोद्भवाऽऽसीत्। पञ्चदशवर्षात्मके वयसि नारायणभट्टो द्विसप्ततिवर्षात्मकस्य श्रीगोविन्दभट्टस्य (पितुः) सकाशादपि अधीतवान्। स्वर्गते च पितरि ज्येष्ठभ्रातुः संरक्षणे निवसन् स्वाध्यायं कुर्वन् षोडशवर्षात्मके वयसि

'रसिकाष्टकम्' दुर्गास्तोत्रञ्च निरमायि । एते द्वेऽपि निर्णयसागरमुद्रणालयात् प्रकाशिते मोहमयीतः ।

## जयपुर-समागमनम्

श्रीगंगारामभट्टपर्वणीकरेण श्री नारायणभट्टं कैशोरके वयसि पुत्रत्वेन वरितुं मनसिकृतम् । परन्तुदुर्भाग्यवशात् स्वीयां वांछामपूरयन्नेव सहसा धर्मराजनिकेतनातिथिः संजातः । उपरते च निःसन्ताने गंगारामभट्टे महती चर्चा प्रारब्धा पीठाधिकारिणः पदस्य ।

तेषां मरणोत्तरक्रियाविधान (will) पत्रानुसारं नारायणभट्टो जयपुरं समानीतः । सवायीरामसिंहो द्वितीयस्तदा जयपुरं शशास । पश्चात् यथानिर्णयं राजगुरुपदमुद्वहन् नाम्ना लक्ष्मीनारायण इति स विख्यातोऽभवत् ।

जयपुरे समागत्य अधीष्णुः सोऽयं बालः सुप्रसिद्धानां श्रीजानकीलाल-चतुर्वेदिनां निर्देशानुसारं 'सिद्धान्त-कौमुदीं' लघुशब्देन्दु-शेखरं, परिभाषेन्दुशेखरं, महाभाष्यं भूषणञ्च पठितवान् । न्यायकेसरी श्रीजीवनाथो झामहाभागो न्यायशास्त्रस्य तस्याध्यापक आसीत् । सांख्यशास्त्रीयग्रन्थानामपि अध्ययनं झामहोदयानां सान्निध्ये स चकार । श्रीचिमनशास्त्रिणो ज्योतिषविद्याया गुरवस्तस्य विख्याताः । आयुर्वेदं स राजवैद्यगंगाबक्शमहोदयेभ्यः पठितवान् । धर्मशास्त्राध्ययनं गुरोरभावात् स्वयमेव चकार सः । क्रमशश्च मन्त्रतन्त्रादि-विद्यानामपि कृतमनुशीलनं तेन ।

## सुहृन्मण्डलम्

नारायणस्य मित्रमण्डले भारतविख्याता विद्वांस आसन् तेषु महाराजसंस्कृत-कालेजीयाः प्राचार्याः, महामहोपाध्यायाः श्री दुर्गाप्रसादशास्त्रिणो द्विवेदाः, श्रीकाशीनाथशास्त्रिणो द्राविडाः, महामहोपाध्यायाः श्रीशिवदत्तशास्त्रिणो दाधि-मथाः लट्टूपाख्याश्च परं प्रसिद्धाः परिगणनीयाः । खिष्टाब्दे १८८५ ई. तमे महामहोपाध्यायैः श्रीदुर्गाप्रसादशास्त्रिभिः काव्यमालायाः प्रकाशनमारब्धं तेषां साहाय्येन ।

# रचनात्मकं कार्यम्

रचनाबाहुल्यादत्र पर्वणीकरमहोदयानां रचनावलिः प्रस्तूयते, न तु सर्वासां विवेचनम् । दिङ्मात्रमुदाहरिष्यते च परतः कासाञ्चित् ।

### (क) साहित्यम्

१. पद्यपञ्चाशिका २. संस्कृत-श्लोक-शतक-संग्रहः ३ स्वमित्रश्लोकसंग्रहः
४. नवीनश्लोकसंग्रहः ५. काव्यविभूषणशतकञ्च ।

(ख) **व्याकरणम्**—१. चतुर्दशसूत्रीव्याख्या २. श्लोकबद्धा सिद्धान्तकौमुदी ३. परिभाषा-प्रतिच्छविः ४. शब्दशास्त्रप्रशस्तिश्च ।

(ग) **धर्मशास्त्रम्**—१. आपस्तम्बाह्निकपद्धतिः २. प्रयोगरत्नम् ३. और्ध्वदेहिक-पद्धतिः ४. अन्त्येष्टि-पद्धतिः ५. तुलादान - पद्धतिः ६. आह्निक - पद्धतिः ७. धर्मकल्पलतावृत्तिः ।

[घ] **स्तोत्र-साहित्यम्**—(१) उमालुप्तोपमाष्टकम् (२) कृष्णसहस्रस्तवः (३) गगानक्षत्रमाला (४) गोपाललीला (५) दुर्गानीराजनस्तोत्रम् (६) दुर्गास्तवः (७) नीलसरस्वती - स्तोत्रम् (८) नृसिंहनतिपञ्चकम् (९) पञ्चायतनकवचम् (१०) मुकुन्दनतिपञ्चकम् (११) रामस्तवः १२) कोटेश्वरशिवस्तुतिः (१३) श्रीशषट्पदी (१४) श्रीशावतारस्तवः (१५) सप्तस्वरूपस्तवः (१६) सत्यनारायणस्तोत्रम् (१७) सौभाग्य-विद्यास्तवः (१८) कल्याणदशकम् इत्यादि ।

[ङ] **न्यायशास्त्रम्**— तर्ककन्दुकम् ।

[च] **ज्यौतिषशास्त्रम्**— ज्यौतिषशास्त्रार्थसंग्रहः ।

[छ] **कामशास्त्रम्**— अनङ्गरंगोदयस्थलम् ।

[ज] **तन्त्रमन्त्रसाहित्यम्**—वाञ्छाकल्पलताविधिः ।

एवं सम्पूर्णविषयाणा ग्रन्थसंख्या ३८ वर्तते । एता रचना जयपुरस्थ-पर्वणीकरसंग्रहालये (हस्तलिखितग्रन्थाकारे) उपलब्धाः सन्ति । तासु काश्चन मयापि पठिताः, तासां दिङ्मात्रविवेचनमत्र प्रस्तौमि ।

(१) **पद्य-पञ्चाशिका**—पञ्चाशत् पद्यानामिदं काव्यम् । अस्मिन् काव्ये मात्रिक-वर्णिक-छन्दांसि प्रयुक्तानि । शार्दूलविक्रीडितस्य १०, शिखरिण्याः २, मन्दाक्रान्तायाः २, पृथ्व्याः २, मालिन्याः २, प्रहर्षिण्या एकम्, वंशस्थस्य द्वे, उपजातेः पंच, अनुष्टुपः चत्वारि, कमलबन्धस्यैकम्, आश्रयगतिबन्धस्य पञ्च, मुरजबन्धस्य त्रीणि, एवं पंचाशत् पद्यानि सन्ति । मात्रिकछन्दःसु आर्या गीतयश्च वर्णिताः । ग्रन्थारम्भे पद्यमिदं वर्तते:—

**शार्दूलविक्रीडितम्**—

"हेरम्बं प्रियया प्रियाननदृशं याऽऽलिङ्गिते लज्जया
तिर्यग्भूतमुखेन खे नहि नहीत्येवं वदन्त्या प्रियम् ।
ग्लौर्मौलिर्न शशाङ्क एष इति तत् काव्यंधिया चिन्तयन्
चुम्बन्तं रभसा स्मितमविदधीत् ध्याये स्थितं स्वासने ।"

**ग्रन्थसमाप्तौ च**—

"सप्ताप्तो हिमसमये नित्यः सेव्यः पकारसमुदायः ।
पातालं पानीयं पवनः पत्रं पयः पराठा च ॥
विंशत्यब्दवयस्केन कृता मुग्धधिया मया ।
पद्यपंचाशिका ह्येषा प्रीयतां राघवस्तया ॥"

इति श्रीमत्पर्वणीकरोपनामक - श्रीमद्गंगारामभट्टसूनुश्रीमन्नारायणविरचिता गद्य-पंचाशिका समाप्ता ।

(२) **रसिकाष्टकम्**· प्रथमा कृतिः सेयं षोडशवर्षात्मके वयसि प्रस्तुता केवलमष्टपद्यात्मिकैव। ग्रन्थस्य प्रारम्भे पद्यमिदं शोभनं शृङ्गारितं मनोहारि चास्ति

बाले काञ्चनकुम्भवत् कुचयुगं वक्षःस्थले क्रीडति
त्वन्नेत्रे नवनीरजे विचरतः कान्ते तिरश्चीन इव ।
विद्युद्वन्नवयौवनं खलु तवावेह्य (क्ष्य) स्थिरं सत्वरं
कालेऽस्मिन् रसिकं समीक्ष्य मधुरं मे देहि दानं तनोः ॥१॥

समस्यापूर्ति कर्तुमनाः श्रीनारायणोऽष्टभिः श्लोकैः रसिकाष्टकमिदं रचितवान्। समाप्तौ ग्रन्थस्याध्ययनस्य फलमपि विवेचयति—

एतत् श्रीरसिकाष्टकं रसविदामानन्दगद्द्योतकं
यच्छ्रुत्वैव कुरंगसुन्दरदृशो वश्यं प्रयान्ति हि तत् ।
कान्तास्यार्पितदृङ् मुदामलमना नित्यं पठेद्यो नरः
तं मुग्धा रतिभंगकोपकुपिता भूयात् प्रसन्ना चिरम् ॥

लेखनकालोऽपि संसूच्यते कविना—

षोडशाब्दवयस्केन कृतं मुग्धधिया मया ।
दयालवः प्रपश्यन्तु पण्डिता रसिकाष्टकम् ॥
चन्द्राम्नायनवेन्दुसम्मितसमा वैशाखमासेऽर्जुने
पक्षे शम्भुतिथौ सुरेज्यदिवसे सर्वोपकारार्थकम् ।
गंगारामसुतेन दत्तकतया तेनैव नारायणे-
नेदं स्वेनकृतं स्वयं विलिखितं काव्यं जयाद्ये पुरे ॥

अनेन स्पष्टमाभाति यदिमां कृतिं स जयपुरे समागत्य लिलेख । समयनिर्देशिका प्रथमापंक्तिः संदिग्धा वर्तते । चन्द्र=१, आम्नाय=४ (श्रुतिः स्त्री वेद आम्नाय-इत्यमरः), नव=९, इन्दु=१," अङ्कानां वामतो गतिः" नियमानुसारं १९४१ संवत् भवति। परं विचारणीयमिद यत् वैक्रमे १९४१ तमे वर्षे नारायणभट्टानामायुरूनत्रिंशात्मकमासीत् जन्मनः । १९१२ वैक्रमेऽब्दे संभवात् । यदि षोडशाब्दवयस्केनेदं रचितं तदा, १९२८ वैक्रमाब्दस्योल्लेखनं भवेत् ।

**(३) संस्कृतश्लोकशतक-संग्रहः**— सन्दिहानेयं कृतिः श्रीनारायणभट्टानां स्वरचिता उत संकलनात्मिका । ग्रन्थनाम्ना तु संकलनात्मकत्व मंसूच्यते, परं स्वयं लेखकेन लिखितम् ।

"अथ संस्कृतश्लोकसंग्रहः शतकबद्ध प्रारभ्यते । पर्वणीकरोपनाम्ना नारायण-भट्टेन **स्वयं क्रियते लिख्यते च**" विवेकिनो विद्वांसः स्वयमेव विचारयन्त्वत्र । पद्यमेक प्रस्तूयते संग्रहस्य

"अभ्युत्थानमुपागते गृहपतौ तद् भाषणे नम्रता
तत्पादार्पणदृष्टिरासनविधिस्तस्योपचर्या स्वयम् ।
सुप्ते तत्र शयीत तत्प्रथमतो जह्याच्च शय्यामिति
प्राग्भिः पुत्रि, निवेदिताः कुलवधूसिद्धान्तधर्मा अमी ॥ ५

अत्र स्वदुहितरमुपदिशति जनकः श्वशुरगेहे कथं समाचरितव्यमिति ।

**(४) स्वमित्रश्लोक संग्रहः** — महत्त्वपूर्णमिदं काव्यमपूर्णं लभ्यते इति खेदावहः । स्वमित्राणां सुशोभनान् श्लोकान् संगृह्य एकत्र संस्थापनस्यायं प्रयासो दृश्यते । अस्मिन् (१) श्रीकाशीनाथशास्त्रिद्राविडानां (२) श्रीशारदा-नन्दनोपाह्वानां श्रीविश्वनाथदीक्षितानां (३) वैद्य श्रीकृष्णभट्टानां (४) सम्रा-डुपनाम - बैजनाथ दीक्षितानां (५) तैलंगभट्टानां श्रीकृष्णशास्त्रिद्राविडानां (६) श्रीमतां लक्ष्मीनाथ-शास्त्रिद्राविडानां (७) श्रीराममाथशास्त्रिणां (८) महा-महोपाध्यायश्रीशिवदत्तशास्त्रिणां (९) चित्पावनोपनाम्नां श्रीगंगाधरराव-महोदयानां (१०) ज्योतिर्विदा श्रीशंकर शास्त्रिद्राविडानां (११) श्रीजीवनाथ ओझा महोदयानाञ्च पद्यानि संगृहीतानि । प्रारम्भे लिखितमिदं पद्यम्—

"श्रीपर्वणीकरोपाख्य - नारायणमनीषिणा ।
क्रियते लिख्यते चैव स्वमित्रश्लोकसंग्रहः ॥

पद्यस्यास्य परतः मंगलाचरणात्मको श्लोकः—

सम्प्रत्यस्मि तवाधिकः प्रियतमे वक्त्राम्बुजैर्जातुचित् ।
क्रोडीकृत्य षडाननं गिरिसुतामित्यालपन्तं शिवम् ॥
तातैषापि कराम्बुजैस्त्वदधिकेत्युक्त्या परास्तं चरन् ।
गौर्यङ्कास्थित ईशसुनुरनिशं कल्याणकर्तास्तु नः ॥

ततश्च—"तत्र तावत्परममित्र-द्राविड काशीनाथ-शास्त्रिणः" पद्यानां संग्रहः प्रस्तुतः । एवमेव अन्येषां विदुषामपि । केचन श्लोकाः प्रस्तूयन्तेऽत्र मनो-विनोदाय—

पीयूषाम्बुकलाविलासितमहामौलिप्रदेशस्फुरद्

भृङ्गाकारजटागुहातरलसद् भागीरथी - भूदितः ।
इन्द्रोपेन्द्रचतुर्मुखादिदिविषत् संस्तूयमानो भृशं
भक्तानामभयंकरो भवतु वो भव्याय नित्यं भवः ।।

अथ **'शारदानन्दनोपाह्व-विश्वनाथदीक्षितस्य'**—

अमोघो नीरौघोहृतजगदघौघो विजयते
यतेतैनं को न त्रिजगति मघोनापि सदृशः ।
यतीनां योगौघो भवति ननु मोघो यदधुना
धुनोति व्यामोहं पुलिन-हृलिकानामपि च यः ।। ६०

**वैद्यश्रीकृष्णराम-भट्टस्य**

भूपालाविव यत्र 'रामभजन' श्रीजीवनाथा'भिधौ
भ्रातः श्रीशिवराम 'भायि' विबुधोत्तंसावमाल्यानिव ।
'भैयाजि' 'नरहरी' 'द्विधा' शिव तथा श्रीकृष्ण कृष्णात्रिमौ
गीर्भी 'रामकुमार' 'वद्रि' 'हरयः प्रौढा महोष्ट्रा इव ।।"

पद्येऽस्मिन संकेतितानि नामानि तदा विद्वन्मूर्धन्या आसन् । ते रामसिंह-द्वितीयेन च ससम्मानमाहूताः संस्कृत-कालेजस्य विभिन्नेषु पदेषु समासीना संस्थापिता आसन् ।

**सम्राजः श्री बैजनाथदीक्षितस्य शर्मणः**

कोऽब्धौ शेते राक्षसेन्द्रस्य हन्ता को वा केन प्राप्यते स्वर्गलोकः ।
शब्देऽव्यक्ते वाचकः कः शताब्दं वर्णैराद्यैः सिद्धनामा स जीव्यात् ।

(नारायण-भट्ट इत्यर्थः)

एवं दिङ्मात्रप्रदर्शनेन श्रीमतां नारायण-भट्टानां वैदुष्यं प्रतिभा च स्पष्टमाभातः ।

# धर्मसूरिः तस्य साहित्यरत्नाकरश्च

श्री के० राजन्नशास्त्री

निखिलशास्त्रनिष्णातः पण्डितमण्डलमण्डनायमान. महाकविः श्रीधर्मसूरिः - लोकोत्तर-गुणोत्तर-श्रीरामभद्रपुण्यश्लोकमुपकीर्त्य निजकवितां चरितार्थयामास। श्रुतिपथमतिथीक्रियतां तस्येयमुक्तिः—

"भो मातः ! कविते ! हितं मम वचः किञ्चित् समाकर्णय
श्रीमद्रामगुणस्तवामृतवती मर्त्यस्तुतिं मा कृथाः ।
कस्तूरीघनसारचन्दनरस — न्यासोत्सवास्वादवित्
को वा विस्रवसाप्रपूयपिशितालेपाभिलाषी भवेत् ।"

साहित्यरत्नाकरे १०।६४

सोऽयं धर्मसुधी नैकविध-साहित्यप्रक्रियासु सिद्धहस्ततां प्रदर्श्य विद्वद्भावुकानां मनःप्रमोदं विदधानः साहिती - प्रपञ्चे चिरस्मरणीयतामभजदित्यत्र न संशयावकाशः । अथेदं प्रस्तूयते—यदयं धर्मसुधीः कुत्रत्यः किंसामयिकः किंवंश्यः काश्चास्य कृतय इत्यादि ।

**जन्मस्थानम्**

धर्मसूरिरयं स्वजन्मना कृष्णानदीतीरस्थं "पेदपुलिवर्रु" - ग्रामं विभूषयाञ्चकार । श्रूयते चाद्यापि एतद्वंश्यास्तत्र निवसन्तीति । हरितसगोत्राश्च ते धर्मसूरिणमम स्वमूलपुरुषत्वेन समाचक्षते, यतश्च तेषां सन्ध्यावन्दनकर्मणि आनुवंशिकतया विधीयमाना ध्रुवोपस्थानादिविशेषाः पण्डितवंश्यत्वम्, अन्यत्रत्येभ्यो हरितसगोत्रेभ्यो वैलक्षण्यं च ख्यापयन्तीति च ।

**कालः**

कविवतंसेनानेन स्वसाहित्यरत्नाकरे सर्वज्ञसिङ्गभूपाल विरचितरसार्णवसुधाकरादेकं पद्यं समुद्धृतम् । यथा—

"तत्राद्यो भूपालेनोक्तः (रसार्णव० रसिकोल्लासे श्लोक २२१)—

युवानौ यत्र संक्षिप्तान् साध्वसव्रीडितादिभिः उपचारान् निषेवेते स संक्षिप्ता इतीरितः ॥" इति (साहित्य० रत्ना०)

तथा च चतुर्दशशताब्दोत्तरार्ध-(१३६०-१४००) वर्तिनः सर्वज्ञसिङ्गभूपालादर्वाचीनोऽयं कविवर्यो धर्मसूरिरिति निश्चीयते । अथास्योत्तरावधिर्निर्धार्यापि

निश्चयधियमनुधावति ।

केचित्त्वभिप्रयन्ति-यद् "दोनूरुकोनेरुनाथ" कविविरचितमस्ति बाल-भागवताख्यं काव्यद्वयमान्ध्रभाषायाम् । तत्रैकं द्विपदच्छन्दोबद्धम् । अन्यच्च पद्यमयम् । प्राय एतद्धर्मसूरिप्रणीतबालभागवतकाव्यस्य आन्ध्रानुवादरूपं स्यात् तदेतत्काव्यद्वयमिति धर्मसुधीः षोडशशताब्दपूर्वार्धे [१५४७ इ०] विद्यमानात् कोनेरुनाथ-कवेः प्राचीन इति । तथापि धर्मसूरिकृत-बालभागवतकाव्यमेव नाद्य यावदुपलब्धम् । उपलभ्यते तु पद्यद्वयमेव तत्रस्थं साहित्यरत्नाकर-नरकासुरविजय-व्यायोगयोः समुद्धृतम् । यदि समुपलब्ध पद्यद्वयार्थोऽपि समुपलभ्येतान्ध्रबालभागवतकाव्ये, तर्ह्येव सिद्धं स्यान्नः समीहितम् ।

अन्ये पुनः—

आन्ध्रभाषोपनिबद्धच्छन्दःशास्त्रप्रणेतुः अप्पकवेः [१६५६ ई०] प्राचीनोऽयं कविवर्यः । यतश्चाप्पकविना स्वग्रन्थे साहित्यरत्नाकरस्थत्वेन पद्यमिदं समुदाजह्रे— "साहित्यरत्नाकरे --

प्रभूनुद्दिश्य पद्यं वा प्रबन्धं वा कदाचन ।
न वक्तव्यं न वक्तव्यं मातृकापूजनं विना ॥"

इत्येवं समाचक्षते । तदेतदविचारितरमणीयम् । समुदाहृत-पद्यस्य साहित्य-रत्नाकरेऽस्मिन्ननुपलभ्यमानत्वात् ।

अन्ये पुनः

"गौरनकविनापि स्वविरचित 'लक्षण-' दीपिकायां[1] पद्यस्यास्य पद्यान्तराणाञ्च साहित्य-रत्नाकरस्थत्वेन समुदाहृतत्वात् कोऽप्यन्यः साहित्यरत्नाकराख्यः छन्दःशास्त्रविषयको ग्रन्थः स्यादिति समुदाहृतपद्य-पर्यालोचनया सम्भाव्यते ।

तथा च नायं कविः सप्तदशशताब्दोत्तरार्ध—(१६५६ ई०) वर्तिनोऽप्पकवेः प्राचीन इत्युत्तरावधिनिर्णयो युक्तिसहः ।

भवति च लिङ्गं कवेरस्य नियतकालनिर्णायकम् ? यद्यैतिहासिका अत्र श्रद्दध्युः ।

---

[1] सेयं लक्षणदीपिका (आन्ध्रभाषोपनिबद्धा छन्दःशास्त्रविषयिका) नाद्य यावन्मुद्रिता । किन्तु - लिखितप्रतिः उस्मानियाविश्वविद्यालयान्ध्रविभागे प्राध्यापक (रीडर) पदमधितिष्ठता डॉ० बि० रामराजुमहोदयेन स्व-ग्रन्थालये २५८५ क्रमाङ्किता सुरक्षिता विद्यते ।

तच्चेदम् —

"जित्वा रामावधानिप्रवरमुरुमरुद् वेगवद्वेदचर्चा-
गोष्ठ्यां नारायणार्यः सदसि बुधशतैः श्लाध्यमानावधानः
सन्तुष्टाद धर्मभूपादलभत शिबिकां चामरच्छत्रपूर्व-
गर्वाखर्वावधानीश्वरशरभघटा गण्डभेरुण्डचिह्नम् ॥" इति ॥

(साहित्य० १।२१)

कवेर्ज्येष्ठपितृव्यस्य वर्णनपरमेतत् पद्यम् । अत्र हि तस्य धर्मभूपात् शिबिकादिप्राप्तिर्वर्णिता । कोऽयं धर्मभूपः किंसामयिकः कुत्रत्य इत्याद्ययावदनिर्णीतमेव ।

तथा च धर्मसूरिरयं चतुर्दशशताब्दोत्तरार्ध—(१३६०–१४०० ई०) वर्तिनः सर्वज्ञसिङ्गभूपालादर्वाचीन इत्यतोऽधिकं वक्तु न पार्यते ।

कृष्णमाचार्यास्तु षोडशशताब्दवर्तिनममुं समाचक्षते ।

**वंशानुक्रमः**

कविरयं साहित्यरत्नाकरे स्ववंशमित्थं वर्णयति ।[1] "अङ्गिरोमुनिवरसुतस्य हरितमुनेर्गोत्रेऽतीव विख्यातो 'वाराणसीति' वंशः । तत्र त्रिपुरारिसोमयज्वादयः वाराणसीविहितनित्यनिवासदीक्षाः शुभतपःश्रुतशीलवृत्ताः समभवन् । तेषु त्रिपुरारिविदुषः पार्वत्यां धर्मपण्डितः (कवेरस्य पितामह.) समुद्भूतः । सोऽयं नितान्तं शिवभक्तः । अत एव सप्तवारविहितैः 'प्रासाद'-मन्त्रसुपुरश्चरणैर्महेशं सन्तोष्य तस्मान्निजवंशजानामासप्तमम् अविच्छिन्नपाण्डितीं वरत्वेन सञ्जग्राह । तस्य च नागाम्बिकायां नारायण - पर्वतेश - रामाख्यं सुतत्रयं सञ्जज्ञे । तत्राद्यो नारायणपण्डितो वेदपारगः परिक्रमणचक्रवर्तीति ख्यातो ब्रह्मरथेन क्षितौ बहुशश्चचार । द्वितीयश्च पर्वतनाथसूरिः (कवेरस्य पिता) अशेषागमपारदृश्वा षड्दर्शनीनिष्णातश्च । अयं हि वादेन जनार्दनाख्यपण्डितं जित्वा तस्य 'वादिकेसरि-' विरुदं स्वयं जग्राह । वैष्णव (पण्डितं मतं वा) प्रच्याव्य मायावादि-भयङ्कराख्य-बिरुदेनापि लोके विश्रुतः समजनि । तृतीयश्चापि रामाह्वयपण्डितः षट्छास्त्रपाण्डितीमण्डितो गङ्गाझरीसदृशवाग्वैभवश्च । तेषु च पर्वतनाथसूरेर्यल्लमाम्बायामयं (धर्मसुधीरयं) समुत्पन्न इति । लोचनगोचरीक्रियतां तस्येदं पद्यम्—

---

1 दृश्यतां साहित्यरत्नाकरे प्रथमतरङ्गे १२–२८ पद्यानि ।

"तस्मात् पर्वतनाथसूरिजलधेः श्रीयल्लमाम्बाविय-
द्गाङ्गासङ्गजुषो लसद्गुणमणेर्लब्धोदयश्चन्द्रवत् ।
सोऽहं धर्मसुधीर्गवां विलसितैः कर्तुं रसालङ्क्रिया-
संस्फूर्तिं समुदञ्चयेयमधुना साहित्यरत्नाकरम् ॥"

(साहित्य० १।२८)

## संक्षिप्तचरितम्

धर्मसूरिरयं "धर्मसुधीः" 'धर्म भट्ट' (धर्मभट्ट-) इत्येत्यप्याख्यायते । धर्मसिंह[1] इत्यपि क्वचिदस्य नाम समुपलभ्यते । क्षत्रियकुलोचितमिति तत् समुपेक्ष्यमेव ।

स्वविद्यागुरुरनेन न कुत्राप्यनुस्मृत इति निखिलशास्त्रनिष्णातेभ्यः स्वपित्रादिभ्य एव सकला विद्या अधिगता इति सम्भाव्यते । स्वपूर्ववंश्यानां विद्योपदेशविधया शिष्यानुगृहीतृत्वस्य वर्णितत्वात् । विशेषतश्च पित्रादिपाण्डित्यस्य वर्ण्यमानत्वाच्च । कविकुलवतंसोऽयं न केवलं षड्शास्त्रपाण्डितीमण्डितः, अपि तु चतुर्दशविद्यास्थानसिद्धान्तरहस्यविज्ञानवांश्च । उक्तं हि तेनैव—

"...............चतुर्दशविद्यास्थानसिद्धान्तरहस्यविज्ञानवता श्रीधर्मसङ्ख्यावता विरचिते श्रीमद्रघुपतिगुणमणिगणधामनि साहित्यरत्नाकरनामन्यलङ्कारशास्त्रे रसनिरूपणं नाम दशमस्तरङ्गः" इति ।

अधीतशास्त्राणां प्रचारेणैव चारितार्थ्यमिति मत्वा तत्तच्छास्त्रग्रन्थानां व्याख्या विरच्यापि दिगन्तविश्रान्तयशाः सञ्जज्ञे । उक्तं च साहित्यरत्नाकरे प्रथमदशमतरङ्गयोः परिसमाप्तौ—"व्याख्याविख्यातकीर्तेर्विवरणगुरुवाक्साङ्ख्यमुख्यागमानां तस्यालङ्कारशास्त्रे.....................॥" इति ।

प्रौढपाण्डितीमण्डितममुं प्रसन्नगम्भीरपदा वाक् वश्येवान्ववर्ततेति हेम्नः परमामोदः । तर्ककर्कशगिरः कथं सुधारसनिष्यन्दिन्या वाग्भङ्ग्याः प्रवृत्तिरित्याशङ्कां कविः समाधत्ते—

"तर्के कर्कशतां गतापि नितरां वाग्वैखरी सत्कवेः
माधुर्यं प्रकटीकरोति कविताकालेषु किं वाद्भुतम् ।
पश्यात्यन्तकठोरतामुपगता ग्रीष्मे मयूखावलिः
किं नाविष्कुरुते नवामृतभरं भासां निधेः प्रावृषि ॥"

(नरकासुर० श्लोक० १६)

---

1 कैटेलागस कैटेलोगरम इति पुस्तके 7/6 पुटे धर्मसिंहस्य साहित्यरत्नाकरे XVI 72 nP IX 14, X 16, 18 इति पठ्यते ।

एतादृशी सार्वपथीनपाण्डिती ललितमधुरकविता च प्राय एकत्र दुर्लभे एव । कविवर्या इमे नितान्तं रामभक्ताः । तद्भक्त्यतिशयश्च तदीयरचनासु सर्वत्राप्यनुभूयते । रचनाश्च प्रायः सर्वाः श्रीरामायैव समर्पिताः ।

वयसि च चरमे गोविन्दानन्दसरस्वतीपादेभ्यः चतुर्थाश्रमदीक्षा स्वीचक्रुः । तदनु च काश्यामुषित्वानेन रत्नप्रभाख्या शाङ्करभाष्यव्याख्या विरचितेति, तन्मङ्गलाचरणप्रस्तावे--

वन्दे चर्मकपालिकोपकरणैर्वैराग्यभाग्यात् परं
नास्तीति प्रदिशन्तमन्तविधुर श्रीकाशिकेश शिवम् ॥"

इति श्रीकाशीविश्वनाथसंस्मरणतः सम्भाव्यते । रत्नप्रभायां स्वनाम्नोऽख्यापनात् निजदीक्षागुरुवर्य-गोविन्दानन्द-सरस्वती-संस्मरणाच्च स्वगुरुनाम्नैव व्यवहृताः रत्नप्रभाकर्तृत्वेन प्रथां गताः । ब्रह्मामृतवर्षिण्याख्या ब्रह्मसूत्रगुरुवृत्तिश्चाप्येतत्कर्तृकत्वेन प्रसिद्धा । उभयत्र च प्रत्यधिकरण मङ्गलाचरणपद्यैः श्रीराममेव परब्रह्मत्वेन ध्यात्वा तदधिकरणार्थो व्यञ्जित इति रामभक्तिप्राचुर्येण रामानन्द-सरस्वतीत्याख्ययापि तदेतत्कृतिद्वयकर्तृताऽस्य प्रथिता । परं ग्रन्थस्थतया न किमपि नाम समुपलभ्यते । स्वनामख्यापनस्य कर्तृताभिमानव्यंजकत्वेन तत् परिहृतं स्यादिति भाति । एवं शास्त्रार्थजनितसत्त्वातिरेकबुद्धिपरिपाकवशात् निर्ममो निरहङ्कारश्च सन् ब्रह्मभूयाय चकल्पे ।

**कृतयः**

१. साहित्यरत्नाकरः २. बालभागवत-काव्यम् ३. पञ्चतन्त्र-काव्यम् ४. हंससन्देश-काव्यम् (प्राकृतम्) ५. कंसवध-नाटकम् ६. नरकासुरविजय-व्यायोगः ७. सूर्यशतकम् ८. कृष्णास्तुतिः ९. दत्तरत्नाकरः १०. ब्रह्मामृतवर्षिणी (ब्रह्मसूत्रगुरुवृत्तिः) ११. भाष्यरत्नप्रभा १२. पञ्चपादिका-विवरण-दिव्याख्या १३. अन्ये अलङ्कारप्रबन्धाः

**बालभागवतकाव्यम्**

काव्यमिदमनुपलब्धमद्य यावत् श्रीकृष्णचरितात्मकमिति सम्भाव्यते । अत्रत्यं पद्यद्वयं नरकासुरविजयव्यायोग-साहित्यरत्नाकरयोः समुद्धृतम् तदिदं पद्यद्वयम्–

"विनिन्दिताः केचन पङ्कजन्मना
जडेन दोषोपहिता अपि स्वतः ।
ममोक्तयो विष्णुपदस्पृशो बुधैः
कला इव ग्राह्यतमाः कलानिधेः ॥"

(नरका० श्लो० १५)

निविश्य नीरन्ध्रनिकुञ्जमध्यमा-
नमी समीराः सहसा ससम्भ्रमाः ।
न शक्नुवन्तीह पुनर्विनिर्गमे
लताङ्गनालिङ्गनलालसा ध्रुवम् ।।" इति
(साहित्यरत्ना० ७।२४)

**पञ्चतन्त्रकाव्यम्**

नेदं काव्यमुपलब्धरचनासु कुत्राप्यनुस्मर्यते, नाप्यद्य यावन्मुद्रितम् ।

**हंससन्देश-काव्यम्**

प्राकृतभाषोपनिबद्ध काव्यमेतदद्यावध्यनुपलब्धमेव । केवलमस्मात् काव्यात् साहित्यरत्नाकरे समुद्धृतमेकं पद्य "आअं सीआणजुअलं" (सा० र० १०।१६) इत्येव बुद्धिपद्धतिमवतरति ।

यद्यपि मद्रपुरीप्राच्यलिखितपुस्तकभाण्डागारे अविज्ञातकर्तृकं हंससन्देश-काव्यमुपलभ्यते । तथापि भिन्नविषयत्वान्नैतत्कर्तृकमिति महोपाध्यायैरचंटवेङ्कट-साङ्ख्यायनशर्ममहोदयैः भारत्यां [मद्रपुरी-आन्ध्रसाहित्यमासिकी जून १९३१] निश्चितपूर्वमेव ।

**कंसवधनाटकम्**

एतदप्यनुपलब्धमेव । पद्यत्रयं चात्रस्थं साहित्यरत्नाकरे समुद्धृतम् । यथा-

"वक्षोजाङ्गचुम्बितुम्बिरुचिरामाबिभ्रती वल्लकी-
मीषद्दर्शितबाहुमूलसुषमा तन्त्रीः स्पृशन्ती नखैः ।
मन्दस्पन्दितकुण्डलालकभरा माधुर्यधुर्यस्वरा
किञ्चित्कुड्मलितेक्षणा स्मितमुखी केयं शनैर्गायति ।।"
[सा० र० ७।१४१]

"आरूढः कुरथं रजोऽन्धितदृशा सूतेन सञ्चोदितै-
रश्वैराशु-विनश्वरैरयुगपत्प्रक्रान्तचक्रं द्रुतम् ।

अस्येयं छाया

"जातं सीतानयनयुगलं लोहितं जागराद् वा
किं वा ताम्रं मदनदहनज्वालजालाभितापात् ।
चित्तारब्धे सुरतविभवे चुम्बनानां प्रभेदे
रक्तं किं वा रघुपतिमुखे वीटिकारागयोगात् ।।"
[सा० र० १०।१६]

चापे-हीनगुणे विपत्रविशिखं सन्धाय निर्न्येऽद्भुतं
शूलोत्कम्पिकरो रथी विषमदृक् तिस्र. पुरः पञ्चताम् ॥
"रोषाद् दक्षिणमीक्षणं विपुलयन् वामं भयान्मीलयन्
वक्त्रार्धे क्वचिदीरयन् कटुगिरं चाटूक्तिमप्यन्यतः ।
एकेनाशु पदा पुरः परिसरन्नन्येन पश्चाद् व्रजन्
काचिज्जातु रणोन्मुखे मयि दशां लेभेऽर्धनारीश्वरः ॥"
[सा० र० १०।३२,४०]

## नरकासुर-विजय-व्यायोगः

अयं हि व्यायोग 'नरकासुरध्वस' इत्याख्ययापि प्रथितः । मुद्रितश्चायमान्ध्रलिप्यां द्विवारं [१८६४, १८८५ ई०] मद्रपुरी-वाविल्लमुद्रणालये । नागरलिप्यां च १९६१ ई० उस्मानियाविश्वविद्यालयीय-संस्कृतपरिषदा मुद्राप्य प्रकाशितः ।

अनुदितश्चाप्ययमान्ध्रभाषायां श्री कोक्कोण्डं वेङ्कटरत्नकविवर्यैः ।

अस्मिन् हि व्यायोगे बालभागवतकाव्यस्यैकं पद्यं समुद्धृतम् । तच्च पद्यं[1] "विनिन्दिताः" [नरका० प्रस्तावना १५] इत्यादि ।

अत्रत्यानि षट् पद्यानि यथातथं साहित्यरत्नाकरे पठितानि । यथा-

१. नमस्तमःकर्दम- [नरका० श्लो० ७, सा० र० १।३]
२. तद्घाटीतीव्र-[नरका० श्लो१ २८, सा० र० ७।८३,-६।३]
३. त्यक्तप्रभञ्जनाधम- [नरका० श्लो० ७२, सा० र० ७।१२८]
४. नीतक्षपः- [नरका० श्लो० ५, सा० र० २।२७]
५. जृम्भच्चण्डस - [नरका - श्लो० ४८, सा० र० ५।२, ७।३६, ६।५४ त्रिः पठितम्]
६. डाकिन्यः कौतुकिन्यः - (नरका० श्लो० ८५, सा० र० १०।३६)

पद्यचतुष्टयं तु यथोचितं परिवृत्य पठितम् ।

यथा—

१ शौरेः कोदण्ड— ( नरका० श्लो० ५६; सा० र० ४।१४ ) पद्यमिदं "शौरे कोदण्डकाण्डाद्" इति स्थाने 'रामस्योच्चण्डचापादिति परिवृत्य साहित्यरत्नाकरे पठितम् ।
२. प्रक्षुभ्यच्छम्भु— (नरका० श्लो० ७६, सा० र० ४।५०) इदमपि चतुर्थ-

---

1 पद्यमिदं बालभागवतपरिचयप्रस्तावे समग्रतया पठितम् ।

चरणान्ते "क्षेममस्यच्छलोक्तैः" इत्यत्र 'मानवं दानवेन्द्र' इति परिवृत्य पठितम् ।

३. कुप्यत्कल्पान्तकाली— [नरका० श्लो० ८५ सा० र० ४।२]
पद्यमेतत् पूर्वार्धे समानमुभयत्र ।

४. विख्यातेऽजनि— [नरका० श्लो० १३, सा० र० १०।४७] पद्यमिदं तृतीयचतुर्थचरणयोः समानमुभयत्र । अन्यान्यपि पादपादार्धसमानि बहुशः समुपलभ्यन्ते ।

## सूर्यशतकम्

अनुपलब्धमेतत् पद्यद्वयमत्रत्यं साहित्यरत्नाकरे समुद्धृतम् । यथा—
"नागबन्धस्त्वस्माभिः सूर्यशतके बिम्बवर्णनप्रस्तावे कथितः–
"बिम्बं ध्वान्तव्यधा"—[सा० र० ६।१४] इति—"अष्टदलपद्मबन्धस्तत्रैवाश्ववर्णने कथितः—'या दासभाणरक्ता'—[सा० र० ६।१५] इति" तथा च शतकमिदं तत्तद्वर्णनाक्रमेषु मयूर-कविरचितसूर्यशतकमुपकुर्यादिति मन्यामहे । विशेषतः शब्दालङ्कारसमलङ्कृतं चेति च ।

## कृष्णास्तुतिः

कृष्णानदीस्तुतिरूपाया अस्याः पद्यमेकं समुद्धृतम्—
कृष्णा मुष्णातु—[सा० र० ६।२] एषाप्यनुपलब्धैव ।

## दत्तरत्नाकरः

धर्मशास्त्रविषयकोऽयं ग्रन्थः स्यात् । उपलब्धरचनासु न कुत्राप्ययमनुस्मर्यते । नाप्यद्ययावदुपलब्धः । डा० हुल्त्जमहोदयस्य कथनादस्य सत्तामात्रं ज्ञायते ।

## ब्रह्मामृतवर्षिणी

सेयं ब्रह्मसूत्रगुरुवृत्तिरूपा । मुद्रिता चान्ध्रलिप्यां नेल्लूरुसरस्वतीनिलयमुद्रणालये १९०० ई० अन्नवरं-वेङ्कटराघवशर्मणा सम्पादिता[1] । तदनु च नागरलिप्यां पुण्यपत्तनस्थानन्दाश्रममुद्रणालये मुद्रिता ।

सेयं वृत्तिः चतुर्थाश्रमस्वीकारात् पूर्वमेव रचितेति श्रीवेमूरुनृसिंहशास्त्रिणां कथनम्[2] । आरम्भे रामध्यानरूपमङ्गल-निबन्धनेन श्रीरामायैव समर्पणेन च

[1] दृश्यतां इण्डिया आफिस कैटेलाग भाग २ अंश १ पृ० ५१३

[2] दृश्यतां भारती, मद्रपुरी-आन्ध्रसाहित्य-मासिकी, १९३१ फरवरीसञ्चिका ।

व्याख्यातृ रामभक्त्यतिशयो व्यज्यते । बहुत्र पङ्क्तिसाम्यं शैलीसाम्यं प्रत्यध्याय-प्रतिपादसङ्गतिकथन पूर्वपक्षसिद्धान्तयोः फलनिरूपणं श्रीरामाय कृतिसमर्पणं च ब्रह्मामृतवर्षिणी - भाष्यरत्न-प्रभयोरेककर्तृकतां द्रढयन्ति ।

**भाष्यरत्नप्रभा**

प्रचुरप्रचारा सेयं निर्णयसागरमुद्रणालये नैकवारं मुद्रिता । शाङ्करभाष्य-व्याख्यारूपा । रामानन्दसरस्वती - गोविन्दानन्दसरस्वतीत्याख्याद्वयेनास्याः कर्तृता प्रसिद्धा । विस्तरस्तु निवेदितपूर्वः । सेयं कृतिः श्रीरामायैव समर्पिता —

"वक्षस्यक्ष्णोश्च पार्श्वे करतलयुगले कौस्तुभाभां दयां च
सीतां कोदण्डदीक्षामुभयकरयुतां वीक्ष्य, रामाङ्गसङ्गः ।
स्वस्याः क्व स्यादितीत्थ हृदि कृतमनना भाष्यरत्नप्रभेयं
स्वात्मानन्दैकलुब्धा रघुवरचरणाम्भोजयुग्म प्रपन्ना ॥"

अत्र च प्रत्यधिकरणं श्रीराममेव परब्रह्मत्वेन ध्यात्वा तदधिकरणार्थः संसूचितः । समन्वयसूत्रभाष्यव्याख्यायां च परमतप्रत्याख्यानपुरःसरं —

"रामनाम्नि परे धाम्नि कृत्स्नाम्नायसमन्वयः ।
कार्यतात्पर्यबाधेन साधितः शुद्धबुद्धये ॥"

इति रामात्मके परब्रह्मण्येव वेदवाक्यसमन्वयो दर्शितः । एवं श्रीरामभक्त्यति-शयः प्रसक्तानुप्रसक्ता जनश्रुतिश्च भाष्यरत्नप्रभायाः श्रीधर्मसूरिकर्तृकतां द्रढयतः । विशेषस्तु वेमूरुनृसिंहशास्त्रिनिबन्धे भारत्यां[1] मुद्रिते द्रष्टव्यः ।

**पञ्चपादिकाविवरणादिव्याख्याः**

नामशेषतां गता एताः सर्वा व्याख्याः । स्मृतास्तु स्वकृतित्वेन साहि-त्यरत्नाकरे —

"धर्मान्तर्वाणिवर्यस्त्रिभुवनविदिते वारणास्यन्वये यः
सञ्जातो यल्लमाम्बाकृतसुकृतफलं पर्वतेशस्य भाग्यम् ।
व्याख्याविख्यातकीर्तेर्विवरणगुरुवाक्साङ्ख्यमुख्यागमानां
तस्यालङ्कारशास्त्रे विलसति दशमो रामवर्ण्ये तरङ्गः ॥"

**अन्ये अलङ्कारप्रबन्धाः**

साहित्यरत्नाकरात् पूर्वमेव केचन विरचिता इति तदुक्तितो ज्ञायते । यथा—"काव्यालङ्कारकृष्णास्तुतिरविशतकोन्नाटकादिप्रणेतुः" (सा० र० ३।१५) इति ।

---

1 भारती-मद्रपुरीतः प्रकाश्यमाना आन्ध्रसाहित्य मासिकी १९३१ फरवरी-सञ्चिका ।

व्याख्यातं चात्र मन्दरकुद्भिः –" काव्यानां हंससन्देशादीनामलङ्काराणाम् अलङ्कारप्रबन्धानां कृष्णास्तुते रविशतकस्य उन्नाटकाना कंसवधाद्युत्कृष्टनाटकानाम्, आदिशब्देन नरकध्वंसादिव्यायोगादीनां च प्रणेतुः निर्मातुः" इति ।

तथा च केचन अलङ्कारप्रबन्धाः साहित्यरत्नाकरात् पूर्वं विरचिता नामशेषतां गता इति सम्भाव्यते ।

यद्यपि धर्मसूरिकर्तृक स्तोत्रद्वयमन्यत् समुपलभ्यते—

(१) मङ्गलस्तोत्रम्[1] (चैत्यस्तुतिस्तोत्रम्)

(२) पार्श्वजिनस्तोत्रम्[2]—इति ।

तथापि तदेतत् स्तोत्रद्वयं जैनकविधर्मसूरि कर्तृकमिति न साहित्यरत्नाकरकारकर्तृकम् ।

## साहित्यरत्नाकरः

अलङ्कारशास्त्रमिदं कारिकावृत्त्युदाहरणैस्त्रिधा विभक्तम् । अत्र चोदाहृतपद्येषु सर्वत्र श्रीराममेवोपवर्ण्य नायकैक्यं सम्पादितम् । अत एव प्राचीनालङ्कारिकग्रन्थेषु न्यूनत्वमापाद्य स्वग्रन्थस्यातिशय उपवर्णितः कविना । यथा –

अलंक्रियाः पूर्वतरैः प्रणीता न योजिताः काश्चन नायकेन ।
कैश्चित्तु कुक्षिम्भरिभिर्निबद्धाः क्षोदीयसा काश्चन नायकेन ।।

दिव्येनोत्तमनायकेन घटिता सेयं ममालंकृतिः
सद्वृत्ताकृतिना विदेहतनयावक्षोरुहस्थायिना ।
तंत्तादृग्दशकण्ठकीर्तिपयशो नैल्यावहश्रीजुषा
निस्त्रासेन महेन्द्रनीलमणिनोदारेण संशोभते ।।

(सा० र० १।३१,३२)

वर्ण्यैक्यादत्र केवलमेकं पद्यं कालिदासीयं समुदाहृतम् (सा० र० २।३०

"रावणावरजा तत्र राघवं मदनातुरा ।
प्रतिपेदे निदाघार्ता व्यालीव मलयद्रुमम् ।।" (रघुवंश-द्वादशे)

अन्यानि तु सर्वाणि स्वीयान्येव । ग्रन्थमिमं रघुकुलतिलकयशोघनसारसुर-

---

1 मङ्गलस्तोत्रमिदं चतुर्विजयमुनिसम्पादिते निर्णयसागर–मुद्रिते (१९२८ ई०) जैनस्तोत्रसमुच्चये समुपलभ्यते । तत्र मातापित्रादिकं न निर्दिष्टम् । किन्तु जैनपूर्वाचार्यत्वेन वर्णितः ।

2 स्तोत्रमिदम् अमृतविजयमुनि-सम्पादिते 'साराबाई मनिलाल नबाब-अहमदाबाद' इत्यनया प्रकाशिते (१४३२ ई०) जैनस्तोत्रसन्दोहे समुपलभ्यते । अत्रापि कवेर्विषये न कोऽपि विशेषो दत्तः । जैनत्वे तु न सन्देहः ।

भितत्वेन समुपवर्णयता कविवतंसेन स्वरामभक्त्यतिशयो व्यंजितः । ग्रन्थस्यास्य संग्रथनाय ग्रन्थकर्त्रा प्राचीननवीनालंकारिकग्रन्था नैके पर्यालोडिताः । उक्तं हि—

प्राचीनाभिनवप्रबन्धृविहितग्रन्थानुसन्धायिना
सोऽयं साहसिकेन सम्प्रति मया नूत्नः प्रबन्धः कृतः ।
कस्तुष्येदमुनाऽध्वना ह्यमुलभो बोद्धा च निर्मत्सरः
सर्वज्ञो गतमत्सरोऽस्ति हि रमारामः स सन्तुष्यतु ॥

(सा० र० १०।४५)

अत्र च परिच्छेदाः ग्रन्थनामानुगुण्येन तरङ्गत्वेन सञ्ज्ञिताः। ते च तरङ्गाः प्रतिपाद्य-विषयमनुसृत्य ग्रन्थारम्भसमर्थनाभिधा-लक्षणा-व्यंजना-गुण-शब्दालङ्कारार्थालङ्कार-दोष-ध्वनि-रसा इत्याख्याता दश । तत्र ग्रन्थारम्भसमर्थनाख्ये प्रथमे–

'काव्यमीमांसाया अध्ययनविधि मूलकत्व समर्थनं ग्रन्थकर्तुः पूर्व-मीमांसायामादरातिशयमभिव्यनक्ति । सर्वथा तदिदं समर्थन प्रशस्यतमम् ।

(२) अभिधाख्ये द्वितीये शक्तिवादः परमतप्रत्याख्यानपुरःसरं समीचीनतया निरूपितः

(३) लक्षणाख्ये तृतीये च आलङ्कारिकानभिमता जहदजहल्लक्षणां समर्थयता स्वस्योत्तरमीमांसाभिमानो व्यजितः ।

(४) चतुर्थे च व्यंजनाख्ये—
व्यंजना सुष्ठु संलक्ष्य समुदाहृता ।

(५) पञ्चमे गुणतरङ्गे तत्तन्मतानुसारेण गुणान् संख्याय, गुणान्तराण्युक्तगुणेष्व-न्तर्भाव्य

"ओजःप्रसादमाधुर्याण्युक्तिकान्तिसुशब्दताः ।
गाम्भीर्यं भाविकं रीतिमूचुः केचिद् गुणान्नव ॥"

इति नवैव गुणाः संलक्ष्य समुदाहृताः । अथ

"एवं सूक्ष्मधियां मार्गमाश्रित्योदाहृतं मया ।
माधुर्यौजः प्रसादास्तु सौशब्द्येन समन्विताः ॥
गुणाश्चत्वार एवैते मम सूक्ष्मतरेक्षितुः ।
त्रय एवेति वाऽत्यन्तं रोचते मनसे मतम् ॥"

इति प्रकरणमुपसंहृतम् ॥

(६) षष्ठे च विविधाः शब्दालङ्काराश्चित्रबन्धविशेषाश्च पूर्वप्रबन्धानुदाहृताः समुदाहृताः ।

(७) सप्तमे तु षड्भी रसवदाद्यलङ्कारैः सह सप्ततिरर्थालङ्काराः सर्वस्व-कारैकावलीकारादिमतेन संलक्ष्य समुदाहृताः । अलङ्कारपौर्वापर्यसङ्गतिनिरूपणं

पूर्वोत्तरमीमांसाशास्त्रीयपद्धतिमनुस्मारयति ।

(८) अष्टमे च दोषाख्ये सर्वपददोषलक्ष्यत्वेनैकमेव पद्यं समुदाहृत्य तस्यैव निर्दुष्टत्वेन पुनर्ग्रथनं ग्रन्थकर्तुरवधाननैपुणीं सूचयति । तदिदं पद्यम्—

"पाथोवाहपदस्त्रिसप्तदशदोर्गल्लश्च वै गुह्यके—
शादीनादिहवे कजारिपितृजिज्जित्योजितो दैवतान् ।
युद्धो क्लेशगतोऽम्बिकारमणलब्धौर्वर्थ्यबद्रावण:
कोपाच्छोणितलोचनो रघुपतेर्धाम्ना विदग्धोऽभवत् ॥" (सा० र० ८।१)

अस्यैव निर्दुष्टत्वेन यथा—

पाथोराशिनिकेतनो द्विदशदोर्दण्डो धनेशादिकान्
सङ्ग्रामाङ्गणसीम्नि शक्रविजयो जित्वोर्जितो निर्जरान् ।
युद्धेऽहङ्कृतिमान् मृगाङ्कमुकुटाल्लब्धोदयो रावण:
कोपाद् रक्तविलोचनो रघुपतेर्दग्धोऽभवत्तेजसा ॥" (सा० र० ८।२)

उभयत्र क्रमिकत्वं विशेष: ।

(९) नवमे पुन: ध्वनि: सोपपत्तिकं व्यवस्थाप्य सावान्तरभेद: समुदाहृत: । रीतिशय्यापाकादयश्च ।

(१०) दशमे रसतरङ्गे रससद्भाव: सपूर्वपक्षसिद्धान्तं समर्थित: । रसोत्पत्त्यादिवादाश्च सोपपत्ति निराकृता: । शान्तस्य रसत्वं समर्थ्य वत्सलस्नेहभक्तीनां रसत्वं निराकृतम् । श्रृङ्गारो विस्तरेण समुदाहृत: । अन्ये तु यथोचितं संलक्ष्योदाहृता: । सात्त्विकव्यभिचारिभावा: श्रृङ्गारचेष्टा: रसाभासादयश्च, इत्यलं बहुना ।

ग्रन्थेऽस्मिन् नाटकवर्जं सर्वे विषया: सङ्गृहीता: । तथा च ग्रन्थस्यास्याध्ययनेन न केवलमलङ्कारशास्त्रपाण्डित्यमेव, अपि तु शास्त्रान्तरेष्वपि यथोचित: परिचय: सञ्चित: स्यादिति नात्र संशीतिलवोऽपि ।

अथास्य व्याख्या:

(१) नौकाख्या चर्लविङ्कटसूरिविरचिता,

(२) मन्दराख्या मल्लादिलक्ष्मणसूरिकृता,

(३) नौकाख्या मधुसूदनमिश्रशर्मविरचिता,

(४) अलङ्कारसुधाकराख्या महामहोपाध्यायकृष्णमिश्रविरचिता चेति । आसु मल्लादिलक्ष्मणसूरिविरचितमन्दरसमेत: साहित्यरत्नाकर: मद्रपुरी-सरस्वती-निलयमुद्रणालये १८७१ खीष्टाब्दे, नेल्लूरुसरस्वतीनिलये च १८८५ खीष्टाब्दे मुद्रितो द्विवारमान्ध्रलिप्याम् । नागरलिप्यां च मधुसूदनमिश्रविरचितनौकायुत: १९०१ खीष्टाब्दे 'बमरा'-नगरस्थ-'सुढल-' मुद्रणालये मुद्रित: । चर्लविङ्कट-

सूरिकृतनौका त्वधुनैव सूर्यालोकमधिजिगमिषति । अलङ्कारसुधाकरस्त्वपूर्ण एवेति नाद्ययावन्मुद्रितः ।

**व्याख्यातृपरिचयः**

नौकाख्यव्याख्यारचयिताऽयं श्रीसूरमाम्बालक्ष्मणपण्डितयोः सूनुः ब्रह्मान्तर्वाणिपौत्रः नैध्रुवकाश्यपसगोत्रः रामानुजसम्प्रदायवैष्णवः । पश्चिमगोदावरीमण्डलान्तर्गत-काकरपर्त्यग्रहारवास्तव्यात् अणिवेल्लवेङ्कटशास्त्रिणः सकाशात् सकला विद्या अधिजगाम । अयं हि १७४५ खी॰टाब्ददेशीय. । अस्य कृत्यन्तर वेङ्कटाद्रीयमिति[1] । यदयं वैष्णवोऽपि सन् चन्द्रशेखरं मङ्गलाचरणे स्तौति, तदस्य परिपक्वबुद्धितां सूचयति । यथा–

"चूडालमिन्दुकलया कलयामि यामि
यामिन्यधीशनयनं जयिनं पुरां च ।
मन्दाकिनीचटुलतुङ्ग-तरङ्गसङ्ग-
त्वङ्गज्जटालयनिशं शरणं गिरीशम् ॥" (नौकारम्भे)

## (२) मल्लादिलक्ष्मणसूरिः

पण्डितोऽयं काकिनाडवास्तव्य । एकोनविंशशताब्दान्तिमभागे दिवङ्गत इति श्रूयते । अस्य कृतयः

(१) साहित्यरत्नाकरव्याख्या मन्दराख्या
(२) काव्यप्रकाशव्याख्या बुधमनोरंजनी
(३) चम्पूभारतव्याख्या

प्रायः सर्वा अप्यस्य रचनाः प्रकाशिताः ।

अनर्घराघव व्याख्याता लक्ष्मणसूरिस्तु तञ्जापुरनिवासी भिन्न एव[2] ।

## (३) मधुसूदनमिश्रशर्मा

अस्य व्याख्यापि नौकाख्यैव । अयं हि उत्कलदेशीयबलभद्रपुरवास्तव्यः । बामण्डा-(बंमरा-) धिपतेरास्थानसदस्यः । सेयं नौका स्वेनैव वमरास्थित 'सुढल' मुद्रणालये मुद्रापयित्वा १९०१ खीष्टाब्दे प्रकाशिता वीरश्रीसच्चिदानन्दयुवराजस्यानुकूल्येनेति तद्व्याख्यापूर्वरङ्गतोऽवगम्यते । अस्य च–

(१) मायाशबरीविलासः

---

१. दृश्यतां नौकारम्भपद्यानि, कृष्णमाचार्यसंस्कृतसाहित्य–चरितं च ।

२. दृश्यतां श्री E. V. V. राघवाचार्याणां "साहित्यरत्नारमुनौकामन्दरमुलु" इति निबन्धः काकिनाडस्थान्ध्रसाहित्यपरिषत्पत्रिकायां (१९२९ ई०) मुद्रितः ।

(२) हनुमत्सन्देशः
(३) तारावली
चेति कृतित्रयमस्तीति तदुक्तित एव जानीमहे । सा चेयमुक्तिः

वीरश्रीबलभद्रपूर्वकपुरे यो जातु विश्राम्यति
बामण्डाधिपतेः सदस्यपदवी यस्मिंश्च विश्राम्यति ।
श्रीमायाशवरीविलासहनुमत्सन्देशतारावली
ग्रन्थानां मधुसूदनो रचयिताऽहं सोऽपि सोऽहं द्विजः ॥"
(व्याख्यापूर्वरङ्गे)

अयं १९२९ खीष्टाब्दे जगन्नाथक्षेत्रेऽवसदिति श्रूयते ।

**(४) महामहोपाध्यायकृष्णमिश्रः**

अयं हि पण्डित उत्कलदेशीयः कौत्सगोत्रो रामदीक्षितपौत्रः परमानन्दपुत्रः । उक्तं हि स्वव्याख्यारम्भे–

नानाशास्त्रविशारदो द्विजवरो यो रामनामा महान्
यज्वा कौत्सकुलावलीहिमकरः प्रादुर्बभूवोत्कले ।
कृष्णस्तत्तनयात्मजः कविसुधीः साहित्यरत्नाकरा –
लङ्कारस्य सुधाकराख्यममलं व्याख्या नमाख्या त्यसौ ॥

प्रथमतरङ्गान्ते च — "इतिश्रीकौत्सकुलकैरवशरन्निशाकरन्यायवैशेषिकशेषभाष्यादिशास्त्राकूपारादिपारङ्गतसाहित्यसंगीतज्योतिः — प्राकृतच्छन्दोनिगमवित्सर्वङ्कष-महामहोपाध्यायकविकोविदकृष्णमिश्रविरचितायां साहित्यरत्नाकरटीकायां ग्रन्थारम्भसमर्थनप्रथमतरंगविवरणप्रथमा कौमुदी ॥" इति तदुक्तितः सर्वतोमुखपाण्डिती सुव्यक्ता । व्याख्यापरिच्छेदाश्च कौमुदीनाम्ना समाख्याता इति च स्पष्टम् ।

परमिदं विषादस्थानं यदेतादृशपाण्डितीमण्डितस्य व्याख्येयं पञ्चमावधि पूर्णतया षष्ठसप्तमयोश्च स्खालित्येनेत्येतावती-अपूर्णैव समुपलभ्यत[1] इति । सेयं नाद्ययावन्मुद्रिता च । व्याख्यातुरस्य समयस्तु न ज्ञायते ।

---

(१) लिखितप्रतिरस्याः मद्रपुरीप्राच्यलिखितपुस्तकभाण्डागारे सुरक्षिता वर्तत इति T. C. G. O. M. L. इत्येतदवलोकनेन ज्ञायते–ले० ।

# चित्रकाव्येषु गतिचित्राणां विकास-परम्परा

श्रीरुद्रदेव त्रिपाठी

संस्कृतसाहित्यस्य शब्दालंकारसाहित्ये विलीनमिव चित्रालंकृति–साहित्यं प्राचां स्वस्वसम्प्रदायपोपणपराणामाचार्याणां कोपभाजनं सदपि परां विस्तृतिमभजत् । आसीत् तत्राश्चर्याभिनिवेशेन पाण्डित्यप्रौढिप्रकटनमपि कारणान्तरम् । शास्त्रीयज्ञानविज्ञानकुशलस्य कवेर्धमनीषु प्रवहति कोऽपि नवीनो रक्तप्रवाहस्तदा स प्राचीनतापाशं विच्छिद्य किमपि नवीनं कर्तुं कामयते । भावनानां प्रबलः प्रवेग एव तत्रानुभूति-मार्मिकतावशेन प्रभविष्णुतां रोचिष्णुतां चित्रात्मकतां च जनयति । वाणीगत - विचाराणामुत्कर्ष - प्रदर्शनाय वर्णविन्यासपद्धतिरपि हितावहा भवति । यथा कोमलाक्षरैः शौर्यवर्णन कठोराक्षरैश्च सान्द्रानन्दसूचनं न रुचिरं भवति तथैव विकटाक्षरबन्धैर्विना शौर्यप्रतिपादनं प्रसन्नगम्भीरपदावल्या विना च नैसर्गिकमौख्यप्रतिपादनं न सुलभम् । अनेनैव कारणेन यमकानुप्रासानन्तर युद्धवर्णनादिषु चित्रालङ्काराणामारम्भोऽभूत् । युद्धेषु सेनाया अङ्गचतुष्टय भवति तेषु । पदातयः, अश्वारोहिणः, रथाः गजाश्च गणनीयाः । एतेषां सञ्चालन राजा, मन्त्री सेनानायको वा करोति । कुत्र कस्योपयोगः प्रथमं विजयाय करणीय इति धिया प्रतिक्षणं सावधानः सञ्चालकः कामपि रीतिं स्थिरयति; यस्यां कुत्र कस्य निवेशः ? केन वा किं करणीयमिति शासनं भवति । सति सङ्गरे कया गत्या कतमो हन्तव्य आक्रान्तव्य इत्यपि तत्र निर्दिश्यते । महाभारते सङ्गराङ्गणयोजनानामीदृशाः कतिपये प्रकारा वर्तन्ते । 'व्यूहरचना'–नाम्ना व्यवहृतेऽस्मिन्नायोजने परमकुशला अपि योद्धारो भ्रान्तिमन्तो भवन्ति स्म तदप्यभिमन्युप्रभृतीनां निदर्शनेन प्रथितचरम् । तदनन्तरं चैषा पद्धतिः काष्ठनिर्मितसेनाङ्गानां फलकनिर्दिष्टव्यूहे सञ्चालनमाध्यमेन बुद्धिवैशद्याय क्रीडारूपेण प्रसिद्धिं गता । सर्वतः प्रथमं बाणेन (६३० - ६५० ई०) सप्तमशतके राज्ञां गोष्ठो वर्णयताऽस्याः प्रवृत्तेर्वर्णनं कृतम् । सहैव चास्याः केऽपि कूट - प्रकारा अप्यन्तर्भाविताः शब्दसाहित्यालङ्कार - साहित्यनिष्णातस्य कवेः प्रतिभैवात्र चित्रालङ्कारजननीत्येवमत्राकलयामः ।

## गतिचित्राणां प्ररोहो विकासश्च

आरम्भत एव वैदिका वेदमन्त्राणां कण्ठस्थीकरणाय तत्तन्मन्त्रगताक्षर-मात्रानुस्वारादीनां च यथारूपं सुरक्षार्थं कांश्चन पठनप्रकारान् निर्णीतवन्तः, यथा –

'जटामालादण्डरेखारथध्वजशिखाघनाः ।
क्रममाश्रित्य निर्वृत्ता विकारा अष्ट विश्रुताः ॥'

एतेषां प्रथमः प्रयोक्ता ब्रह्माण्डपुराणोल्लेखानुसारं मुनिर्व्याडिः ।[1] सहैव च तादृशविकृतिपाठेऽनुरागविवर्धनाय प्रलोभनरूपेण फलश्रुतिरपि त्रिगुणं क्रमपाठेने' – त्यादि संसूचिता । एतेषां विकारपाठानां लक्षणानि वैदिकीषु शिक्षासु प्राप्यन्ते । विकृतिपाठस्य पञ्च भेदास्त्रयश्चोपभेदाः सन्ति । यथा— १-अनुक्रमः, २-उत्क्रमः, ३-व्युत्क्रमः, ४-अभिक्रमः, ५-सङ्क्रमश्च । तथेमेऽप्या-द्यमध्यान्त्य - क्रमेण प्रत्येकं त्रिभिर्भेदैर्भिद्यन्ते ।[2] मन्ये विकृतीनामेते प्रकारा एव गतिचित्राणां निर्माणे प्रेरका अभूवन् । सरस्वतीकण्ठाभरणे भोजराजो गतिशब्दं परिभाषमाणो 'गतिः पठितिभङ्गिविशेष' इति सूचयति । एवमेतेस्वपि बुद्धिबलोदयं यावद् वर्धमानमानसैः कविभिः प्रत्यक्षरविपरीतपाठस्तथा कतिपयो-र्ध्वाधःस्थरेखामाध्यमपाठो ग्रहमुक्ताक्षरपाठ इत्यादिपद्धतयः प्रकटिताः ।

## गतिचित्रेषु जागतिकं जीवनम्

साहित्यं समाजस्य प्रतिबिम्बमिति भणितिं सार्थयद्भिश्चित्रकविभिर्गति-चित्रेषु तात्कालिकराजानां मनोविनोदेन सहैव शास्त्रीय–चमत्कारपूर्वकज्ञानप्रदा-नकार्यं सम्पादितम् । तत्र हि राज्ञां क्रीडार्थं प्रयुज्यमाने शतरञ्जनामनि फलके क्रीडोपकरणानां गजवाजिमन्त्रिप्रभृतीनां यादृश्यो गतयो भवन्ति ता आधारीकृत्य गतिचित्रकाव्यानां समायोजनाः कृताः । किञ्च महिलानामाभ-रणानि यथा साहित्यिकालङ्कारनाम्ना व्यवहृतानि तथैव रेखानां माध्यमेनापि गतिचित्राणां भावनापूर्त्यै प्रयोग आचरितः ।

---

1 मुनिर्व्याडिस्तु भगवान् सर्वशाखीयलक्ष्यकृत् । ब्रह्माण्डपुराणे.

2 अनुक्रमश्चोत्क्रमश्च व्युत्क्रमोऽभिक्रमस्तथा ।
सङ्क्रमश्चेति पञ्चैते जटायां कथिताः क्रमाः ॥ ४ ॥ ऋग्वेदीयजटालक्षणे ।

अलङ्कारेषु क्वापि पुष्पाणि, क्वापि पत्राणि, क्वचिच्चित्राणि, कुत्रचिच्च नामाङ्कनानि रेखावर्ताश्च भवन्ति तथैवात्रापि चित्रसाहित्ये तासां पद्धतीनां विकासो दृश्यते। राजसभासु प्रायो ये विद्वांस आसन्, तेषां पाण्डित्य-परीक्षणं प्रायश्चमत्कृतिपूर्णेनैव कवनेनानुमाप्यते स्म। विविधराजकर्मसु व्यापृतस्य महाराजस्य मनसो भारापहाराय कियतेचित् कालाय च मनोविनोदोऽप्यावश्यक आसीदेव। तदर्थं पानगोष्ठ्या नृत्यप्रदर्शनेन मृगयाविहारेण च कतिपये जना समयमत्यवाहयन्। परं श्रद्धाराद्धगुरूपदिष्टाः सुरसरस्वतीसमुपासका विक्रम-भोजसदृक्षा राजानः प्रतिक्षण सारस्वतेनैव विनोदेन मनोभारापहाराय साभिलाषा आसन्। तादृशेषु मनोरंजककर्मसु चतुरंग-शतरंग-सहस्ररंगक्रीडन समस्यापूर्ति-प्रहेलिका-प्रश्नोत्तर-बिन्दुमतीप्रभृतीनां विभेदनादिकर्माणि च प्राधान्य-भांजि साधनान्यभूवन्। राजसभासु सामन्तीयसंस्कृतेः प्रदर्शनमेव राज्ञां रुचिकरं भवति इमेति भावनया विहिता इमे प्रयोगाः कलारूपेण प्रथितिं गताः। यथा संगीतपद्धतौ तान-मूर्च्छनादिप्रसारः, छन्दःसु मात्रावर्णप्रस्तारः, नर्तने करचरण-चालनप्रस्तारस्तथैव काव्यनिर्माणेऽपि कौशलविस्तारोऽवर्धत। पुरस्कार-प्रतिस्पर्धन-मन्त्रबलप्रतिभाप्रभावैरेते प्रयोगा मुखरीभूताः। श्रूयते हि महाराजोदित-नारायणस्य सदसि राजकविः शेखरनामाऽभूत्। एकदा दक्षिणदेशादागत्य तत्र 'युद्धं देहि' इति पुण्डरीकनामकेन कविना प्रार्थितम्। तदनुसारं महाराजेन तिथिनिर्णयः कृतः। प्रतियोगितायां शेखरकविना राधाकृष्णलीला-विषयिणी कापि रचना भावपूर्णा सरसा च श्राविता। समाकर्ण्य च सकलोऽपि सदस्यगणो मुदमन्वभूत्। परं पुण्डरीकेण यदा पाण्डित्यपूर्णया प्रक्रियया सर्वतोभद्र-सिंहावलोकनप्रभृतिचित्रकवित्वानां सद्योनिर्माणविधिना प्रदर्शनमाचरितं तदा सर्वा अपि सभा चमत्कृतिमादधती तस्मा एव विजयोपहारसमर्पणाय निरचिनोत्। तस्यामेव च निशि राजकविः शेखर आत्म-हननमकार्षीत्।[1] इत्यनया कथानिकया लोकानां तात्कालिकी रुचिः प्रकटीभवति। एवं जागतिकजीवनस्य गतिचित्रमुकुरे प्रतिबिम्बं सर्वथा समुपस्थितमेवास्यादिति पुरस्तादुदाहरणैरुपदीक्रियेत।

## गतिचित्रेषु पाठपद्धतयः

सर्वतः प्रथमा पाठपद्धतिस्तु सर्वविदिता वामतो दक्षिणगमनरूपा प्रसिद्धैवास्ते। सैव हि यदा दक्षिणतो वामगमनरूपा भवति तथा च तद्गत्याऽपि

1. श्रीरवीन्द्रनाथठक्कुरस्य 'जय-पराजय' कथाया आधारेण।

स एवार्थः समुन्मीलति तदाश्चर्यकोटिमाटीकत एव पाठकमानसम् । किञ्च दक्षिणपद्धत्याऽनयैव यदा पूर्वपठितप्रक्रिययाऽधिगतादर्थादपरोऽर्थः समुदेति तदा स तृतीय प्रकारो भवति तत्रापि प्राकरणिकार्थसमुज्जृम्भणं कस्य नो विस्मयाय भवेत् ? इदृशीस्वेव गतिषु १–प्राणि-गति-पद्धतिः, २–युद्ध-गति-पद्धतिः, ३–भ्रमण-पद्धतिः, ४–गोमूत्र-पतन-पद्धतिः, ५–मुरजबन्धन-पद्धतिश्चेत्यादयः पद्धतयोऽस्माकं मनांसि विशिष्यावर्जयन्ति । एतासु पद्धतिषु लोम-विलोम-ग्रह-मुक्तप्रकाराणां साहाय्येन नावीन्यमायाति । यथा हि—

## प्राणि-गति-पद्धतिः

अस्यां पद्धतौ प्रथमं सिंहगतिर्विचार्यते । सिंहस्य गमनं धीरगम्भीर-रूपेण भवति सहैव च स गमनवेलायां भूयोभूयः पृष्ठतोऽपि ग्रीवां वलयित्वा विलोकते । तदनुसारं प्रतिचरणं पद्यस्यापि वलयित्वा पदवर्धनानन्तरं पूर्व-पदस्यान्तिमः कश्चनांशोऽपि पादारम्भ आवर्त्यते । एनां रीतिं 'सिंहावलोक' यमक-नाम्ना यमकालंकारभेदेषु व्यवहरन्ति । गजगतेः किमपि वैचित्र्यं यद्यपि न भवति तथापि चतुरङ्गक्रीडायां गजः फलककोष्ठकेषु यथेच्छं गच्छन् शरीरेण स्थूलत्वात् तिर्यग्गत्या वलनगत्या वा गन्तुं न पारयति । अनया रीत्या पद्यनिर्माणप्रकारः प्रथमं रुद्रटेन प्रदर्शितः । यथा—

ये नानाधीनावा धीरा नाधीवाराधीरा राजन् ।

किं नानाशं नाकं शन्ते नाशङ्कन्ते श ते तेजः ।। काव्यालंकारः ५-१६ ।

अस्मात् पद्याद् गजपदन्यायेन श्लोक उत्पद्यते । स च श्लोकगत–प्रथम–नवम–द्वितीय–दशम–तृतीयैकादशचतुर्थ-द्वादशस्थानेभ्यः क्रमेणाक्षरोच्चयादुपलभ्यत इति नमिसाधुः स्मारयति । अनया दिशात्र प्रामुख्येन प्रथम-तृतीय चरणयो-र्द्वितीय–चतुर्थचरणगताक्षरमेलनेनास्यैव पद्यस्य पुनरावृत्तिरिह ज्ञायते तदिति गतिचित्रस्य वैचित्र्यं प्रतिपद्यते । इतः परं वाजिगतिरागच्छति । अश्वगतेरपि विवरणं रुद्रटः पुरस्कुरुते । तुरगगत्यां यद्वैशिष्ट्यं विद्यते तद्धि न सर्वजन-ज्ञान-सुलभमिति मन्ये, परं ये शतरञ्जफलके खेलनं जानन्ति ते विदन्ति यदश्वः पूर्वं कोष्ठकद्वयं समक्षं गच्छति ततः परं वक्रया गत्याग्रिमं कोष्ठक-माक्राम्यति । अस्या गतिपद्धतेरनुमानं मन्ये विवाहादिषु घोटीनर्तनमभिवीक्ष्य स्थिरीकृतं स्यात् ! उदाहरणपद्यं तदिदमस्ति—

सेना लीलीलीना नाली लीनाना नानालीलीली ।

नालीनालोले नालीना लीलीली नानानानाली ।। काव्यालंकार ५–१५

अस्य पद्यस्य पठनाय नमिसाधुः स्वटीकायां द्वितीयमेकं पद्यं पुरस्करोति यथा हि—

कशझे नागभटाय तथखे वेवराघवे ।
षजेथाढेपचेमेठे-दोणसछलडेफङे ॥

पद्यमदः 'सेनालीली'त्यादि श्लोकोपरि यथाक्रमाक्षरं लिखित्वा तत एतच्छ्लोकगतमातृकापठितकादिवर्णक्रमानुमित-तुरगपदक्रमेण प्रस्तुतः श्लोक उच्चीयते । सोऽयं प्रकारः सामान्यरूपेण कवेः पद्यनिर्माणकौशलं प्राथमिक-दृष्ट्या जनानां रुचिं जागरयन् कामपि विस्मयपदवीमारोपयति । यतोऽयं श्लोकः स्वान्यपादगताक्षराणां तादृशीं विचित्रां संयोजनां धारयति यया घोटीगत्यनुसारं पठनादपि विकृतिमभजन् स्वतां न जहाति ।

सरस्वतीकण्ठाभरणकारो भोजस्तत्रापरं वैचित्र्यं समुपस्थापयन् पूर्वं यत् पद्यमुदाहरति तत एव तुरगगत्यनुसारं पठनादपरं पद्यमुत्थापयति ।[1] पठनाव-बोधाय च—पंक्तिचतुष्टयेऽष्टाष्टकोष्ठकान्यालिख्य हयगतिक्रमाङ्कसंयुक्तानि पद्या-क्षराणि तत्र लिख्यन्ते । विकासपरम्परया पद्धतिरियं गुहपुरनिवासिना कृष्ण-कविना 'मन्दारमरन्दचम्प्वां' क्रमेणानेन यत् पद्यमुदाह्रियते तत एवैकस्मात् पद्यात् लघु-गुरुवर्णानां निवेशेन 'चतुरङ्गचित्र' नाम्ना विभिन्नवृत्तवता पञ्चचामर-प्रमाणिका-समानिकोपचामरप्रभृतीनां पञ्चपद्यानामुदयो बोधितः । तथा दण्ड-पार्श्व-वर्तुलकोणादिभेदेन घोटीगत्याद्याकारभेदेन च बहुधा परीक्षणायापि प्रेरयति । इत्थमेव काव्यकल्पलतावृत्तिकारो हरविजयमहाकाव्य-लक्ष्मीसहस्रकाव्यकर्तारौ च पृथक् पृथग् नामभिर्हयगतिप्रकारान् सूचयन्ति । चतुरङ्गफलके करभस्यापि स्थितिर्भवति परं तद्गतेरुदाहरणपद्यं किमपि न प्राप्यते । पशुगतिषु 'गरुड-गतिचित्र'—काव्यं लक्ष्मीसहस्रनाम्नि काव्ये वेङ्कटेश्वर इत्थं प्रदर्शयति—

मारमातहिमात्युग्ररविमा हितभाग् रमा ।
मानिता हितभीतानां धूतदुर्गत्युरुश्रमा ॥[2]

अस्य चाङ्कनक्रमबोधाय लक्षणपद्यमिदं टीकायां विद्यते

मध्ये स्यात् प्रथमादिद्व्यन्तरपङ्क्त्यक्षरस्पृगेवोर्ध्वम् ।
गरुडगतिचक्रबन्धो द्व्यर्धे द्व्यन्तैकयस्मिन्मण्डलकः ॥

अनया रीत्या चक्राकारकेऽस्मिन् बन्धे पद्याक्षराणां निवेशविशेषपद्धति-बलाद् मध्ये प्रथमादिपञ्चाक्षराणि, ऊर्ध्वं द्वे अन्तरे मध्ये पङ्क्त्यक्षरम् । प्रकृते 'रहि' इत्याकारके स्पृशति, द्वयोरक्षरयोरन्ते मध्यगतमक्षरं च स्पृशति ।

---

1 द्रष्टव्यं द्वितीयपरिच्छेदस्य ३०६ संख्यात्मकं पद्यम् सरस्वतीकण्ठाभरणे ।

2 २२ तमे चित्रस्तबके २३ तमं पद्यम् । लक्ष्मीसहस्रकाव्यम् ।

अस्मिन् चक्रे त्रीणि मण्डलानि भवन्ति । मध्यस्थमण्डलद्वयापेक्षया बाह्यं मण्डलं गरुडगतिवन्महद् भवति तस्मादेवास्यैषा संज्ञा ।

विदग्धमुखमण्डनकारो धर्मसूरिरपि पद्धतिमेनां विशदयन् काकपदजाति-नाम्ना पद्यमेकं प्रदर्शयति । वैशिष्टय' च तस्य काकस्य पदमिव व्यस्तत्व-मस्ति । यथा हि—

कुतः कः स्यात् कीदृक् कथय विषवैद्य स्फुटमिदं,
रिपोः कः कीदृक्षो भवति वशगः कश्च कलभः ।
प्रवीणः सम्बोध्यः सुभग वद कौ रत्नवचनौ,
सुरूपे विख्यातिं जगति महतीं का गतवती ॥ १६

प्रश्नानामेषामुत्तराणि—'नागदरतः नागतनयः, नागरमणी' इति भवन्ति । अस्यायमभिप्रायः—'यदा नागेभ्यो भयं भवेत् तदा मनुष्योऽगदरतो विषवैद्यः स्यात् । ना-गतनयः नाग-तनयः तथा नागरमणी (हीरकौ), नाग-रमणी इत्याद्यर्थैः पदत्रयेणश्च विविधानर्थानुपकल्प्य काकपदजातेः सार्थक्यं सम्पादयता गतिचित्रस्यैव कापि सम्पदा समुत्पादितास्ते । नमिसाधुः काव्यालकारस्य टीकायां 'नरपद'-बन्धस्यापि सूचनं करोति किन्तु तस्योदाहरणाभावे किमपि वक्तुं न पार्यते । इत्थमेव सैषा कविकर्मप्ररोचिनी प्राणिगतिपद्धतिः क्वापि मन्त्रिगत्या क्वचन भूपगत्या तदन्याभिश्च गतिभिः कमपि प्रकारविशेषं प्रपोष-यन्ती चित्रभूषण-ताण्डवतन्त्रादिषु विजृम्भते । तन्त्रग्रन्थे यन्त्रनिर्माणेऽपि पद्धतिरियं गतिद्वारेण लक्ष्यते । तद्विवेचनमपि गतिचित्रचर्चने सहयोगि भवेदिति ।

## युद्ध गति-पद्धतिः

आकर्ण्यते किल महासङ्ग्रामेषु व्यूहरचना–विशेषेण योद्धारः स्वां स्वां युद्धकलां समुपयोज्य विजयश्रियं वृण्वते स्म । प्रारम्भिकं मानवजीवनमपि युद्धायत्तमेवाभवदिति पुरातत्त्वविदां वादः । कवयोऽपि युद्धविद्यानिपुणाः सन्तः सङ्गरभुवि भूपालानां शौर्यसमुत्तेजकानि पद्यानि विरच्य तेषामुत्साहं वर्धयन्ति स्म । त एव संस्काराः साम्मनस्यं सम्प्राप्य चित्र-कवित्वेऽपि कौतुकसम्पादनाय प्रवृत्ता इति स्वीकरणे न कापि विप्रतिपत्तिरुदीयते । दाक्षिणात्येषु कवि-सम्राड् श्रीमदुपेन्द्रभञ्जनामकः कविः स्वकीये 'कोटि-ब्रह्माण्ड-सुन्दरी'-नामक-स्तोत्रे तथाविधं कमपि प्रयोगं प्रस्तौति । तत्र मानव–युद्धपद्धत्या सहैव 'मेषयुद्ध–पद्धत्या' अपि समावेशोऽस्माकं विस्मयाय प्रेरणायै च पर्याप्तः । भीमाधीवरनामान्यस्तत्रत्य एव कविः 'कपट–पाशा' – नामक – काव्येन कामपि द्वितीयामेव प्रणालिकां पुरस्करोति । उत्सवेषु महिष–युद्ध–मेष–युद्ध-

कुक्कुट–युद्ध–नकुल–सर्पसंग्रामादीनामपि मनोविनोदाय प्रयोग. क्रियते, किमिति नाम चित्रकवित्वानुरागिभिः संस्कृत-कविभिस्तस्यापि प्रदर्शनाय तेषां युद्धानां विशिष्टायाः पद्धतेराकलनं विहितं न वेति चित्रकाव्यानुसन्धानज्ञानशालिनां कृते गवेषणायै नोदयत्येव । कन्नडलिप्यां समुपलब्धस्यैकस्य जैनकवेः 'सिरिभूवलय'-नामक-ग्रन्थस्य विषये श्रूयते यत् तस्मिन् तादृशीनां गतिपद्धतीनां बहुधा प्रयोगो विद्यते किञ्च प्रत्येकं पद्धत्या पठनं कुर्वता जनेन पृथग् शास्त्राणां विषयाणां च विकासस्तत्रोपलभ्यत इति ।

## भ्रमण-पद्धतिः

अस्यां पद्धतौ पद्यपठनविधायां लोम–विलोमपठनं, पद-पाद–श्लोकार्ध-समस्तश्लोकार्धभ्रम–सर्वतोभद्रादीनि गतिचित्राणि मुखरितानि भवन्ति । तत्रापि गृहीत–मुक्तप्रकारः, लोमपाठेऽन्यकथायाः प्रयोगो विलोमपाठे चान्यस्याः कथायाः प्रयोगः श्रीसूर्यनारायणकवेः 'रामकृष्ण–विलोम'-काव्ये, चिदम्बरकवेः 'शब्दार्थ-चिन्तामणि'-काव्ये, महाकविराजचन्द्रस्य 'हरगौरीस्तोत्रे' तथा 'राघवयादवीय'-'यादवराघवीय' – सदृश – विलोमकाव्ययोश्च नितान्तं विस्मयपूर्णो विद्यते । महाकवि भारविरत्र विषये सर्वतः प्रथमः प्रयोक्ता वर्तते । दामोदरकवे-रसरूयपदबन्धः, चित्रालङ्कारकर्तुः कामधेनुबन्ध', चित्रभूषणकारस्य प्रतिकोष्ठक कवित्वं, गूर्जरकवेर्दलपतरामस्य 'सागर–बन्धः' भोजदेवस्य चान्ये बन्धा अप्येतामेव भ्रमणपद्धतिं यथातथ विकासयन्ति । ग्रहमुक्त–पद्धत्या निर्दिष्टानां 'कङ्कण–बन्धानां' गणनापि भ्रमण–पद्धता एवास्ति, किन्तु तेषां निर्माणेषु पाण्डित्य-प्रस्फारणं कामपि परां काष्ठामेव चुम्बति । उदाहरणाय चावलिरामसूरेः अलङ्कार–मुक्तावल्या इदं पद्यं गृह्यताम्–

सारांचारा रामामारा, कारा धारा दानाधारा ।
भामा रामा धारा दारा, दाना कादा धारा नामा ॥

एतस्य पद्यस्य कङ्कणाकृतौ द्वात्रिंशल्लघुवर्तुलैरङ्कनं विधीयते । प्रतिवर्तुलं चैकैकाक्षरमालिख्यते । ततः पठनवेलायां प्रथमवारं प्रथमवर्तुलात् पठनं, द्वितीयवारं च द्वितीयात्, तृतीयवारं च तृतीयादित्येव क्रमेण पठता प्रतिवारं चान्तिमचरणे प्रारम्भमुक्ताक्षरग्रहणं सम्पादयता द्वात्रिंशत् पद्यानि जायन्ते । तान्येव यदा विपरीतक्रमेण पूर्वोक्तपद्धत्या पठ्यन्ते तदा भूयोऽपि द्वात्रिंशत् पद्यानि जायन्ते । एवमाहत्य चतुःषष्टिमिताः श्लोकाः पठनमार्गवैचित्र्येणैकस्मादेव पद्या-दुत्पद्यन्त इति । अत्र भवन्ति विविधा अर्थाः । एतामेव पद्धतिमनुसृत्य श्रीकृष्ण-मूर्तिः कविः 'कङ्कण-बन्धरामायण'परनामकं पद्यं रचयति यस्मात् रामायण-

कथायाः सारो नियतेन विधिना १२८ पद्यद्वारा प्रकटीभवति । तत्रोपर्युक्तप्रकारेण चतुःषष्टिमितपद्यानां पठनानन्तरमर्धवलयपठनद्वाराऽर्धभ्रमपद्धतिमाश्रित्य समग्रा अर्था उत्पादिताः सन्ति । तदिदं मन्ये विश्वसाहित्ये सर्वथा कौतुकाधायि भवेत् ।

## गोमूत्र-पतन-पद्धतिः

गोमूत्रपतनं गच्छतो गोः प्रचलनजन्यस्खलनेन वक्रतिर्यग्रीत्या भवति । तदेवाधारीकृत्य कविभिः सेयं गोमूत्रिका - पठन - पद्धतिराविष्कृता । अस्या दर्शनं सर्वप्रथमं किरातार्जुनीयमहाकाव्ये भवति । ततः परं काव्यादर्शे दण्डिनास्य विस्तारः कृतः, परं भोजराजेनास्या नैके भेदा आविष्कृतास्तेषां नामदर्शनमत्र कार्यम् । यथा—

१– पादगोमूत्रिका (युग्मतः) [विषमपदात् समपदप्राप्तिरूपा]
२– पादगोमूत्रिका (अयुग्मतः) [समपदाद् विषमपदप्राप्तिरूपा]
३– अर्धश्लोकगोमूत्रिका
४– श्लोकगोमूत्रिका
५– विपरीतश्लोकगोमूत्रिका
६– भिन्नच्छन्दोगोमूत्रिका
७– संस्कृतप्राकृतगोमूत्रिका
८– समसंस्कृतपादगोमूत्रिका
९– अर्धगोमूत्रिकाप्रस्तारः [अन्यश्लोक-प्रसवी]
१०– गोमूत्रिकाधेनुः [३६ भेदशालिनी]
११– शतधेनुगोमूत्रिका (शतान्यश्लोकप्रसविनी)
१२– सहस्रधेनुगोमूत्रिका (सहस्रान्यश्लोकप्रसविनी)
१३– अयुतधेनुगोमूत्रिका (दशसहस्रान्यश्लोकप्रसविनी)
१४– लक्षधेनुगोमूत्रिका (लक्षान्यश्लोकप्रसविनी) (अनयैव ३०६० तथा चान्त्यपदभेद - सम्भ्रम - द्विरुक्तिपद्धत्या दशलक्ष-श्लोकप्रसवोऽपि भवति)
१५– कोटिश्लोकप्रसविनी गोमूत्रिका (या हि सम्भ्रमादिभेदैश्च दशकोटिश्लोकप्रसविन्यपि )
१६– कामधेनुगोमूत्रिका ( असंख्यपद्यप्रसविनी )

एवमेवानया पद्धत्या व्योमबन्ध - चक्रबन्धादीनामपि रचना भवतीति गवेषकैस्तत्र तत्र विवेच्यते ।

## मुरज - बन्धनपद्धतिः

प्राचीनं चर्मवाद्यमिद नादानन्दाये माधुर्याय वा रज्जुभिः परस्परमुभ-

यथा मुरजस्य चर्मभाग आकृष्यते । अस्य बन्धनप्रकारद्वारा पद्याक्षरपठनमपि गतिपद्धतिमेवानुसरति । रज्जुबन्धनाधारेणाक्षराणां निवेशः क्वापि श्लिष्यति क्वचिच्च पुनरावृत्तिमादधाति । विशिष्य च पूर्वार्धस्य विषमसंख्याकान्यक्षराणि उत्तरार्धस्य समसंख्याकैरक्षरैः सह मेलयित्वा पठनात् पूर्वार्धोत्पत्तिस्तथा उत्तरार्धस्य विषमसंख्याकान्यक्षराणि पूर्वार्धस्य समसंख्याकैरक्षरैः सह संयोज्य पठनादुत्तरार्धोत्पत्तिरत्र भवति । अयं चित्रालङ्कारोऽपि स्वल्पस्वल्पैरन्तरैरनेकप्रकारको भवतीति निम्नोद्धृतनामभिः सूच्यते । यथा— १-मुरजबन्धः (पंक्तिद्वयशाली), २-मुरजबन्धः (पंक्तिचतुष्टयशाली) ३-अनन्तरपादो मुरज, ४-इष्टैकाक्षरान्तरितो मुरजः, ५-गुप्तक्रियो मुरजः, ६-एकाक्षरो मुरजः, ७-मुरजप्रस्तारश्च । एतेशां पठनेन कापि नवीना साधीयसी प्रवृत्तिः परिचीयते । समन्तभद्रमुनेः 'स्तुतिविद्या'यामस्य निदर्शनानि समुपलभ्यन्ते ।

## सांसर्गिक-विश्लेषणं स्वरूपान्तरदर्शनञ्च

प्रायेण कवयः कुतूहलवर्धिनीं रचनामातन्वाना एकामन्यां पद्धतिं जनयन्ति । विमर्शकस्तत्रारुचिं बोधयन्नपि काममपि चित्रां सुषमामनुभवति । एवं रीत्या सर्पबन्धः (कलिकुण्डयन्त्राकृतिकः), द्विमुखसर्पबन्धः (लोमविलोमपाठात्मकः), नागशिशुबन्धः, शृंखला - बन्धः (द्विर्गत - त्रिर्गत - चतुष्पञ्चकृत्वोगतिकः), रथ - गवाक्ष - पताका - खड्ग - च्छुरिका - कमल - हारादि - बन्धेष्वपि गतिचित्रपद्धतिरक्षुण्णरूपेण विद्यमाना सती सांसर्गिकं बलमुल्लासयति ।

एतन्निवेदनस्यायमाशयोऽस्ति यत् कविमानसं जनो भिन्नभिन्ना पद्धतिमाहृत्य यथास्मै रोचते तथैव परिवर्त्य शाश्वतिकीं सृष्टिं तनोति । संस्कृतसाहित्ये चैते प्रयोगा विश्वस्य कस्मादपि साहित्यादात्मनो गौरवं प्रदर्शयन्ति । विद्वत्तां च शास्त्रनिकषकुतूहलमप्यत्रैव विश्राम्यति । यदि नामैतादृशकूटपद्धतिकसाहित्यानां बुद्धिबलोदयाय नियमिताध्ययनाध्यापने भवेतां तदा सुकुमारमतयो बालाः प्रखरमतिमन्तः प्रतिभासम्पन्नाश्च भवितुं शक्नुवन्ति ।

# मेधाव्रतशास्त्री तस्य प्रकृतिसौन्दर्यञ्च

## कु० माया परमहंस

अर्वाचीनसंस्कृतसाहित्ये महाराष्ट्रप्रान्तस्य महत् योगदानमस्ति। अस्य प्रान्तस्य महाविभूतिषु राजनीतिज्ञ-समाजसेवक-साहित्यकारेषु आचार्यमेधाव्रतस्य महत्त्वपूर्णं स्थानं वर्तते। नासिकजनपदे येवलाग्रामे जगजीवन इति ख्यातनामा कश्चिद् ब्राह्मण आसीत्। स धर्मपत्न्या सरस्वतीदेव्या सह स्वधर्मपालनं कुर्वन् सुखेन वसति स्म। जगजीवनः प्रथमं सनातनधर्मानुयायी बभूव, किंतु आर्यसमाजस्य विख्यातविदुषोः स्वामिदयानन्द-पंडितबालकृष्णयोरुपदेशेन प्रभावितो भूत्वा आर्यधर्मे दीक्षितोऽभवत्। स महान् विद्वानासीत्। तस्य पत्नी सरस्वती विदुषीं बभूव। तस्य गृहे १८९३ ख्रीष्टाब्दे जनवरीमासस्य सप्ततारिकायां मेधाव्रतस्य जन्माभवत्।

बाल्यादेव मेधाव्रतः कुशाग्रबुद्धिरासीत्। त्रयोदशवर्षीय एव स मराठीभाषाया अंतिमपरीक्षायां तथा आंग्लभाषायाः पंचमश्रेण्या परीक्षायां चोत्तीर्णो ऽभवत्। पश्चात् स सिकन्दराबाद-गुरुकुले अध्ययनायागच्छत्। यदा तद् गुरुकुलं वृन्दावने स्थापितं तदा ब्रह्मचारी मेधाव्रतोऽपि वृन्दावनं गतः। स पंचम-श्रेण्यामेव काव्यसर्जनोन्मुखोऽभवत्। तस्य सर्वप्रथमं लघुकाव्यं 'देशोन्नतिः' नामास्ति। अस्मिन् काव्ये केवलं पंचविंशतिः श्लोकाः सन्ति। सप्तमश्रेण्यां पठन् स "ब्रह्मचर्यशतकम्" इत्याख्यस्य ग्रंथस्य रचनामकरोत्।

गुरुकुले निवसन् स स्वपित्रा सह काश्मीरप्रान्ते, बदरीनारायणतीर्थक्षेत्रे च भ्रमणं करोति स्म। तत्र स प्रकृतिसौन्दर्येण मुग्धोऽभवत्। तत्प्रभावेण अष्टम-श्रेण्यां स "प्रकृतिसौन्दर्यम्" नाम श्रव्यकाव्यं रचितवान्। आंग्लभाषायामेका उक्तिरस्ति—Poet is born not made, सैषा तस्य विषये पूर्णरूपेण चरितार्था भवति। मेधाव्रतः जन्मजातकविः। स संस्कृतस्याशु-रचनां गुरुकुले विभिन्नावसरे स्वतंत्ररूपेण करोति स्म। तासां संग्रहः "पद्यतरंगिणी" नाम्ना प्रकाशितोऽस्ति।

स स्नातकस्य पदवीं न प्राप्तवान् यतः सोऽत्यन्तास्वस्थ आसीत्।

गुरुकुलं परित्यज्य कालान्तरे स सामाजिकक्षेत्रे प्रविष्टः । सर्वप्रथमं स कोल्हापुरवैदिकविद्यालये अध्यक्षपदे प्रतिष्ठितः, किन्तु तत्रापि सोऽस्वस्थ आसीत् । अतः तेन तत् पदं त्यक्तम् । तत्पश्चात् राष्ट्रिआन्दोलनसमये सूरतराष्ट्रियमहाविद्यालये प्राचार्यपदे तस्य नियुक्तिरभवत् । स षोडशवर्षाणि आर्यकन्यामहाविद्यालये, बड़ौदानगरे आचार्यपदं विभूषितवान् ।

कविरत्नमेधाव्रतः बहून् ग्रन्थान् रचितवान् तेषु अस्मिन् निबंधे 'प्रकृतिसौन्दर्यम्' इति नाटकस्य विवेचनं प्रस्तूयते । नाटकेऽस्मिन् प्रकृतिदेव्या विविधरूपाणि कश्मीरदेशानुसारीणि नाटककारो वर्णयति ।

## कथावस्तु

**प्रथमांकः**

अंकेऽस्मिन् भगवान् मुनीन्द्रो मायाप्रपंचरूपनाटकस्य सूत्रधार ऐन्द्रजालिकहेमन्तर्तोर्मनोरमवर्णनं करोति –

नानाविपक्वनवधान्यविचित्रतान्तां
कुर्वन् धरां तुहिनयन् सरितां जलानि ।
नीहारपुंजमलिनाम्बरवेषधारी
हेमन्त एष पुरतः प्रतिहारकः किम् ॥१.३५॥

**द्वितीयांकः**

पीताम्बरधारिब्रह्मचारिभिः ऋतुराजवसन्तस्य आगमनेन सज्जिताया वसुन्धरायाः श्रिया वर्णनं क्रियते –

नवकिसलयधारी शाखिसन्दोह एष
विकसितकुसुमाली राजते वल्लरीणाम् ।
अनुपमनवलक्ष्मीं नूनमेषा बिभर्ति
वनततिरिति हन्त स्वागतोऽयं वसन्तः ॥११॥

नाटकस्य नायकस्य आगमनसंकेतोऽत्र दृश्यते । स्वपितुराज्ञां प्राप्य युवराजचन्द्रकेतुः स्वराज्याभिषेकमंगलविधिसम्पादनार्थं भगवन्तं कुलपतिं नेतुं मन्त्रिपुत्रेण वसुचन्द्रेण सह गुरुकुलं समायाति ।

अपरेषु चतुर्ष्वङ्केषु ग्रीष्मादीनामृतूनां वर्णनं वर्तते ।

## चरित्र-चित्रणम्

नाटकमिदं प्रकृतिसौन्दर्यप्रधानं वर्तते । प्रथमं इदं काव्यं श्रव्य रूपेण रचितं किंतु नाटककारश्चारुत्वाय पात्राणां कल्पनां करोति । पात्राणां संवादद्वारेण प्रकृतिसौन्दर्यं वर्णितम् ।

युवराजचन्द्रकेतुरस्य नाटकस्य नायकः । राजकुमारचन्द्रकेतवे राज्यप्राप्ति-र्भवति अतः स नायकः । नाटकेऽस्मिन् न किमपि राजनीतिककूटरचना, न च अस्त्रादीनां झंकृतिः । शान्त्या युवराजचन्द्रकेतू राज्यं लभते ।

अस्य नाटकस्य नायिका प्रकृतिदेवी अस्ति । सर्वत्र प्रकृतिललनाया लावण्यं वर्णितम् ।

## नाटकस्य भाषाशैली

सरलभाषायाः प्रयोगे पटुरयं कविः । नाटकेऽस्मिन् सरलैव भाषा व्यवहृता । पद्यबहुला भाषा प्रसादगुणान्विता वर्तते । गद्यभागोऽपि सरलः । दीर्घसमासयुक्तानां पदानां प्रयोगोऽपि प्रायो दृश्यते ।

**अलङ्काराः**—अत्र शब्दालङ्कारा अर्थालङ्काराश्च स्वाभाविकरूपेण समावेशिता-श्चमत्कारं काव्यस्य संवर्धयन्ति ।

**छन्दांसि**—नानाछन्दःप्रयोगेण नाटकस्य शोभा वृद्धिं गता । इन्द्रवज्रो-पेन्द्रवज्रा - शिखरिणी - शार्दूलविक्रीडितादिच्छंदांसि विद्यन्ते ।

**रसः**—नाटकस्यास्याङ्गी रसः शान्त एव । पश्यन्तु

प्रकृतिजनितां निर्वर्ण्यतां गिरीन्द्रसुचारुतां
व्रजति सहसा सत्त्वाद् भिन्नं गुणद्वयमन्यतः ।
श्रयति हृदयं सव्यं सत्त्वं गुणं लघु पश्यतां
भवति च परं चेतो मग्नं मुदम्बुधिवीचिषु ॥१.३०॥

शुकसारिका अत्रोपदिशन्ति —

[illegible] पश्यताश्च —
मानन्दत ध्यायत वाप्तुमीशम् ।
तपोवनोर्वीरुहनीडभाजः
कीराङ्गना इत्थमिवागिरन्ति ॥१-३४॥

शृंगाररसः नाटकेऽस्मिन् गौणरूपेण विद्यते —
तद्यथा—

आन्दोलितेयं मलयानिलेन
पृथङ्नु कर्तुं कृतनिश्चयेन ।
पुष्पाभिरामा सहकारवल्ली
दृढं समाश्लिष्यति वृक्षमेनम् ॥२.२५॥

**सुभाषितानि** – सूक्तयोऽपि भावबोधने स्थले - स्थले समावेशिताः ।
यथा

(१) सदा वितनुते सुमंगलमहो सतां संगमना ॥१.३१॥
(२) महौजसां सन्ति विचित्रवृत्तयः ॥३.२५॥
(३) भवन्ति वन्ध्या नहि कस्य साधवः सदा सदन्तःकरणप्रवृत्तयः ॥६.६॥

**वर्णनानि** – काव्येऽस्मिन् प्रकृत्याः विविधरूपाणां गिरिकन्दरा - नदीनिर्झर-सागरसरोवर - वनोपवनाश्रम - पशु - ऋतु-नवनवरूपधारिकादम्बिनीनक्षत्रमंण्डलानां स्वाभाविकं चित्रणमस्ति।"[1]

यथा –

विमलकिरणदीप्ते राजिभी राजितोऽयं
वियति शशकलङ्को यामिनीकामिनीन्द्रः ।
नयनकुमुदजालं मोदयन् मोददायी
सचिववृत इवेशस्तारकैस्तारकेशः ॥२.४३॥

अन्यत्र—

हिमानीशुभ्रं यद् विशदशरदभ्र हिमगिरेः
सुश्रृङ्गं भात्येतत्तरुततिवृतश्चाम्बरलिहम् ।
पतन्तीनां तस्मादमलसुभरीणां जलकणा –
रवेरुस्रैर्मिश्रा दधति सुरचापस्य सुरुचम् ॥१.१२॥

प्रकृतिवर्णनेषु कालिदासस्य वर्णनसाम्यं स्पष्टं प्रतिलक्षितम् –

यथा **ऋतुसंहारे** –

पटुतरदवदाहाच्छुष्कसस्यप्ररोहाः परुषपवनवेगोत्क्षिप्तसंशुष्कपर्णाः ।
दिनकरपरितापक्षीणतोयाः समन्ताद्विदधति भयमुच्चैर्वीक्ष्यमाणा वनान्ताः ॥१२२

**प्रकृतिसौन्दर्यनाटके** –

चण्डांशुचण्डकिरणैर्धरणी प्रतप्ता पङ्कान्वितानि सलिलाशयपल्वलानि ।
क्षीणप्रवाहसहशैवलशैवलिन्यो भीमा वहन्ति पवना दहनानुलिप्ताः ॥३.१॥

**ऋतुसंहारे**

काशांशुका विकचपद्ममनोज्ञवक्त्रा सोन्मादहंसरवनूपुरनादरम्या ।
आपक्वशालिरुचिरानतगात्रयष्टि. प्राप्ता शरन्नववधूरिव रूपरम्या ॥३.१

**प्रकृतिसौन्दर्यनाटके**

विकस्वराम्भोजविलोललोचना
विकासिकाशालिदुकूलशालिनी ।

---

[1] मेधाव्रतकविरत्नकृतग्रन्थानां समालोचना – पृष्ठ – ३२

प्रफुल्लवाणासनकाननान्तरे
शरन्नटी नृत्यति हंसशिञ्जिनी ।। ५.१३

कविरत्नमेधाव्रतस्तपोवनस्य मनोरमं स्वाभाविकं च वर्णनं करोति । अनुप्रास-प्रयोगेण आश्रमस्य सुषमात्र दर्शनीया—

चञ्चच्चन्द्रकिचन्द्रकालिरुचिरज्योत्स्नाप्रदीप्तान्तराः
संखेलन्मृगबालजालललिता लोलल्लतापल्लवाः ।
बालोद्यानलसद्वटूत्तमगणाः शुष्यत्पिशंगाम्बरा
रम्भास्तम्भविशोभिहोमभवनाश्चित्रद्रुमा आश्रमाः ।। ३.१५

## नाटकस्य वैशिष्ट्यम्

प्रकृते विविधरूपाणां मनोरमं सजीवञ्चित्रण नाटकेऽस्मिन् वर्तते । शब्दसौष्ठवेऽपि कविरेव सिद्धहस्तः । माधुर्येण सह प्रसादगुणस्य सामंजस्यं वर्तते । अस्मिन् नाटके सर्वत्र भाषासारल्य दृश्यते । प्रकृतिचित्रणपूरितं काव्यमिदं शान्तिं ददाति । अस्य काव्यस्य पठनान्तरं मानवः प्रकृत्या विशालप्रांगणं गत्वा चिन्तां त्यक्त्वा कल्पनालोके विचरति । श्लिष्टवर्णनमेव कृतं कविना । चरित्रदूषकश्रृंगारितवर्णनं अत्र न विद्यते । प्रकृतिवर्णनपूर्णं काव्यमिदं रुचिकरमस्ति ।

नाटकस्य समीक्षा 'सुप्रभातम्' इति पत्रेऽधोलिखिता प्रस्तूयते-

"संस्कृतगगने प्रसरन्तीं श्रीमन्मेधाव्रतस्य वीक्ष्य प्रथमप्रतिभाप्रभामेधतेमानसमन्दमानन्दं विदन् मे सस्कृतिजागर्यायै पर्याकुलम् । मन्ये जागर्ति सुरभारती-जीवलोकः । स्वप्ननिमीलन्नयनयोः. चित्रपटस्य चारुचित्राणीव चिरं विभावितानि, दृष्टपूर्ववनोपवनमुनिजनाश्रमजलनिधिनदकल्लोलिनीगिरिनिर्झरनभोनक्षत्रकादम्बिनीसौदामिनीपुञ्जानि । सचकित उत्थितः । नष्टा दुर्नियतित्रियामा, प्रतिभाति स्म मंगलमयमुन्नति-प्रभातम् । प्रमोदस्य प्रथमालोके प्रेक्षितं 'प्रकृतिसौन्दर्यम्' यतः । एतत्कथनेऽपि मे न संकोचो यत् प्रकृतिवर्णनायां (प्राचीनपरिपाट्या) सिद्धिहस्तो ऽयं कविः । अस्य श्लोकाः क्वचित् क्वचित् प्राचीनमहाकवेरिव प्रतिभान्ति । पदलालित्येन सहार्थरमणीयता दुर्लभैव भवति; किन्त्वेतन्नाटकं तत्प्रतिवादस्वरूपं निरमायीत्यस्य लेखकस्संस्कृतज्ञानां भृशं धन्यवादार्हतां याति ।"[1]

---

1 मेधाव्रतकविरत्नकृत-ग्रन्थानां समालोचना—पृष्ठ—३२-३३

# संस्कृत-साहित्यं संरक्षणीयम्

संस्कृत-साहित्यस्य भारते देशे नाति स्पृहणीया स्थितिर्वर्तते। प्राचीनकालिका असंख्या एव ते ग्रन्था येषां केवलं नामानि श्रूयन्तेऽधुना। अपरञ्च लक्षाधिकास्सन्ति तेऽपि ग्रन्था येषां नामान्यपि न कर्णगोचरतां यान्ति। आधुनिकयुगस्य संस्कृत-साहित्यस्य तु विषादमयी गाथा विद्यते। अदृष्ट्वापि तत् संस्कृतज्ञनामधारिणो जनास्तस्य वैयर्थ्यं प्रवदन्ति। न खलु तेषां मतं सुसम्मतमिति आस्माकीना धारणा। न केवलं संस्कृत-भाषायामपितु यस्यां कस्यामपि भाषायां लिखितस्य साहित्यस्य एकापि पंक्तिः सप्रसङ्गं पर्यालोचिता सती बहुमूल्या जायते। अतः साहित्यस्य महता प्रयासेन संरक्षणं कर्तव्यम्।

केषाञ्चन मतेनाधुनिकसंस्कृत-साहित्यस्य काव्य-गौरवं सविशेषं नास्ति। न खलु अविपरीता दृष्टिस्तेषाम्। अन्यथा वापि न केवलं काव्य-गौरवाय साहित्यं संरक्षणीयमपितु साहित्यस्य बहुविधं प्रयोजनमपि परिलक्ष्य तस्य संग्रहणमवश्यमेव करणीयम्। साहित्यमेव ऐतिहासिक–सामाजिक–धार्मिक-सांस्कृतिक–राजनीतिक-विषयाणामनुत्तमं निधानं भवति। यथापूर्वमधुनापि संस्कृतमेव सा वाणी यस्यामखिलभारतस्यैकमुखेन सार्वकालिका भावाः सर्वान् विषयान् संस्पृश्य समुद्भाविताः। इयं सा वाणी अनादिकालतोऽद्यावधि भारतस्य राजनीतिकं सामाजिकं सांस्कृतिकमैक्यं कथं समुपाहितवतीति परिदर्शनार्थमपि संरक्षणमर्हति। नेदृशं धौरेयत्वं विश्वेऽस्मिन् कस्या अपि भाषाया विद्यते। का कथान्यासां भारतीयानां भाषाणाम्।

एतत्सर्वं विचार्य सागरविश्वविद्यालये आधुनिक-संस्कृतस्य संरक्षणार्थं परिकल्पनं समुपस्थापितम्। तथा हि आ षोडशशतकादद्यावधि विकसितं संस्कृतसाहित्यमधिकृत्य शोधकार्यं सञ्चालितम्। रूपक-महाकाव्य-लघुकाव्यादीनि अधिकृत्य पी. एच्. डी. उपाधये कतिपयच्छात्राः शोधकर्मणि व्यापृताः सन्ति। एतस्य युगस्य संस्कृतसाहित्यस्य बृहत्तरेतिहासस्य रचनापि परिकल्पिता। एतदर्थमुपर्युक्तयुगस्य साहित्यराशिर्भूयो भूयोऽपेक्ष्यतेऽस्माभिः। न तावत् तस्य प्राप्तिः यथेष्टं भवति। विक्रेतारोऽपि प्रकाशितानपि ग्रन्थानापणे न धारयन्ति यतो नाम तेषां ग्राहका न सन्ति। एतादृशान् हस्तलिखितान् वा प्रकाशितान् वा सर्वान् ग्रन्थान् सार्वजनीनान् कर्त्तुं सर्वेषां संस्कृतसमुपासकानां योगोऽपेक्ष्यते। संस्कृतिरक्षार्थं महत्तमं कर्मेदमित्यस्माकं निवेदनम्।

एतादृशान् प्रकाशितान् हस्तलिखितान् वा ग्रन्थान् क्रेतुमपि अधुना महानुद्योगो वर्ततेऽस्माकम्। विषयेऽस्मिन्नधोलिखितसङ्केतेन पत्रव्यवहारः कर्तव्यः–

डा॰ विश्वनाथ भट्टाचार्यः,

मन्त्री, संस्कृत-परिषद्, विश्वविद्यालयः, सागर (म. प्र)

# सागर-विश्वविद्यालये

## संस्कृतानुसन्धानस्य प्रगतिः (१९६६-६७)

गतवर्षेऽस्माकमनुसन्धानप्रवृत्तयः पूर्ववत् सञ्चरिताः । अधोलिखितौतावत् शोधनिबन्धौ पी. एच्डी. उपाधये समर्पितौ—

(१) श्री शिवदर्शनतिवारी-ऊनविंशशताब्दस्य संस्कृत-रूपकाणां विकासः ।

(२) कुमारी मनोरमा सक्सेना—यतीन्द्रविमल-चतुर्धुरीणः, तस्य कृतित्वञ्च ।

अधोलिखिता अभिनवविषयाः शोधार्थं स्वीकृताः

(१) श्री गणेशप्रसादस्य कृते—षोडशशताब्दस्य संस्कृत-रूपकाणां विकासः ।

(२) श्रीमद्दिनेश कृते—महाभारतीय-शिक्षण-व्यवस्था

(३) कुमारीमायापरमहंस । कृते—मेधाव्रतशास्त्री तस्य कृतित्वञ्च ।

(४) श्रीवेदप्रकाशपाण्डेयस्य कृते—विंशशताब्दस्य महाकाव्यानांविकासः ।

(५) श्रीगोपीकृष्णद्विवेदिनः कृते—महाभारतीया युद्धनीतिः ।

# सा ग रि का

त्रैमासिकी

षष्ठवर्षम्, २०२४ वि० सं०

षष्ठवर्षे द्वितीयाङ्कः

सम्पादक

प्रो० रामजी उपाध्यायः एम० ए०, डी० लिट्०

संस्कृत-विभागाध्यक्षः

**प्रकाशिका**
संस्कृत-परिषद्
सागरिका-समितिः
सागर-विश्वविद्यालयः, सागरम् (म. प्र.)

देयम्

| | |
|---|---|
| प्रत्यङ्कम् | २ रूपकाः |
| वार्षिकम् | ६ रूपकाः |
| वस्त्रावरणसंहितवार्षिकचतुरङ्काणाम् | ८ रूपकाः |
| आजीवनग्राहकस्य | १०० रूपकाः |

अङ्कनिर्गमनम् आषाढाश्विन–पौष–चैत्रमासेषु
(जून-सितम्बर-दिसम्बर-मार्च)

**चेकद्वारा सम्प्रदानार्थं देयेषु उपर्युक्तधनेषु अपरं रूप्यकमेकं संयोजनीयम्।**

मुद्रकः
नरहरी गोविन्द वेडेकरः
सागर-विश्वविद्यालय-मुद्रणालयः
सागरम् (म. प्र.)

## सूचीपत्रम्

# शाब्दी व्यञ्जना

डा० रविशङ्कर नागर

व्यंजना द्विविधा। शाब्दी व्यञ्जना, आर्थी व्यजना चेति। यथोक्तं गोविन्द-ठक्कुरमहाभागैः—

"अथ व्यंजकशब्दलक्षणाय व्यंजना निरूपणीया। सा च द्वेधा। शब्दनिष्ठा अर्थनिष्ठा च।"[1]

## (१) शाब्दी व्यञ्जना

शब्दनिष्ठा व्यंजना शाब्दी। शाब्द्यां व्यंजनायां शब्दस्यैव प्राधान्येन व्यंजकत्वम्। यदि व्यंजकं शब्दं परिवर्त्य तत्पर्यायान्तरः शब्दः प्रयुज्यते, तर्हि व्यङ्ग्यार्थस्याप्रतीतौ शब्दस्य व्यंजकता सर्वथा त्रुट्यति। अतः परिवृत्ति पर्यायशब्देन परिवर्तनमसहिष्णोः शब्दस्य सद्भावे व्यङ्ग्यार्थोल्लासात्तदभावे च तदनुभवाच्छब्दमवलम्बमाना व्यंजना शाब्दी। नहि शाब्द्यां व्यंजनायां व्यंजकशब्दस्य तत्पर्यायवाचिशब्दान्तरेण विपर्यये कृते व्यङ्ग्यार्थस्य प्रतीतिः। नियतः परिवृत्तिमसहमान एव शब्दोऽत्र व्यंजकः। अतो व्यंजकता सर्वथा परिवृत्त्यसहशब्दायत्तेति कृत्वा शब्दनिष्ठा व्यंजना शाब्दीति व्यपदिश्यते।[2] तद्यथा—

भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसंग्रहस्य।
यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत्॥[3]

---

[1] (क) सम्पादकः, पण्डित दुर्गाप्रसाद, गोविन्द-काव्य-प्रदीप, पृ० ३६

(ख) द्वेधा चैषा-शाब्दी आर्थी चेति। शाब्दी द्वेधा-अभिधालक्षणामूलत्वात्। सम्पादक, पण्डित शिवदत्त, विद्याभूषण-साहित्यकौमुदी, पृ० १६

[2] (क) शब्दस्य पर्यायपरिवृत्यसहत्वाच्च शाब्दत्व व्यंजनाया बोध्यम्। सम्पादक, अभ्यङ्कर, वासुदेव शास्त्री, मम्मट-काव्यप्रकाश, उद्योत टीका, पृ० ६२

(ख) तत्र येषां शब्दानां विनिमयः कर्तुं न शक्यते, तदाश्रया व्यंजना। सम्पादक, शर्मा, बटुक-नाथ, आशाधर-त्रिवेणिका, पृ० २५

[3] करमरकर, रघुनाथ दामोदर, मम्मट-काव्यप्रकाश, पृ० ६२

इत्यत्र भद्रकरादयश्शब्दा यथाश्रुतगृहीताः कल्याणपाणीत्यादिभिः पर्यायशब्दैः परिवर्तनमसहमाना गजरूपिणमर्थमभिव्यंजन्ति, ननु विपर्ययेणेतिकृत्वा नियतानां परिवृत्तिमसहिष्णूनां शब्दानां व्यंजकत्वे शब्दस्य व्यंजना शाब्दी। अयमाशयः। पूर्वोक्ते पद्ये भद्रादयश्शब्दा नृपगजरूपौ द्वावर्थौ बोधयतः। तत्र नृपपक्षे राजाऽयमुच्चान्वयः, शत्रुभिरप्रधर्ष्यः सततं दानादिभिः परेषामुपकारक इत्यर्थः। गजपक्षे च भद्रजातीयोऽयं हस्ती गण्डस्थलनिष्यन्दिमदपिपासुभिः भ्रमरकुलैः परिवृतोऽत्युच्चो बलिष्ठश्चेत्यर्थः। अत्र भद्रादयश्शब्दाः परिवर्त्य तत्स्थाने कल्याणादिपर्यायशब्दा यदि प्रयुज्येरन्, तदाऽनयोर्द्वयोः प्रतीतिर्व्याहन्येत। एवं परिवृत्तिमसहमानैर्भद्रकरादिपदैरेवात्र नृपगजरूपिणोरर्थयोः प्रतीतिः। राजवर्णनप्रसङ्गे नृपरूपिणोऽर्थस्य प्रतीतिः प्राकरणिकी, परं गजरूपिणोऽर्थस्य प्रतीतिरप्राकरणिकी। आद्योऽर्थः प्राकरणिकत्वादभिधया बोध्योऽन्यश्च व्यंजनया। व्यंजनात्र कल्याणादिपर्यायपदपरिवृत्तिमसहमानैर्भद्रादिपदैर्गजरूपिणमर्थं ध्वनयतीति कृत्वा शब्दनिष्ठा शाब्दीति व्यपदिश्यते।

शाब्दी व्यंजनापि द्विविधा। अभिधामूला लक्षणामूला चेति[1]।

## (क) अभिधामूला शाब्दी व्यंजना

अभिधामूले यस्याः सा अभिधाश्रिता व्यंजना अभिधामूला। अभिधामूलेति नामकरणे बीजद्वयम्। प्रथमं बीजं तावत् नानार्थशब्दस्थले प्रथममभिधाप्राकरणिकमर्थमभिदधाति, अनन्तरञ्चाभिधाया प्रकरणादिप्रतिबन्धकसामग्रीवशात् प्राकरणिकेऽर्थे नियंत्रितायां सत्याम्, तत्रैव परिस्फुरन्तमप्राकरणिकमर्थमभिव्यंजयितुं व्यंजनावतरति। एवमभिधायाः प्राकरणिकेऽर्थे नियंत्रणात्, अप्राकरणिकमभिधाऽशक्यसमर्प्यमर्थमवगमयितुं व्यंजनाङ्घ्रि निदधातीत्यभिधानन्तरभावित्वात्तस्या अभिधामूला व्यंजनेति व्यपदेशो युक्तः। द्वितीयं बीजं हि नानार्थशब्दस्थले प्रतीतिपथमवतीर्णा उच्चावचा अर्था अभिधेया एव, नानार्थकानां शब्दानां तेषु सङ्केतात्। यथा हरिरिति नानार्थकश्शब्दो विष्णुवानरादिषु नानार्थेषु गृहीतसङ्केतः[2]। अतो विष्णुवानरादयोऽभिधेयार्था हरिरिति पदस्य। परं प्रकरणादिप्रतिबन्धकवशान्नानार्थकानां

---

1. अभिधालक्षणामूला शब्दस्य व्यंजना द्विधा।

—विश्वनाथ, साहित्यदर्पण, २, १३

2. यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु।
शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु॥

—अमरसिंह, अमरकोष, ३, १७५

शब्दानां शक्तिः प्राकरणिकेऽर्थे नियंत्रिता भवति । अतोऽनेकार्थकस्य शब्दस्य संकेतितान्नानार्थान् बोधयितुं क्षमाप्यभिधा प्रकरणादिप्रतिबन्धकनिगडीकृता तानर्थान् बोधयितुं न खलु पारयति । तत्राप्राकरणिकमर्थं प्रतिबन्धकसामग्रीशृङ्खलीकृतया अभिधया अशक्यसमर्प्यं व्यंजना द्योतयति। अतो व्यंजना अभिधेयार्थमेवाभिदधाति, योऽसावर्थः प्रकरणादिप्रतिबन्धकसामग्रीवशान्नाभिधाबोध्यः । इत्थं योऽर्थोऽभिधया प्रतिपाद्यः स एवार्थो व्यजनया बोध्यते इति कृत्वाऽसावभिधामूलेत्युच्यते । अतोऽभिधानन्तरोत्थानात् प्रकरणनिरूद्धस्याप्यभिधेयस्यैवार्थस्य च प्रत्यायनादिति द्वाभ्यां बीजाभ्यां शाब्दी व्यंजना अभिधामूलेति । तल्लक्षणं यथा—

"अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते ।
एकत्रार्थेऽन्यधीहेतु व्यंजना साऽभिधाश्रया ।।[1]

अयमाशयः । भर्तृहरिणा स्वकीये वाक्यपदीये

"संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ।
सामर्थ्यमौचितीः देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ।।"[2]

संयोगादयोऽनेकत्र गृहीतशक्तिकानां हरिरित्यादीनां पदानामेकस्मिन्नर्थे नियामकाः प्रोक्ताः । तेन नानार्थकोऽपि शब्दः प्राकरणिकमेवार्थमभिदधाति, नाप्राकरणिकम् । तद्यथा 'सशङ्खचक्रो हरि'रित्यत्र संयोगे प्रतिबन्धके जागरूके सति, नानार्थकस्यापि हरिशब्दस्य शक्तिर्विष्णुरूपिण्यर्थे एकत्र नियमिता । शङ्खचक्रयोर्विष्णुना सहैव सम्बन्धान्नान्येन वानरादिना सह । अतः संयोगनियंत्रितशक्तिको नानार्थकोऽपि हरिशब्दो विष्णुरूपिणमर्थमेवाभिदधाति नेतरं वानरादिकम् । 'रामलक्ष्मणौ' इत्यत्र परशुरामबलरामादिनानार्थेषु गृहीतशक्तिकोऽपि रामशब्दः साहचर्यवशाद्दशरथसुतं रामरूपमर्थमेवाभिदधाति, रामशब्दस्य शक्तेः साहचर्याद् राघवरूपिण्यर्थे नियंत्रणात् । एवमनेकत्र गृहीतशक्तिकानामपि पदानां शक्तिः संयोगादिषु प्रतिबन्धकेषु जाग्रत्सु सत्सु प्राकरणिकेऽर्थे एकत्र नियता; प्राकरणिकार्थेतरमर्थं सङ्केतितमपि बोधयितुं न प्रगल्भते । प्रत्युत संयोगादिभिः प्रतिबन्धकैर्नियंत्रितायाः अभिधायाः प्राकरणिकार्थप्रत्यायने एवोपक्षयः । अत एवंविधेषु स्थलेषु

---

1 विश्वनाथ, साहित्य-दर्पण, २,१४

2 (क) भर्तृहरिः, वाक्यपदीय, २,३१७ (ख) मम्मट, काव्य-प्रकाश, २,१९
(गं) सम्पादक, पण्डित शिवदत्त, हेमचन्द्र-काव्यानुशासन, पृ० ३९

या अप्राकरणिकार्थप्रतीतिः सा शक्तिभिन्नेनान्येन व्यापारेणैव निर्वाह्या। स एवाप्राकरणिकार्थं बुबोधयिषुर्व्यापारो व्यंजनाऽभिधामूला। तद्यथा

दुर्गालङ्घितविग्रहो मनसिजं सम्मीलयंस्तेजसा।
प्रोद्यद्राजकलो गृहीतगरिमा विष्वग्वृतो भोगिभिः॥
नक्षत्रेशकृतेक्षणो गिरिगुरौ गाढां रूचिं धारयन्।
गामाक्रम्य विभूतिभूषिततनू राजत्युमावल्लभः॥[1]

इत्यस्मिन्नुदाहरणे प्रकरणवशान्नानार्थकानां दुर्गभोगिविभूत्यादीनां पदानां शक्तिर्वर्ण्ये भानुदेवरूपिण्यर्थे नियन्त्रिता। तेन चानेकत्रगृहीतशक्तयः अपीमे शब्दाः 'भानुदेवनृपोऽद्भुतपराक्रमशाली, रूपेण कामदेवमप्यतिशयानः, स्वाधीनीकृतनृप-मण्डलः, भगवतो महादेवस्य परमो भक्तः' इत्यमुमेवार्थमभिधाय कृतकृत्याः। परमे-भिरेव शब्दैः परिवृत्तिमसहमानैः 'पार्वतीवल्लभश्चन्द्रभूषणो विभूतिविभूषितशरीरः परमेश्वरो महादेव' इत्यर्थोऽपि सहृदयानां प्रतीतिपदवीमधिरोहति। नायमपरोऽर्थो महादेवरूपः अभिधया प्रतिषाद्यः। तस्याः प्रकृते भानुदेवनृपरूपिण्यर्थे संयोगादिवशा-न्नियंत्रितत्वात्। यद्यु भावर्थौ प्राकरणिकौ स्याताम् तर्हि संयोगादिप्रतिबन्धकाभावे अभिधाबोध्यत्वं तयोरुपद्येत। परं यत्र प्राकरणिकेन सहाप्राकरणिकस्याप्रस्तु-तार्थस्य प्रतीतिरुदेति, तत्र व्यापारान्तरमवश्यमभ्युपेयम्। न ह्यशक्तः शब्दः कदा-प्यर्थं बोधयितुं प्रभवति। शक्तिश्चाभिधा। सा च नियंत्रिता प्रकृतेऽर्थे भानुदेवरूपे संयोगादिना प्रतिबन्धकेन। नापि च लक्षणा, मुख्यार्थबाधादिसहकारिसामग्र्यभा-वात्। अतो यद् व्यापारान्तरमवशिष्यते, तद् ध्वननमेव[2] दुर्गभोगिभूत्यादीनां पदानां परिवृत्यसहत्वात् तदवस्थेभ्य एव तेभ्यो महादेवरूपिणोऽर्थस्य ध्वननात्, तत्र प्रभवन्त्या व्यंजनायाः शाब्द्यभिधामूलेति नामकरणं सर्वथा युक्तियुक्तम्।

नानार्थकेभ्यश्शब्देभ्योऽभिव्यक्तः प्राकरणिकार्थेतरोऽर्थो द्विविधः। वस्तुरूपोऽ लङ्कारऱूपश्चेति। वस्त्वात्मकेऽर्थे व्यङ्ग्ये सति वस्तुव्यंङ्ग्या अभिधामूला शाब्दी

---

1 सम्पादक, सिह, डा० सत्यव्रत, हिन्दी साहित्यदर्पण, पृ० ८०

2 'अत्र हि शब्दद्वयकल्पने कथं प्रकृतार्थस्य प्रथमं प्रतीतिः, द्वयोरभिधेयत्वेन पूर्व-पश्चाद्भावनैयत्यासम्भवात्। किञ्च द्वितीयार्थबोधने धर्मिकल्पनातो वरं धर्म-कल्पनेति भिन्नशब्दकल्पनात् भिन्नैव व्यंजनाख्या वृत्तिरङ्गीकर्तुमुचिता॥'

सम्पादक, शिव-प्रसाद भट्टाचार्य, मम्मट-काव्यप्रकाश, काव्यप्रकाशदर्पणटीका, पृ० ४८

व्यंजना अलङ्काराणामुपमादीनाञ्च ध्वनने सत्यलङ्कारव्यंङ्ग्याऽभिधामूला शाब्दी व्यंजना। यथोक्तं मम्मटभट्टेन—

'अलङ्कारोऽथ वस्त्वेव शब्दाद्यत्रावभासते।
प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा ॥[1]

## (१) वस्तुव्यङ्ग्या अभिधामूला शाब्दी व्यंजना

परिवृत्यसहै व्यंजकैः शब्दैर्वस्तुरूपिणोऽर्थस्य व्यङ्ग्यत्वे वस्तुव्यङ्ग्या अभिधामूला शाब्दी व्यंजना। तद्यथा—

पंथिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे।
उण्णअपओहरं पेक्खिऊण जइ वससि ता वसहु ॥[2]

छाया— पथिक नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे।
उन्नतपयोधरं प्रेक्ष्य यदि वससि तदा वस ॥

अत्र नानार्थकस्य पयोधरशब्दस्य शक्तिर्मेघरूपिण्यर्थे नियंत्रिता। अतः स्तनरूपोऽर्थोऽत्र व्यंजनया प्रत्याय्य;। तेन च यद्युपभोगक्षमोऽसि तदाऽऽस्व इति वस्त्वात्मा व्यङ्ग्योऽर्थः परिस्फुरति। अयमाशयः। अत्र काचित्तरूणी प्रावृट्समये पथिकं कंचन ग्रामागत वदति यदस्मिन् ग्रामे कटाद्यास्तरणानामभावः। अतो ग्रामोऽयं न वासयोग्यः। परं तथापि वियति विसर्पतो मेघान् दृष्ट्वा धारासम्पातवृष्टिशंकया यदि तवात्र विश्रामेच्छा तदा विस्रब्धं विश्रम्यताम्। अयमर्थः प्राकरणिकोऽभिधाबोध्यः। पयोधरादीनां नानार्थकानां पदानां शक्तेर्मेघाद्यर्थे नियन्त्रणात्। अनन्तरं शब्दशक्तिमूलध्वनिमहिम्ना परिवृत्यसहैः पयोधरादिभिः पदैः प्रवृद्धमदनकातुर्यायाश्चौर्यरतलुब्धायाः कस्याश्चिदविनयवत्या उपभोगविषयोऽभिलाषो व्यंङ्ग्यो वस्तुरूपोऽभिव्यक्तो भवति। अस्मिन् ग्रामे मूर्खाणां ग्रामीणानां शास्त्रादिज्ञानं नास्ति, अतोऽनुपभुक्तौ कामिजनमन्मथोज्जृम्भकौ ममोन्नतौ कुचकुम्भौ दृष्ट्वा यदि कामुकोऽसि, तदोपभोगार्थं त्वयाऽवश्यमेवात्र स्थातव्यमित्यर्थो ध्वनितो भवति। अयमर्थो वस्तुरूपः परिवृत्तिमसहिष्णुभिः पयोधरादिपदैरेवाभिव्यक्तो भवति। तद्विपर्यये मेघादिशब्दप्रयोगे तादृशार्थास्फुरणात्। अतोऽत्र शाब्दी वस्तुव्यङ्ग्याभिधामूला व्यंजना स्फुटा।

---

1 सम्पादक, करमरकर, दामोदर-रघुनाथ, मम्मट-काव्यप्रकाश, पृ० १२८

2 तत्रैव, पृ० ११७

## (२ अलङ्कारव्यङ्ग्य अभिधामूला शाब्दी व्यंजना

परिवृत्तिमसहमाना अनेकत्र गृहीतशक्तिकाः शब्दा यदा अभिधाव्यंजनाभ्यां प्राकरणिकाप्राकरणिकोभयविधमर्थं बोधयन्ति, तदा विभिन्नयोरनयोरर्थयोः सम्बन्धः कश्चिदवश्यं कल्पनीयः, अन्यथा असम्बद्धार्थाभिधानदोषप्रसंगः । असौ सम्बन्ध उपमोत्प्रेक्षाद्यलङ्काररूपः । तेन प्राकरणिकाप्राकरणिकयोरर्थयोः परस्परमुपमेयोपमानभावेनावस्थानान्नासम्बद्धार्थदोषप्रसङ्गः । एवं नानार्थकेभ्यः शब्देभ्योऽलङ्काराणां व्यङ्ग्यत्वे सत्यलङ्कारव्यंङ्ग्य अभिधामूला शाब्दी व्यंजना भवति । तद्यथा–

उल्लास्य कालकरवालमिवाम्बुवाहं देवेन येन जरठोर्जितगर्जितेन[1] ।
निर्वापितः सकल एव रणे रिपूणां धाराजलैस्त्रिजगति ज्वलितः प्रतापः ।।

इत्यत्रानेकत्रगृहीतशक्तिकैर्देवादिपदैर्नृपदेवेन्द्ररूपिणोरर्थयोः प्रतीतिः । तत्र नृपरूपोऽर्थः प्राकरणिको देवेन्द्ररूपश्चाप्राकरणिकः । प्राकरणिके नृपवर्णनप्रसङ्गे कालकरवालादीनां पदानां शक्तिः संयोगादिभिः प्रतिबन्धकैः कृपाणाद्यर्थेषु नियम्यते निगडिताया अभिधायाः पुनरुत्थातुमशक्यत्वादेभिरेव पर्यायान्तरमसहिष्णुभिः पदैरप्राकरणिकदेवेन्द्रार्थसम्बद्धानां मेघाद्यर्थानां प्रतीतिर्ध्वननशक्तिमहिम्ना । अनन्तरमप्राकरणिकस्येन्द्रदेवरूपिणोऽर्थस्य प्राकरणिकेन नृपरूपेणार्थेन सह सम्बन्धोऽपि कश्चिदन्वेष्टव्यः । अन्यथा देवेन्द्ररूपः अर्थोऽसम्बन्धत्वाद्धेय एव स्यात् । सम्बन्धश्चात्रोपमानोपमेयरूपः । तथासति महेन्द्र एवायं राजेति नृपमहेन्द्रयोरभेदात् रूपकालङ्कारोऽभिव्यक्तो भवति । अतएव नात्रासम्बद्धार्थकथनदोषकलङ्कः, प्रत्युत रूपकालङ्कारस्य घण्टानुरणनन्यायेन ध्वननाद् गुणोऽधिकः । रूपकालंकारश्चात्र व्यंग्य एव, महेन्द्र एवायं राजेति स्वशब्देनानावेदनात् । एवमिन्द्रादिपर्यायान्तरपदमसहमानैर्देवादिपदै रूपकालङ्कारस्य ध्वनने कर्त्तव्येऽलङ्कारव्यंङ्ग्य अभिधामूला शाब्दी व्यञ्जनात्र सूरिभिर्विभाव्या ।

### (अ) अभिधामूलायाः शाब्दया व्यञ्जनाया विषये आनन्दवर्धनाचार्यस्य मतम् ।

आनन्दवर्धनाचार्येण शाब्द्या अभिधामूलाया व्यञ्जनाया लक्षणमित्थमुपनिबद्धम्—

---

[1] सम्पादक, करमरकर, दामोदर-रघुनाथ, मम्मट-काव्यप्रकाश, पृ० १२६

आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते ।
यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः ॥[1]

अयमाशयः । यत्र परिवृत्त्यसहशब्दसामर्थ्येनालङ्कारान्तरं व्यङ्ग्यं स्वशब्दानावेदितं सत् प्रकाशते, तत्र शब्दशक्तिमूलो ध्वनिः । यत्रालङ्कारस्य न प्रतीयमानता, प्रत्युत अभिधानशक्त्या वाच्यं सत् साक्षादलङ्कारोऽभिधीयते, तत्र न ध्वनिरपितु श्लेषादयो वाच्यालङ्काराः । एवमानन्दवर्धनाचार्यमते अलङ्काराणां प्रतीयमानतायामेव शब्दशक्तिमूलो ध्वनिः । तद्यथा—

उन्नतः प्रोल्लसद्धारः कालागुरुमलीमसः ।
पयोधरभरस्तन्व्याः कं न चक्रेऽभिलाषिणम् ॥[2]

अत्र केनचिदनुरागिणा व्यामोहितेन कस्याश्चिद् हृदयवल्लभायास्तरुण्या रत्नहारविभूषितं कालागुरुलेपननीलं मन्मथोज्जृम्भकं कामिजनसर्वस्वायमानं कुचकुम्भयुगलं प्रशस्यते । सुन्दरीकुचकलशरूपोऽर्थोऽभिधया समुपस्थाप्यः । एभिरेव पदैः प्रावृण्मेघरूपोऽर्थोऽपि प्रस्फुटति । अत्र स्तनमेघरूपावर्थौ यद्यप्यभिधेयौ, पयोधरशब्दस्योभयत्र शक्तेस्तथापि स्तनमेघयोः परस्परं या रूपणा उपमारूपकादीनामलङ्काराणां प्रसवित्री, असावनभिधेया व्यङ्ग्यत्वेनैव भाति, चमत्कृतिञ्चातनोति । एवं मेघस्तनरूपिणोरर्थयोः प्रतीतिरभिधया भवेन्नाम, परं द्वयोरर्थयोर्या रूपणा सात्वनभिधेयत्वाद् व्यङ्ग्यैव ।

अनेनेदमायाति यदानन्दवर्धनाचार्येण नानार्थकेभ्यः पदेभ्य अलङ्काराणामेव व्यङ्ग्यत्वे शब्दशक्तिमूलो ध्वनिः सम्प्रतिपन्नः । यदि वस्तुरूपिणोऽर्थस्य प्रतीतिस्तदा न ध्वनिस्तत्र श्लेषाद्यलङ्कारा वाच्याः । नानार्थशब्दस्थले उपमानोपमेयभाव उपमोत्प्रेक्षादीना प्राणभूतः सर्वदाऽनभिधेयः । वस्तुरूपः प्राकरणिकोऽर्थस्तु शब्दस्य स्वार्थ एव । परमलङ्काराणां गोप्यमानतया परिस्फुरणात् तद्वैपरीत्ये वस्तुरूपिणः प्राकरणिकार्थस्य च साक्षादभिधेयत्वाच्छब्दशक्तिमूलो ध्वनिः सर्वदाऽलङ्काररूप एवाचार्यानन्दवर्धनमते ।

इत्थं पूर्वोदाहृते पद्ये पयोधरेत्यादिपदैः प्रोक्तौ स्तनमेघरूपिणौ द्वावर्थावभिधेयावेव शब्दानां तत्र सङ्केतात् । परं स्वशब्दावेदितोऽभिधेयोऽपि मेघरूपोऽर्थो न स्वात्मनि विश्रान्ति भजते, प्रत्युतोपमानभावेनावतिष्ठमानः स्तनरूपेणार्थेन सह रूपणामुपपच्छन् वाक्यार्थं बुभूषयन् रूपकालङ्कारस्य

---

१ सम्पादक, शास्त्री, पण्डित पट्टाभिराम, आनन्दवर्धन-ध्वन्यालोक, २.२१
२ तत्रैव पृ० २४२

व्यङ्ग्यत्वे निबन्धनमुपयाति । यदि तन्व्याः कुचकुम्भरूपार्थप्रतीत्युत्तरमनुभूयमानो मेघरूपोऽर्थोऽभिधेयोऽसम्बद्ध एव स्यात्, तदा परिहेय एव स्यात् । अतोऽसम्बद्धार्थाभिधानमेवंविधेषु प्रसङ्गेषु मा भूदिति कृत्वा नानार्थकपदलभ्ययोरर्थयोः सम्बन्धः कश्चित् कल्प्यते । असौ च न स्वशब्दाभिधेयः परं व्यङ्ग्योऽलङ्काररूपः । अयमलङ्कारो व्यङ्ग्यः सर्वदा नानार्थवद्भिः पदैरेव परिस्फुरति, अतः शब्दशक्तिमूलः ।

एवमानन्दवर्धनाचार्यमते शाब्दी व्यञ्जनाऽलङ्कारव्यङ्ग्यैव । वस्तुरूपः अप्राकरणिकोऽर्थः शब्दानां तत्र साक्षात् सङ्केतादभिधेय एव । तथा सत्यलङ्काराणां व्यङ्ग्यत्वे शब्दशक्तिमूलो ध्वनिः । वस्तुरूपार्थप्रतीतौ तु श्लेषाद्यलङ्काराणां विद्यमानत्वे न शब्दशक्तिमूलो ध्वनिः ।[1]

## (आ) तत्र अभिनवगुप्तपादाचार्य मतम्

आनन्दवर्धनाचार्यव्यवस्थापितं शब्दशक्तिमूलध्वनावलङ्काराणां व्यङ्ग्यत्वं न कस्यापि विमतिपदपतितम् । परं वस्त्वात्मनोऽर्थस्यापि व्यङ्ग्यत्वमिति दिगभिनवगुप्तपादाचार्येणैवादावुत्सूत्रिता । तथाहि—

अत्रान्तरे कुसुमसमययुगमुपसंहरन्नजृम्भत ग्रीष्माभिधानः फुल्लमल्लिकाधवलाट्टहासः कालः ।'[2]

इत्यत्रानेकत्र गृहीतशक्तिकेभ्यो महाकालादिपदेभ्यो ग्रीष्मर्तुभीषणदेवतारूपिणोर्द्वयोरर्थयोः प्रतीतिः । ग्रीष्मर्तुवर्णनप्रसङ्गे महाकालपदस्य ग्रीष्मर्तुरूप्यर्थः प्राकरणिकः । भीषणदेवतारूपश्चार्थोऽप्राकरणिकः । अत्रानन्दवर्धनाचार्याः भीषणदेवतारूपोऽप्राकरणिकोऽर्थोऽसम्बद्धो न स्यादिति कृत्वा प्राकरणिकाप्राकरणिकयोरर्थयोरुपमानोपमेयभावं परिकल्प्य रूपकादीनामलङ्काराणां व्यङ्ग्यत्वं सिद्धान्तयन्ति ।

परमभिनवगुप्तपादाचार्याणां मते अप्राकरणिकोऽर्थो भीषणदेवतारूपोऽपि व्यङ्ग्य एव । तथाहि—महाकालादीनां पदानां शक्तिर्ग्रीष्मर्तुरूपिण्यर्थे नियन्त्रिता । ग्रीष्मर्तुवर्णनप्रसङ्गे प्रयुक्तानि महाकालादीनि नानार्थकानि पदानि प्रकरण-

---

१ यस्मादलङ्कारो न वस्तुमात्रं यस्मिन् काव्ये शब्दशक्त्या प्रकाशते, स शब्दशक्त्युदभवो ध्वनिरित्यस्माकं विवक्षितम् । वस्तुद्वये च शब्दशक्त्या प्रकाशमाने श्लेषः' । —सम्पादक, शास्त्री, पण्डित पट्टाभिराम, आनन्दवर्धन-ध्वन्यालोक, पृ० २३५

२ तत्रैव पृ० २४१

महिम्नैकस्मिन्नर्थे नियंत्रितशक्तीनि। अतस्ते प्राकरणिकार्थेतरमर्थमभिधातुं नैव पारयन्ति। एतादृशेषु स्थलेषु अप्राकरणिकस्य भीषणदेवतारूपिणोऽर्थस्य प्रतीतिर्नाभिधया, तस्याः प्राकरणिकेऽर्थे नियंत्रणात्। अतोऽप्राकरणिकोऽर्थो व्यंजनया द्योत्यः सन् व्यङ्ग्य एव स्वीकरणीयः।[1]

अनेनेदमुन्नीयते यद् वस्त्वात्मनोऽर्थस्यापि व्यङ्ग्यत्वमुपपन्नमभिनवगुप्तमते। तेन शाब्द्या अभिधामूलाया व्यंजनाया द्वौ भेदौ।

वस्तुतस्तु नानार्थशब्दस्थले प्राकरणिकोऽर्थोऽभिधेयो व्यङ्ग्यो वेति विवादग्रस्तम्। अभिनवगुप्तपादाचार्येण विषयममुं सूक्ष्मेक्षिकया पर्यालोचयता चत्वारि मतानि समुपस्थापितानि स्वकीये ध्वन्यालोकलोचने। तेनेदमुन्नीयते यदानन्दवर्धनाचार्यादारभ्याभिनवगुप्तपादाचार्यपर्यन्तं ध्वनिवादिनां गोष्ठीषु अभिधामूलाया व्यंजनायां शब्दस्य व्यंजकतामुद्दिश्य गहनातिगहनो विचारः प्रावर्तत। तेषामेवाचार्याणां मतसरणिरभिनवगुप्तपादाचार्येण चत्वारि मतान्युपस्थापयता प्रदर्शिता।

**वस्तुरूप्यर्थोऽभिधेयो व्यङ्ग्यो वेत्यत्र अभिनवगुप्तप्रोक्तं प्रथमं मतम्।**

"अत्र केचन मन्यन्ते। यत एतेषां शब्दानां पूर्वमर्थान्तरेऽभिधान्तरं दृष्टम्, ततस्तथाविधे अर्थान्तरे दृष्टस्तदभिधाशक्तेरेव प्रतिपत्तुर्नियन्त्रिताभिधाशक्तिकेभ्य एतेभ्यः प्रतिपत्तिर्ध्वननव्यापारादेवेति शब्दशक्तिमूलत्वं व्यङ्ग्यत्वं चेत्यविरुद्धम्"।[2]

अयमाशयः। नानार्थवतश्शब्दस्य येषु येष्वर्थेषु सङ्केतो नियतो भवति, ते ते अर्था अवगतसङ्केतेन प्रतिपात्रा ज्ञायन्ते। तद्यथा—हरिरिति शब्दो वानरसूर्यविष्णुवाद्यर्थेषु नियतः। अतस्तत्तच्छब्दस्य तेषु तेषु सर्वेष्वर्थेषु येनकेनचित् पूर्वं यथा समयो ज्ञातः, तस्य तादृश्येव प्रतिपत्तिर्भवति। परं येनैतेषां शब्दानां पूर्वं सर्वेषु विविधेषु अर्थेषु समयो न ज्ञातः, तस्य नानार्थज्ञानं तस्य तस्य शब्दस्य न भवति।

---

१ अत्र ऋतुवर्णनप्रस्तावनियंत्रिताभिधाशक्तयः, अतएव 'अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी' इति न्यायमपाकुर्वन्तो महाकालप्रभृतयः शब्दा एतमेवार्थमभिधाय कृतकृत्या एव। तदनन्तरमर्थावगतिर्ध्वननव्यापारादेव शब्दशक्तिमूलात्। —सम्पादक, शास्त्री, पण्डित, पट्टाभिराम, आनन्दवर्धन-ध्वन्यालोक, ध्वन्यालोकलोचन— टीका, पृ० २४१

२ सम्पादक, शास्त्री, पण्डित पट्टाभिराम, आनन्दवर्धनध्वन्यालोक, ध्वन्यालोकलोचन टीका, पृ० २४१

यथाहि—हरिरिति शब्दस्य येन केनचित् वानररूपेऽर्थे एव सङ्केतः पूर्वं गृहीतः, तस्यैकार्थविषयिण्येव प्रतिपत्तिः। परं येन हरिरिति शब्दस्यापरेष्वर्थेष्वपि सङ्केतो गृहीतः, तस्य तच्छब्दस्यापरार्थविषयिण्यपि प्रतिपत्तिः। अतो नानार्थकस्य हरिरित्यादिकस्य पदस्य सर्वेऽर्थास्तेषामेव बोधविषया भवन्ति, यैस्तस्य तस्य शब्दस्य समयः पूर्वं तेषु तेष्वर्थेषु गृहीतः। परं यदाऽनेकार्थकस्य पदस्य नानार्थप्रतिपत्तिनियामकेन संयोगादिना शृङ्खलीक्रियते, तदाप्रस्तुतस्यापरार्थस्य बोधो ध्वननव्यापारात्। नहि नियामकेन संयोगादिना निगडीकृताऽभिधा अप्रस्तुतार्थबोधने प्रभवति। भवति चार्थप्रतीतिरतः केनापि व्यापारेण तत्र भाव्यम्। स च व्यापारो व्यंजना। अतः प्रकरणादिकेन प्रतिबन्धकेन प्रस्तुतेऽर्थेऽभिधायां नियन्त्रितायां सत्याम्, अप्रस्तुतस्तार्थस्य या प्रतीतिः सा व्यंजनयैवेति प्रथममतावलम्बिनामाशयः। एतदेवोपजीव्य मम्मटभट्टस्य अभिधामूलायाः शाब्द्या व्यंजनाया लक्षणं प्रवर्तते।[1] तदनुकृत्यैव साहित्यदर्पणकारेण विश्वनाथेनापि प्रोक्तम्—

अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते।
एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साऽभिधाश्रया॥[2]

## (२) वस्तुरूप्यर्थोऽभिधेयो व्यङ्ग्यो वेत्यत्र अभिनवगुप्तप्रोक्तं द्वितीयं मतम्

"अन्ये तु साभिधैव द्वितीया अर्थसामर्थ्यं ग्रीष्मस्य भीषणदेवताविशेषसादृश्यात्मकं सहकारित्वेन यतोऽवलम्बते, ततो ध्वननव्यापाररूपोच्यते।"[3]

अयमाशयः। यथाभिधया प्राकरणिकोऽर्थोऽभिधीयते, तथैवाप्राकरणिकोऽपि। परमियान् खलु विशेषः। प्राकरणिकमर्थं बोधयन्ती शक्तिरभिधैव। अप्राकरणिकमर्थमपि प्रत्यायन्ती शक्तिः सैव। परं प्रथमाऽभिधा प्राकरणिकमर्थं बोधयन्ती सङ्केतग्रहणमात्रमेव सहकारित्वेनापेक्षते, अतस्तस्या अभिधात्वं निर्बाधम्। परमप्रस्तुतार्थबोधिका द्वितीयाभिधा सङ्केतग्रहणमात्रातिरिक्तमर्थसामर्थ्यादिकमप्यधिकं किञ्चित् सहकारितया अपेक्षते, अतो द्वितीयाभिधा सहकारिसामग्रीवशात् प्रथमातः अभिधातो भिद्यते। द्वितीयाभिधा प्रथमतोऽभिधातो भिन्नं सहकारिकारणमपेक्षते,

---

१ अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।
संयोगाद्यैरवाच्यार्थधीकृद् व्यापृतिरञ्जनम्॥ मम्मट, काव्य प्रकाश, २,१९

२ विश्वनाथ, साहित्यदर्पण, २, १४

३ सम्पादक, शास्त्री पण्डित पट्टाभिराम, आनन्दवर्धन-ध्वन्यालोक, ध्वन्यालोकलोचनटीका, पृ० २४२

अतो द्वितीयाभिधैवोपचारतो व्यंजनोच्यते । तद्यथा—

"अत्रान्तरे कुसुमसमययुगमुपसंहरन्नजृम्भत ग्रीष्माभिधानः फुल्लमल्लिकाधवलाट्टहासः महाकालः ।"[1]

इत्यत्र महाकालादयश्शब्दा रूढिर्योगाद्बलीयसीति न्यायमपाकुर्वन्तः शक्त्या ग्रीष्मर्तुरूपिणमर्थमभिदधति । ततश्च भीषणदेवतादिकस्यातिरिक्तस्यार्थस्यापि प्रतीतिरेभिरेव शब्दैर्भवति । परं भीषणदेवतादिकमर्थमभिदधती द्वितीयाभिधा महाकालग्रीष्मर्तुरूपिणमुपमानोपमेयभावं सहकारित्वेनापेक्ष्य प्रवर्तते, अतस्तस्या उपचारेण नामान्तरम् । भीषणदेवरूपार्थबलेन सादृश्यमत्र ध्वन्यते । द्वितीयाभिधा सहकारिणार्थान्तरेणोपोद्बलिता उपमादीनामलङ्काराणां व्यङ्ग्यत्वे निबन्धनत्वमुपयाति, अत एवान्यधर्मस्य सङ्क्रमणात् भक्त्या द्वितीयाया अभिधाया ध्वनिरिति नामकरणमुपपन्नम् । अतिरिक्तनिमित्तमपेक्षमाणा द्वितीयेयमभिधा न शब्दस्य स्वाभाविकी वृत्तिः प्रथमाभिधावत्, अपित्वौपाधिकी वृत्तिर्व्यञ्जनावत् । तथा सति द्वितीयाभिधैव व्यंजनेत्यभिधीयते उपाधिवशात् ।

परं नैषः पक्षो युक्तियुक्तः । योपमा अप्राकरणिकार्थप्रतीत्यनन्तरं स्वात्मलाभं लभते, सैव कथमप्राकरणिकार्थप्रतीतौ सहकारित्वमुपयातुं प्रभवति । यद्युपमानोपमेयभावप्रतीतिः प्रथमं भवेत्तदा द्वितीयामभिधां प्रत्यसौ निमित्ततामुपेयात् । यतो निमित्ततैव न सम्भाव्यते, अतो द्वितीयाभिधाप्रसरणं सर्वथाऽसम्भवम् । एवमन्योऽन्याश्रयदोषदुष्टमिदं मतं सर्वथाऽग्राह्यम् ।

**(३) वस्तुरूप्यर्थोऽभिधेयो व्यङ्ग्यो वेत्यत्राभिनवगुप्तप्रोक्तं तृतीयं मतम्**

"एके तु शब्दश्लेषे तावद्भेदे सति शब्दस्य, अर्थश्लेषेऽपि शक्तिभेदाच्छब्दभेद इति दर्शने द्वितीयः शब्दस्तत्रानीयते । स च कदाचिदभिधाव्यापारात् यथोभयोरुत्तरदानाय श्वेतो धावतीति प्रश्नोत्तरादौ वा तत्र वाच्यालङ्कारता । यत्र तु ध्वननव्यापारादेव शब्द आनीतः, तत्र शब्दान्तरबलादपि तदर्थान्तरं प्रतिपन्नं प्रतीयमानमेव युक्तम् ।"[2]

अयमाशयः । यत्र श्लेषादौ द्व्यर्थकात् पदादर्थद्वयप्रतिपत्तिः प्राकरणिकी तत्राभिधैव व्यापार उभयार्थविषये । यथाहि—'को धावति, किं रूपश्चेति प्रश्न-

---

1 सम्पादक, शास्त्री, पण्डित पट्टाभिराम, आनन्दवर्धन-ध्वन्यालोक, ध्वन्यालोकलोचन टीका, पृ० २४१

2 सम्पादक, शास्त्री, पण्डित पट्टाभिराम, आनन्दवर्धन-ध्वन्यालोक, ध्वन्यालोकलोचन टीका, पृ० २४३

द्वयोत्तरे केनचिदुच्यते श्वेतो धावतीति । अत्र 'श्वेतः' इति पदं भङ्क्त्वा श्वा इतो धावतीति को धावतीत्यस्य प्रथमप्रश्नस्योत्तरम् । किंरूपश्चेति द्वितीयप्रश्नस्य श्वेतो धावतीत्युत्तरम् । अत्रोभयोः प्राकरणिकयोरर्थयोरभिधयैव प्रतीतिः श्लिष्ट-पदमर्यादया, पूर्वत्र पदं त्रोटयित्वा, अपरत्र च यथाश्रुतग्रहणेन । परमुभयोरर्थयोः प्रतीतिः प्राकरणिकत्वादभिधयैव । अतः सभङ्गश्लेषे शब्दस्यभञ्जनेनासमानशब्दाभ्यामर्थद्वयावगतिरभिधया । यथा 'सर्वदो माधवः' इत्यत्र सर्वं ददातीति सर्वदो माधवः श्रीकृष्ण इत्यर्थबोधकौ शब्दौ विद्येते । अतः पदभंजनं विनैव तत्तच्छब्दाभ्यां तत्तदर्थप्रतीतिरभिधया । 'सर्वदो माधवः' इत्याभ्यां पदाभ्यामेव सर्वदा सर्वकालमुमायाः पार्वत्या धवः वल्लभो महादेवः 'इत्यस्यार्थस्यापि प्रतीतिः । अयमर्थः सर्वदा-उमा-धवः' इत्येवं पदत्रोटनेनायाति । परं शिवरूपार्थबोधक 'उमाधवः' इति शब्दः श्रीकृष्णरूपार्थबोधकात् माधवशब्दाद् भिन्नः । एवं सभङ्गश्लेषे उभयार्थ-प्रतीतिर्नैकस्माच्छब्दात्, परं भिन्नाभ्यां शब्दाभ्याम् । तथा सत्यभिधैवार्थद्वयप्रत्यायने समर्थेति स्पष्टम् । यत्र चार्थश्लेषस्तत्राप्यपरार्थप्रतीत्यर्थं द्वितीयः शब्द आनीयते, तत्राप्यपरार्थप्रतीतिः परिकल्पिताच्छब्दादभिधयैव । तद्यथा —'पयोधरः' इत्यत्र स्तनमेघरूपिणोरर्थयोः प्रतीतिः शब्दमभङ्क्त्वैव भवति । यदि स्तनरूपोऽर्थः प्रथमपयोधरशब्देनाभिधीयते, तर्हि मेघरूपापरार्थबोधार्थमपरः पयोधरशब्दस्तत्र परिकल्प्यते । तेन स्तनरूपार्थप्रतीतिः प्रथमात् पयोधरशब्दात् मेघरूपार्थप्रतीतिश्च द्वितीयात् परिकल्पितात् पयोधरशब्दात् । एवमर्थश्लेषेऽपि अपरशब्दपरिकल्पनया शक्त्यैवापरार्थप्रतीतिः । इत्थं शब्दश्लेषो भवेदर्थश्लेषो वो उभयत्र शब्दद्वयसद्भावे योभयार्थप्रतीतिरसावभिधयैव । तत्र चोभयार्थयोः प्राकरणिकत्वे श्लेषादिवाच्यालङ्कारता अशक्यशङ्का । परं यत्र द्व्यर्थकात् पदात् ज्ञायमानोऽपरोऽर्थोऽप्राकरणिकः, तत्र परिकल्प्यमानोऽप्यपरश्शब्दो नाभिधया अप्राकरणिकमर्थमभिदधाति, परन्तु व्यंजनयापरार्थं ध्वनयति । अयमपरोऽर्थः अप्राकरणिकः सन् प्रतीयमानः । अतोऽनभिधेयत्वात्तस्यार्थस्य ध्वननमेव युक्तियुक्तम् । एवं परिकल्पितादपि शब्दादवसीयमानोऽप्राकरणिकोऽर्थः शब्दश्लेषार्थश्लेषवद्वा नाभिधया बोध्यः । परमप्राकरणिकत्वात् प्रतीयमानः सन् स्वात्मलाभार्थं शक्तिभिन्नं व्यंजनमेव व्यापारान्तरं नितान्तमपेक्षते । यद्ययमर्थोऽप्राकरणिकः प्रतीयमानः तर्हि तत्प्रत्यायनपरस्य शब्दस्यापि व्यंजनव्यापारमुखप्रेक्षित्वं दैवसिद्धम् ।

इदमपि मतं नोपपत्तिपूर्वकमुपन्यस्तं दृश्यते । यद्यप्राकरणिकोऽर्थः प्रतीयमानः स्यात्तदैव तद्द्योतनार्थं प्रवृत्तो व्यापारोऽभिधाभिन्नो भवेत् । परमप्राकरणिकोऽप्यर्थः शब्दानां तत्र सङ्केतादभिधेय एव पर्यवस्यति । यदि संयोगादिना प्रतिबन्धकेन

अभिधानियंत्रणादप्राकरणिकार्थस्यानभिधेयत्वं प्रोच्यते, तेन च तस्यार्थस्य प्रतीयमानतायां ध्वननमङ्गीक्रियते, तर्हि तार्तीयीकस्यास्य मतस्य प्रथममतान्न कश्चिद्‌भेदः। केवलं भङ्ग्यन्तरेणास्योत्थापनं क्रियते। अतोऽस्मिन् मते न कश्चिद्विशेषः।

**(४) वस्तुरूप्यर्थोऽभिधेयो व्यङ्ग्यो वेत्यत्राभिनवगुप्तप्रोक्तं चतुर्थं मतम्**

"इतरे तु द्वितीयपक्षव्याख्याने यदर्थसामर्थ्यं तेन द्वितीयाभिधैव प्रतिप्रसूयते ततश्च द्वितीयोऽर्थोऽभिधीयते एव न ध्वन्यते, तदनन्तरं तु तस्य द्वितीयार्थस्य प्रतिपन्नस्य प्रथमार्थेन प्राकरणिकेन साकं या रूपणा सा तावद् भात्येव, न चान्यतः शब्दादिति सा ध्वननव्यापारात्। तत्राभिधाशक्तेः कस्याश्चिदप्यनाशङ्कनीयत्वात्[1]

अत्र चतुर्थपक्षावलम्बिनः पूर्वपक्षं व्यपाकृत्य स्वमतमेवं सिद्धान्तयन्ति। प्राकरणिकाप्राकरणिकयोरर्थयोः शक्तिवेद्यता अनपलपनीया, तत्तच्छब्दानां तत्तदर्थेषु पूर्वं सङ्केतात्। अतो येषु येष्वर्थेषु शब्दस्य सङ्केतः पूर्वं नियतस्तांस्तानर्थानसौ शक्त्या बोधयत्येव। परमेवंविधेषु स्थलेषु शक्तिबोध्यानां प्राकरणिकाप्राकरणिकार्थानां परस्परं यदि न कोऽपि सम्बन्धस्तदाऽसम्बद्धोर्थदोषकथनप्रसङ्गस्तत्र समापतेत्। अतः प्राकरणिकाप्राकरणिकयोरर्थयोः सम्बन्धः कश्चिदवश्यं कल्प्यते। स सम्बन्धो न कदाचिदभिधया बोध्यस्तत्र शब्दानां सङ्केताकरणात्। तद्यथा—

'अत्रान्तरे कुसुमसमययुगमित्यादौ पूर्वोक्ते गद्यभागे यद्यपि महाकालशब्दस्य ग्रीष्मर्तुभीषणदेवतारूपिणावर्थौ अभिधाबोध्यौ स्तस्तथापि तयोः परस्परमुपमानोपमेयभावेनावस्थानरूपो यः सम्बन्धस्तत्र महाकालादीनां पदानां न शक्तिः। असौ सम्बन्धः रूपणात्मकः प्रतीयमानत्वाद् व्यञ्जनाद्योत्य एव। नहि प्राकरणिकाप्राकरणिकयोः ग्रीष्मतुमहाकालरूपिणोरर्थयोः प्रत्यायने प्रभवन्ती शक्तिरभिधा शब्देन स्पष्टमनावेदितं गूढमुपमानोपमेयभावात्मकं उपमोत्प्रेक्षाद्यलङ्काराणां जनकमर्थं द्योतयितुं स्वप्नेऽपि प्रभवति। अतः 'आम्रान् पृष्टः कोविदारानाचष्टः 'इत्याभाणकवचनात् प्राकरणिकाप्राकरणिकयोरुभयोरभिधाभिहितयोरर्थयोरसम्बद्धार्थता मा प्रसज्येतेति कृत्वा सर्वदाऽनभिधेया रूपणा व्यञ्जनासमुपस्थाप्यैव। रूपणा चासावलङ्काराणां प्रसवित्री केवलं परिवृत्तिमसहमानाच्छब्दादेव,- सम्भाव्यते, नान्येन प्रकारेणेति नानार्थकप्रतीतिस्थले शब्दशक्तिमूलध्वन्यभ्युपगमः सर्वथाऽऽवश्यकः। इदमेव 'मतमानन्दवर्धनाचार्यस-

---

1 सम्पादक, शास्त्री, पण्डित पट्टाभिराम, आनन्दवर्धन-ध्वन्यालोक, ध्वन्यालोकलोचन टीका, पृ० २४२

## (इ) महिम-भट्टाचार्यमतम्

महिमभट्टाचार्येण शब्दशक्तिमूलो ध्वनिः सर्वथा निराक्रियते । तन्मते शब्दस्याभिधातिरिक्तव्यापारान्तराभावात्[1] । 'अत्रान्तरे कुसुमसमययुगमुपसंहरन्नित्यादौ आनन्दवर्धनाचार्येण यः शब्दशक्तिमूलोऽलङ्कारध्वनिः प्रोक्तः, असौ महिमभट्टमते साध्यसाधनभावमूलानुमितिपर्यवसायी । तद्यथा—पूर्वोक्ते स्थले अप्राकरणिको भीषणदेवतारूपोऽर्थोऽत्र साध्यः, तत्प्रतीतिश्चाट्टहासयुगसंहाररूपाभ्यां साधनाभ्याम् । यथा साधनेन धूमेन साध्यो वह्निरनुमीयते, तथैवाट्टहासयुगसंहाररूपाभ्यां हेतुभ्यां तत्सम्बद्धो भीषणदेवताविशेषरूपोऽर्थोऽनुमितो भवति । अट्टहासयुगसंहारयोर्महाकालेन सह सम्बद्ध आगमप्रमाणसिद्धः । एवं नियताद्धेतोर्नियतस्य सम्बन्धिनोऽन्यादेः प्रतीतिर्यथानुमानम्, तथैवाट्टहासादीनां महाकालाख्यदेवेन सहागमप्रमाणसिद्धसाहचर्येणावस्थानाल्लिङ्गलिङ्गिभावमूलानुमितिर्न खलु ध्वनिः ।[2]

यत्र च साध्यसाधनभावो नोह्यस्तत्राप्राकरणिकस्यार्थस्य प्रतीतिरेव निराक्रियते महिमभट्टेन । तद्यथा—

दत्तानन्दाः प्रजानां समुचितसमयक्लिष्टसृष्टैः पयोभिः ।
पूर्वाह्णे विप्रकीर्णा दिशि दिशि विरमत्यह्नि संहारभाजः ॥
दीप्तांशोर्दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावः ।
गावो वः पावनानां परममपरिमितां प्रीतिमुत्पादयन्तु ॥[3]

इत्यत्राप्राकरणिकस्य सुरभिरूपिणोऽर्थान्तरस्योत्पत्तौ कार्यकारणभावस्य

---

1 यः शब्दशक्तिमूलोऽन्यः प्रभेदो वर्णितो ध्वनेः ।
सोऽयुक्त अन्यत एवासौ तत्रेष्टार्थान्तरे गतिः ।
शब्दे शक्त्यन्तराभावस्यासकृत् प्रतिपादनात् ॥

महिमभट्ट, व्यक्तिविवेक, १,१०४-१०५

2 'इत्यत्राप्राकरणिकमहाकालाख्यदेवताविशेषविषया प्रतीतिस्साध्या । तस्याश्चाट्टहाससम्बन्धो युगसंहारव्यापारश्चेत्युभयं साधनं तस्य तत्कार्यत्वात् कार्यकारणभावश्चानयोरागमप्रमाणमूल 'इति'
—सम्पादक, शास्त्री, मधुसूदन, महिमभट्ट-व्यक्तिविवेक, पृ० ४१७
सम्पादक, शास्त्री, पण्डित पट्टाभिराम, आनन्दवर्धन-ध्वन्यालोक, पृ० २४४

निबन्धनस्य अदर्शनादप्राकरणिकार्थप्रतीतिर्न समुदेति महिमभट्टमते ।[1]

महिमभट्टमते सामग्रीवशादेव शब्दो नानार्थबोधको भवति, न तु तन्निरपेक्षः । अतो यत्राप्राकरणिकार्थबोधिकायाः सामग्र्या अवस्थानं तत्राश्लिष्टेभ्योऽपि पदेभ्यो नानार्थावगतिः । यत्र तु तथाविधसामग्र्यभावस्तत्र तु नानार्थकेभ्योऽपि पदेभ्यो न विविधार्थप्रत्ययः । यथा समासोक्तौ—

उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद् गलितं न लक्षितम् ।[2]

'शशिना' इति पदमश्लिष्टमेव नायकरूपिणमप्रस्तुतमर्थं बोधयति 'उपोढरागेणे'ति सामग्रीवशात् । 'गावो वः पावनानामित्यादौ नानार्थकान्यापि पदानि सादृश्यसूचकेवादिपदाभावे अप्राकरणिकं सुरनिरूपिणमर्थं नैवावगमयन्ति ।[3] तथा सति 'गावो वः पावनानामित्यादौ विशेषणविशेष्यपदयोरनेकार्थकत्वेऽपि सुरभिरूपार्थप्रत्यायकमिवादिपदं किमपि निबन्धनं वक्तव्यमेव । तद्विना नापरार्थप्रतीतिः ।

एवं पूर्वोक्ते उदाहरणे आनन्दवर्धनाचार्येण यत् सूर्यकिरणसुरभिरूपिणोरर्थयोरुपमानोपमेयभावेनावस्थानात् रूपकालङ्कारस्य प्रतीयमानतायामलङ्कारध्वनिः समाख्यायि, तत् महिमभट्टेनोपमानानां सुरभ्यादीनामुपमेयेन सूर्यकिरणरूपेणार्थेन सह सम्बन्धाभिधायिनो वाचकस्येवादिपदस्यानुपादानादवश्यं वाच्यावचनाद्दोषायैवेति वदता दूरमपास्तम् ।[4]

---

1 "एवञ्चास्य वाच्यव्यतिरेकिणोऽर्थान्तरस्य प्रतीतिरेव न समस्तीति, यत्राप्रस्तुताभिधानप्रसङ्गभयात्तयोरुपमानोपमेयभावपरिकल्पनं तदपि निर्मूलमेवेत्यवगन्तव्यम् ।"
—सम्पादक, शास्त्री, मधुसूदन, महिमभट्ट-व्यक्तिविवेक, पृ० ४१९

2 सम्पादक, शास्त्री, पण्डित पट्टाभिराम, आनन्दवर्धन-ध्वन्यालोक, पृ० १०९

3 किञ्च न स्वभावत एव शब्दानामर्थप्रतीतिक्रम इति नियमसम्भवः, किन्तर्हि सामग्रीवशात् । सा हि यदर्थानुगुणोपलभ्यते, तमेव तस्यार्थं कल्पयतीति सर्वः शब्दः सर्वार्थविषयः सर्वश्चार्थः सर्वशब्दविषयो भवितुमर्हति । ततश्च अतदर्थोऽप्यन्यः शब्दः सामग्रीवशात् समासोक्तिन्यायेन तमवगमयितुं क्षमैव, न पुनस्तदर्थोऽपि सामग्रीविकलो गवादिशब्दः ।"
—सम्पादक, शास्त्री, मधुसूदन, महिमभट्ट- व्यक्तिविवेक, पृ० ४१९

4 "अत्र हि गाव इत्येतस्य विशेष्यवाचि तु उपमानाभिमतार्थान्तरवृत्तित्वेऽपि विशेषणानां चोभयार्थानुगुण्येऽप्युपमानस्य तत्सम्बन्धाभिधायिनश्चावश्यवाच्यावचनं यत् स दोष इत्येतद्विलनिष्यते ।" तत्रैव, पृ० ३६६

मम धिया नैतन्मतं युक्तियुक्तम्। शाब्द्यामभिधामूलायां व्यञ्जनायां सहृदय-हृदयसमास्वाद्यौ वस्त्वलङ्कारूपावर्थौ वाच्याया इवादिसामग्र्या अभावे नैवानुभूयेते इति यद् महिम्ना रसिकजनानुभवमपलपमानेन प्रोद्घुष्यते, तत्तस्य हेवाकित्व-मेवोद्घाटयति, अर्थप्रतीतिर्न भवतीत्यत्र विनिर्गमनाभावात्। 'दत्तानन्दाः प्रजाना-मित्यादाविवादिसामग्र्युपादानेऽर्थस्य व्यङ्ग्यत्वमेव त्रुट्येत्, तस्यार्थस्येवादिपदोपा-दानेन वाच्यत्वात्। अत इवादि सामग्र्यनुपादाने सुरभिरूपिणोऽर्थस्य गूढत्वात् गुणोऽधिको न खलु दोषः। व्यङ्ग्यत्वेनैवार्थ श्चारुत्वमातनोति न तु वाच्यत्वेनेति सहृदयहृदयानुभवप्रामाण्यात्।

## (ई) मम्मटाचार्यमतम्

मम्मटभट्टोऽभिनवगुप्तपदाङ्कानुगः। स शाब्द्या अभिधामूलाया व्यञ्ज-नाया लक्षणमित्थमुपनिबध्नाति स्वकीये काव्यप्रकाशे—

अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।
संयोगाद्यैरवाच्यार्थधीकृद् व्यापृतिरञ्जनम्॥[1]

एतेन संयोगादिभिः प्रतिबन्धकैर्नानार्थकस्य शब्दस्याभिधायामेकस्मिन्नर्थे नियन्त्रितायां सत्याम्, तस्मादेव परिवृत्यसहाच्छब्दात् यार्थान्तरप्रतीतिरसौ व्यञ्जनयैवेत्यर्थेन अप्राकरणिकस्यार्थस्य व्यङ्ग्यत्वं सिद्धं मम्मटभट्टमतेन। इत्थ-मसावपि वस्तुरूपिणोऽप्राकरणिकार्थस्य ध्वननं स्वीकुर्वन् शाब्द्या व्यञ्जनाया वस्त्वलङ्काराभ्यां द्वौ भेदौ व्यवस्थापयति।[2]

## (उ) हेमचन्द्राचार्यमतम्

'नानार्थकस्य मुख्यस्य शब्दस्य संयोगादिभिरमुख्यस्य च मुख्यार्थबाधा-दिभिर्नियमिते व्यापारे वस्त्वलङ्कारयोर्वस्तुनश्च व्यञ्जकत्वे शब्दशक्तिमूलः पदवाक्ययोः'[3] इत्येवं हेमचन्द्राचार्येण काव्यानुशासने शाब्दी व्यञ्जना लक्षिता। अस्मिंल्लक्षणेऽपि शाब्द्या अभिधामूलाया व्यञ्जनाया हेमचन्द्रेण तदेव स्वरूपं निर्दिष्टं यन्मम्मटभट्टादिभिः पूर्वं प्रोक्तम्। केवलं पदवाक्यगतत्वेनाभिधामूलाया व्यञ्जनाया हेमचन्द्राचार्येण पुनर्विभागः कृतः। तन्मते वस्त्वलङ्कारव्यङ्ग्या-भ्यां द्विधा विभक्ता शाब्द्यभिधामूला व्यञ्जना वस्त्वलङ्काररूपिणो व्यङ्ग्या-र्थस्य पदवाक्यवशत्वात् पुनर्भिद्यते।

---

1 मम्मट, काव्यप्रकाश, २,१६

2 अलङ्कारोऽथ वस्त्वेव शब्दाद्यत्रावभासते।
प्रधानत्वेन स ज्ञेयश्शब्दशक्त्युद्भवो द्विधा॥ —मम्मट. काव्यप्रकाश, ४,३८

3 सम्पादक, पण्डित शिवदत्त, हेमचन्द्र – काव्यानुशासन, पृ० ४६

## (ऊ) विश्वनाथाचार्यमतम्

साहित्यदर्पणे विश्वनाथाचार्यस्य शाब्द्या अभिधामूलाया व्यञ्जनाया निरूपणं मम्मटभट्टमतानुरोधि। न तत्र किञ्चिन्नवीनं तत्त्वं समुपलभ्यते। केवलं मम्मटेन शाब्द्यभिधामूला व्यञ्जनेति नाम्ना स्पष्टं तल्लक्षणं न प्रतिपादितम्, संयोगाद्यैरवाच्यर्थधीकृद्व्यापृतिरंजनमित्येवमेव लक्षणं कृतम्। परं विश्वनाथाचार्येण निर्मलं स्पष्टञ्च लक्षणं दत्तम्। तद्यथा—

अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते ।
एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साऽभिधाश्रया ॥[1]

एवं विश्वनाथाचार्यमतेऽप्यप्राकरणिकार्थप्रतीतिर्व्यंजनयैव भवति, अभिधायाः प्राकरणिकेऽर्थे निरोधात्। अनन्तरं विश्वनाथेनापि शाब्द्या अभिधामूलाया व्यंजनाया वस्त्वलङ्कारयोर्व्यंङ्ग्यत्वे सति द्वैविध्यं प्रतिपादितम्।[2]

## (ए) अप्पयदीक्षिताचार्यमतम्

अप्पयदीक्षिताचार्यो नानार्थशब्दस्थले अप्राकरणिकार्थस्याभिधेयत्वं प्रतिपादयंस्तस्य व्यंग्यत्वं विरुणद्धि। तन्मते नानार्थकस्य शब्दस्य प्राकरणिकाप्राकरणिकोभयविधार्थयोः शक्तेरप्रस्तुतोऽप्यर्थः शब्दस्य वाच्य एव। नहि संयोगादयो नियामका अनेकत्र गृहीतशक्तीनां पदानां शक्तिं नानार्थेषु प्रसरणान्निवारयन्ति। यत्र शब्दस्य संकेतो गृहीतस्तत्र शब्दस्य शक्तेरभिधेयत्वमेव तत्तदर्थस्य। नह्येतद् वक्तुं युक्तं यत्प्राकरणिकोऽर्थोऽप्राकरणिकार्थप्रतीतिं निरुणद्धि, अप्राकरणिकार्थेनापि प्राकरणिकार्थनिरोधसम्भवात्। प्राकरणिकोऽर्थ एव प्रथमं स्फुरेन्नाप्राकरणिकोऽर्थं इति विनिगमनाभावात्। तद्यथा—

असावुदयमारूढः कान्तिमान् रक्तमण्डलः ।
राजा हरति लोकस्य हृदयं मृदुभिः करैः ॥[3]

अत्र चन्द्रोदयवर्णनप्रसंगे योऽप्राकरणिको भूपतिरभ्युदयविशिष्टोऽर्थः प्रतीयते असावभिधेय एव नानार्थकानां करादिपदानां शक्तेरुभयत्र प्रसरणात्।

---

१ विश्वनाथ, साहित्यदर्पण, २,१४

२ वस्त्वलङ्काररूपत्वाच्छब्दशक्त्युद्भवो द्विधा ॥
—विश्वनाथ, साहित्यदर्पण, ४,७

३ सम्पादक, शर्मा, पण्डित शिवदत्त, अप्पयदीक्षित—वृत्तिवार्तिक, पृ० ६

प्राकरणिकाप्राकरणिकयोरर्थयोः करादिपदैरनिरुद्धप्रतीतेः ।[1]

किञ्च जलार्थिभिर्जलाशयाज्जलं क्षेत्रेष्वानेतुं कुल्या विरच्यन्ते । जलाशयान्निर्गच्छज्जलं सर्वासु कुल्यासु समानभावेन प्रवहति । कुल्यासु कृतासु जलाशयात् प्रवहतो जलस्याभिमतकुल्यायामेव प्रसरणमनभिमतकुल्यायाञ्चासञ्चरणमिति न नियमेन वक्तुं शक्यम् । यथा प्रवहतो जलस्य सर्वास्वभिमतानभिमतकुल्यासु समानभावेन प्रसरणमुपपन्नम्, तथैव नानार्थकस्यापि पदस्यानेकत्र शक्तिग्रहे सति प्रकृताप्रकृतार्थेषु समान एव सङ्केतः । एवमनेकेष्वर्थेषु शब्दस्य शक्तेः कुल्याजलवत्प्रसरणात् प्राकरणिकवदप्राकरणिकोऽप्यर्थोऽभिधाबोध्योऽवगन्तव्यः । तत्कृते व्यंजनाश्रयणं निर्निबन्धनम् ।[2]

एवं यद्यप्यप्राकरणिकस्यार्थस्य नानार्थकशब्दस्थले व्यंजनागम्यत्वं विप्रतिपद्यतेऽप्पयदीक्षिताचार्येण, परं तथापि नानार्थकशब्दस्थलेऽलङ्काराणां व्यङ्ग्यत्वं नापह्नोतुं शक्यम् । अलङ्काररूपोऽर्थस्तु न शब्दस्य सङ्केतितोऽर्थो येनाभिधा तत्र सञ्चरेत्, प्रत्युत असावर्थस्तु स्वशब्देनानुक्तो व्यङ्ग्य एवेति पुरा प्रोक्तमेव । अत एवालङ्काराणां ध्वननमङ्गीकुर्वता अप्पयदीक्षितेन आनन्दवर्धनाचार्यमतं समुपोद्बलितम् ।[3]

## (ऐ) पण्डितराजजगन्नाथमतम्

पण्डितराजजगन्नाथेनापि विवादास्पदोऽयं विषयो भृशं विचारितो रसगङ्गाधरे । तेन सूक्ष्मेक्षिकया अभिधामूला शब्दस्य व्यञ्जकता तर्कनिकषोपले

---

१ 'वयं तु ब्रूमः'. असावुदयमारूढः इत्यादौ प्राकरणिकेऽर्थे प्राकरणिकवदप्राकरणिकेऽपि राजकरमण्डलादिशब्दानां परस्परान्वययोग्यनृपतितद्ग्राह्यधनदेशादिवाचकानां समभिव्याहाररूपमभिधानियामकमस्तीत्यर्थद्वयस्यापि प्राकरणिकत्व इव प्राकरणिकाप्राकरणिकरूपत्वेऽप्युभयत्राभिधैव व्यापारः ।'

—शर्मा, पण्डित शिवदत्त, अप्पय दीक्षित—वृत्तिवार्तिक, पृ० १०

२ तत्रैव पृ० ११

३ 'यत्तु प्राचामप्रस्तुते शक्तिमूलव्यंजनवृत्त्यभिधानं तदप्रस्तुतार्थप्रतीतिमूलके यथा 'उदयमारूढः' इत्यादिविशेषणविशिष्टः पृथिवीपतिः स्वल्पैर्ग्राह्यधनैर्लोकस्य हृदयं रञ्जयति, एवं तथाभूतश्चन्द्रमा मृदुलैः किरणैः इत्यादिरूपेण प्रतीयमाने उपमाद्यर्थालङ्कारे तदवश्यंभावदृढीकरणाभिप्रायेण ।'

तत्रैव, पृ० १३

सुपरीक्षिता। तत्रादौ तेन नानार्थशब्दस्थले व्यञ्जनामङ्गीकुर्वतां ध्वनिकारानुयायिनामाचार्याणां विचारसरणिः प्रथममतद्वितीयमतरूपेण द्विधोपस्थापिता। अनन्तरञ्च मतद्वयमिदं विदूष्य स्वधिया शाब्द्या व्यंजनाया यौक्तिकं विवेचनं कृतम्।

## जगन्नाथेन पूर्वपक्षरूपेणोपस्थापितं ध्वनिवादिनां प्रथमं मतम्

नानार्थकशब्दश्रवणानन्तरं तस्य तस्य शब्दस्य तेषु तेष्वर्थेषु सङ्केतग्रहतुल्यत्वात् सर्वेषां तत्तन्नानार्थवतां शब्दानां संकेतिता अर्था बुद्धिसमारूढा भवन्ति। ततो वाक्ये नानार्थवतश्शब्दस्य कतमोऽर्थ उपादेयः, कोऽर्थश्च वक्तुस्तात्पर्यविषयीभूत इति श्रोतुर्मनसि सन्देह उत्पद्यते। प्रकरणादिकं पर्यालोचयञ्छ्रोता नानार्थवतश्शब्दस्य प्रकरणानुकूलमर्थं शक्त्याऽवगच्छति। प्रकरणादिकं नियामकमप्राकरणिकं सर्वमर्थं प्रतिबध्नाति। प्राकरणिकोऽर्थः शक्त्याऽभिधीयते। परमप्राकरणिकोऽर्थः प्रतीतिपथमवतरन् शक्त्या नाभिधीयते। प्राकरणिकमर्थं प्रत्याय्य तस्या उपक्षयात्। अतः अप्राकरणिकार्थप्रत्यायनार्थ शक्तिभिन्नोऽन्यः कश्चिच्छब्दव्यापारोऽवश्यमभ्युपगन्तव्यो भवति। स एव व्यापारोऽप्राकरणिकार्थसमुल्लासको व्यञ्जनपदव्यपदिष्टः। अस्मिन्मते भर्तृहरिकारिकायामुपात्तस्य 'अनवच्छेदे विशेषस्मृतिहेतवः' इत्यस्य ग्रन्थस्य अनवच्छेदे, तात्पर्यसन्देहे सति विशेषस्मृतिरेकार्थमात्रविषया स्मृतिरित्येवं शय्या योज्या। ननु प्रकरणादिषु प्रतिबन्धकेषु जागरूकेषु सत्सु कथं व्यञ्जनयाऽप्यप्राकरणिकार्थबोधः अभिधावत्तस्या अपि नियमनादिति चेन्न, तस्या अप्राकरणिकार्थमेव द्योतयितुं विद्यमानत्वात्। प्रकरणादिकैः प्रतिबन्धकैः शक्त्यां नियन्त्रितायां सत्यामप्राकरणिकार्थप्रतीतिर्व्यञ्जनयेति प्रथममतावलम्बिनां मम्मटभट्टादीनामाशयः।[1]

## जगन्नाथेन पूर्वपक्षरूपेणोपस्थापितं प्रथममतखण्डनपुरस्सरं ध्वनिवादिनां द्वितीयं मतम्।

अपरे प्रकारान्तरेण अप्राकरणिकस्यार्थस्य व्यञ्जनावेद्यत्वं सिद्धान्तयन्ति। तथाहि—प्रथममते प्रकरणादिकस्य प्रतिबन्धकत्वेन स्वीकारः तद्वशाच्चाप्राकरणिकार्थप्रतीतिस्थगनमिति वार्ता न हृदयङ्गमा। प्रकरणादिको नियामकोऽप्राकरणिकार्थप्रतिपत्तिं निरोद्धुं न प्रभवति, शब्दस्य तत्तदर्थेषु सकेतकरणात्। अत

१. सम्पादक, म० म० पण्डित दुर्गाप्रसाद, जगन्नाथ-पण्डितराज—रसगङ्गाधर पृ० १३४—३६

एव भर्तृहरिकारिकायां स्मृतिपदस्यैकार्थमात्रगोचरत्वमिति व्याख्यानमपि न मनोरमम्। अयमाशयोऽत्रानुसन्धेयः। नानार्थकानां पदानां सर्व एव सङ्केतिता अर्थाः समयज्ञानवतः प्रतिपत्तुरनुभवविषयत्वमुपयान्ति। परं प्रकरणादिपर्यालोचनया वक्तुर्यस्मिन्नर्थे तात्पर्यम्, स एवार्थः श्रोत्रा गृह्यते। तेन च योऽर्थो वक्तुस्तात्पर्यभूतस्तस्यैवार्थस्य वाक्येऽन्वयाच्छाब्दबोधः। तथा सत्यप्रस्तुतार्थस्याप्राकरणिकत्वात्तस्य तात्पर्यविषयतामनुपागते न तस्य वाक्येऽन्वयः, नापि च शक्त्या तस्यार्थस्य प्रतीतिरुपपद्यते। एवं शब्दस्य तत्र सङ्केतकरणात् परिस्फुरन्नप्यसावर्थोऽप्राकरणिकोऽतात्पर्यविषयीभूतत्वाद् वाक्येऽन्वयमलभमानः शाब्दबोधविषयतां नोपयाति। प्रतीतिश्चास्यार्थस्य सम्पद्यते। परं नासावभिधासमुपस्थाप्या। अभिधाया विषयस्तु तात्पर्यभूतोऽर्थ एव प्राकरणिकः। अतस्तस्य अतात्पर्यविषयीभूतस्यार्थस्य शब्दाद् भवन्ती प्रतिपत्तिः शक्तिभिन्नेन केनाप्यन्येन व्यापारेणैव सम्पाद्या। असौ व्यापारो ध्वननपदव्यपदिष्टोऽवश्यमभ्युपेयः।[1]

ननु द्वितीयस्मिन्मते 'विशेषस्मृतिहेतवः' इत्यादेर्भर्तृहरिग्रन्थस्य 'वाचकत्वे नियन्त्रिते' इत्यादेर्मम्मटभट्टोक्तेश्च सङ्गतिस्त्रुट्यतीति कृत्वा नाङ्गीकरणीयं द्वितीयं मतमिति चेन्न, प्रकारान्तरेणापि पूर्वोक्तग्रन्थसङ्गतिसम्भवात्। नहि 'विशेषस्मृति' रित्यस्य पदस्य प्राकरणिकार्थविषयिणी द्वितीया स्मृतिरित्येव व्याख्यानं सम्भवति, नापि च मम्मटभट्टस्य 'वाचकत्वे नियन्त्रिते' इत्यस्य संयोगादयो नियामकाः प्राकरणिकार्थेतरानर्थान् प्रतिबध्नन्तीत्येवमेव व्याख्या समुचिता। प्रत्युत द्वितीयस्मिन्मते स्मृतिपदं निश्चयार्थपरं ग्रहीतव्यम्। अतो विशेषस्मृतिरित्यस्येत्थं व्याख्यानं द्वितीयमतावलम्बिभिः प्रस्तूयते।

नानार्थकस्य पदस्य सर्वेषु सङ्केतितेष्वर्थेषूपस्थितेषु, वक्तुस्तात्पर्यविषयीभूतस्यैवार्थस्य बोधो भवति। अतो 'विशेषस्मृति'रित्यनेन विशिष्टस्य तात्पर्यभूतस्यार्थस्य निर्णय इत्यर्थे गृहीते न काचिदसङ्गतिः। अनेकार्थकस्य पदस्य तात्पर्यविषयीभूतार्थव्यतिरिक्ताः सर्वेऽर्था अवाच्यार्थाः। अतस्तेषां शाब्दबोधविषयतानापत्तिः। संयोगादिभिर्वाचकताया नियन्त्रणं यत् प्रोच्यते, तदपि द्वितीयमतेऽविरुद्धम्। यतो वाचकत्वे नियन्त्रिते इत्यस्यैकार्थमात्रप्रत्यायनसहायकत्वमित्यर्थः, तस्यैव तात्पर्यविषयभूतत्वात्। अतो द्वितीयस्मिन्मते संयोगादयोऽप्राकरणिकार्थप्रतीतिनियामका नावगन्तव्याः, अपितु तात्पर्यविषयीभूतविशेषार्थप्रत्यायनसहायकाः। तद्वशाद्

---

१ सम्पादक, म० म० पण्डित शिवदत्त, जगन्नाथपण्डितराज–रसगङ्गाधर, पृ०१३६

यस्मिन्नर्थे तात्पर्यम्, तस्यैव शाब्दबोधो नेतरेषामतात्पर्यविषयीभूतानामर्थानाम ।[1]

ननु व्यक्तिवादिना व्यजकपदविरहे प्रतीयमानार्थप्रतीतिः कथमुपपाद्यते, महाकालेत्यादीनां पदानां प्राकरणिकार्थप्रत्यायनानन्तरं क्षीणशक्तित्वादितिचेन्न, अप्राकरणिकव्यंङ्ग्यार्थावगमनात्पूर्वंशक्यार्थप्रतीतिसमये भासमानस्य शब्दस्यानन्तरभाविनो व्यङ्ग्यार्थस्य प्रतीतिसमयेऽपि स्मृतौ भासमानत्वात् । आहोस्विदावृत्या महाकालादिपदं तत्रानीयते, तेन च व्यंङ्ग्यार्थप्रतीतिः ।

अधुना पण्डितराजो जगन्नाथः स्वकीये रसगङ्गाधरे पूर्वोक्तं मतद्वयमधोलिखितप्रकारेण प्रत्यवतिष्ठते । यथाहि—'सुरभिमांसं भवान् भुङ्क्ते' इत्यस्मिन्वाक्ये वक्तरि श्यालके सति नानार्थप्रत्यायकसुरभिशब्दात् गोमांसभक्षणरूपिणोऽप्राकरणिकस्यार्थस्य प्रतिपत्तिर्व्यञ्जनया भवतीति ध्वनिवादिनामाशयः । तत्र प्रकरणादिना नियन्त्रिताऽभिधा प्राकरणिकं सुगन्धिमांसरूपिणमर्थं प्रत्याय्य क्षीणसामर्थ्या सती नापरमप्राकरणिकं गोमांसरूपिणमर्थमवगमयितुं प्रभवतीति कृत्वा व्यक्तिवादिना व्यंजनाऽऽश्रीयते । परं नानार्थकस्य सुरभ्यादिपदस्य यदि नानार्थबोधने शक्तिस्तर्हि संयोगादीनां नियामकानां सद्भावेऽपि शब्दस्य तेषु तेष्वर्थेषु सङ्केतात् शक्त्यैव तेषामवगतिः । नहि प्रकरणादयः शब्दस्य सङ्केतितानर्थान्निरोद्धुं प्रभवन्ति । तद्यथा 'पयः रमणीयमि'त्यादौ द्व्यर्थकस्य पयःशब्दस्य दुग्धजलरूपिणो र्द्वयोरर्थयोः सङ्केतः ।

यदि संयोगादीनां नियामकानां निमित्तेन नानार्थकानां पदानां प्राकरणिके एकस्मिन्नेवार्थे सङ्केत अभ्युपेयेत, तेन चापरेषामर्थानामाच्छादनं स्यात्, तर्हि 'पय आनय' इत्युक्ते सति पयःशब्दस्योभयार्थज्ञानवन्तः प्रकरणज्ञानशालिनश्च प्रकरणज्ञानानभिज्ञं पुरुष कथमिदमवबोधयेयुर्यदत्र वक्तुस्तात्पर्यं जलरूपिण्येवार्थे न तु दुग्धरूपेऽर्थे । अतः संयोगादिभिः प्रतिबन्धकैरप्राकरणिकार्थप्रतीतिनियन्त्रणं भवतीति कथनं नोचितम्, शब्दस्य प्राकरणिकाऽप्राकरणिकोभयविधार्थे तुल्यसङ्केतात् । किञ्च यावन्नानार्थधीजनकं पदज्ञानमस्ति, तावत् प्रतिबन्धकेषु सत्स्वपि अर्थोद्बोधकसामग्रीभूतपदज्ञानसद्भावे, सङ्केतितानां सर्वेषां प्राकरणिकाप्राकरणिकानामर्थानां समानैवावगतिः । अत एव 'पय आनय' इत्यादौ सत्यपि प्रकरणे प्रतिबन्धके, प्रकरणज्ञानवतां द्व्यर्थप्रतीतिर्नोपरुद्धा भवति । अतो नानार्थकस्य पदस्य तेषु तेष्वर्थेषु नियतसङ्केतवत्वात् गोभयार्थप्रतीतिर्नासौ व्यक्तिसमुपस्थाप्या प्रत्युताभिधाबोध्यैव ।[2]

---

१ सम्पादक, म० म० पण्डित दुर्गाप्रसाद, जगन्नाथ पण्डितराज-रसगंगाधर, पृ० १३७

२ तत्रैव पृ० १३८

प्रकरणादिज्ञानवशात् प्राकरणिकेऽर्थे तात्पर्यं निश्चीयते, ततश्च तात्पर्यविषयीभूतस्यैवार्थस्य वाक्येऽन्वयो भवति, अभिमतार्थस्यैव शाब्दबोध उपपद्यते। अतः अतात्पर्यविषयीभूतस्यार्थस्य प्रतीतिर्व्यक्त्येति व्यक्तिवादिनां द्वितीयमपि मतं यौक्तिक्या बुद्ध्या निष्पीड्यमानं नावस्थातुं प्रगल्भते। अत्र पण्डितराज आशङ्कते—किमतात्पर्यविषयीभूतस्य शक्त्याऽनभिहितस्य सर्वस्यार्थस्य प्रतिपत्तिर्व्यंजनयेति भवतामाशयः, उत क्वाचित्क एव व्यंजनासंचारो न सार्वत्रिक इति श्रीमतां मतम्? तत्र नाद्यः, प्राकरणिकाप्राकरणिकोभयार्थविषयिण्यां प्रतीत्यां यदि सर्वत्र व्यंजनोल्लासः, तर्हि नानार्थप्रतीतिस्थले यस्मिन्नर्थे वक्तुस्तात्पर्यं स एवार्थः शक्तिबोध्य इत्येतस्य नियमस्य निर्निबन्धनत्वात। तद्यथा—भवतां मते अप्राकरणिकस्य सर्वस्यार्थस्य प्रतीतिर्व्यंजनासम्पाद्या। तथात्वे नानार्थकशब्दस्थले प्राकरणिकार्थबोधनियमनमहेतुकमेव। यदि नानार्थस्थले व्यंजनोपास्यैव तर्हि प्राकरणिकस्यार्थस्य नियमनं भवेन्नवा भवेत्, अप्राकरणिकार्थप्रतीतिः सर्वदा व्यंजनव्यापारगम्या। तथा सति प्रकरणादिकानां प्रतिबन्धकत्वेन परिकल्पनं सर्वथाऽप्रयोजकमेवेति हृदयम्।

न द्वितीयः। व्यंजनायाः क्वाचित्कस्योल्लासस्य प्रमाणासिद्धत्वात्। अत्र व्यंजनोल्लासोऽत्र तु नेति वक्तुमशक्यत्वात् ननु। यत्राप्राकरणिकेऽर्थे कवेस्तात्पर्यम् तस्मिन् तात्पर्यविषयीभूतेऽर्थे क्वाचित्को व्यंजनोल्लास इति चेन्न, 'रुचिङ्कुरु' इत्यादौ चिङ्कुरिति शब्दस्य काश्मीरीभाषायां स्त्रीयोन्यन्तर्वर्त्यंकुरविशेषेत्यसभ्यार्थस्यावगतौ कवेरतात्पर्यत्वात्। ननु यत्राप्राकरणिकार्थग्रहणविशिष्टस्य श्रोतुर्बुद्धि र्नानार्थस्थले व्यंजनामुल्लासयितुं समर्थेति यत्र व्यङ्ग्यार्थावगतिः क्वाचित्की न सार्वत्रिकी तत्र श्रोतुः शक्तिविशेष एव तस्याः समुल्लासे हेतुरिति चेन्न, तथात्वे श्रोतुः शक्तेर्नियन्त्रितामभिधामप्युल्लासयितुं समर्थत्वात्। नह्यत्र किमपि निबन्धनं येन श्रोतुः शक्तिविशेषः केवलं व्यंजनामेवोत्थापयेन्नाभिधाम्, श्रोतुः शक्तिविशेषस्योभयत्र तटस्थतया संचरणात्। सम्भवत्यपि क्वाचित्के व्यञ्जनोल्लासे, अप्राकरणिकस्यार्थस्य प्रतीतिर्व्यक्तिसमुपस्थाप्या नाभ्युपगन्तव्या। यतः 'उल्लास्य कालकरवालमिवाम्बुवाहम्' इत्यादौ नानार्थकशब्दस्थले येन नानार्थवतां शब्दानां नानार्थेषु समयो ज्ञातः, तेनेव प्राकरणिका अप्राकरणिकाश्चार्था ज्ञायन्ते येन च तत्तत्पदानां ज्ञाता अप्यर्थाः पश्चाद्विस्मृताः, तेनाप्राकरणिकस्यार्थस्याप्यावगतिर्न क्रियते। सङ्केतज्ञानश्चाभिधयेत्यत्र नास्ति संशयः। एवं ज्ञातसङ्केतस्य पश्चाच्च विस्मृतसङ्केतस्य पुरुषस्य बुद्धावप्राकरणिकार्थसमुल्लासो व्यंजनयापि न शक्यसम्पादः। अतो व्यर्थो व्यंजनां प्रत्याग्रहः।[1]

---

1 'इत्थं च नानार्थस्थलेऽपि तात्पर्यधियः कारणतायां शिथिलीभवन्त्याम्

इत्थं पण्डितराजेन नानार्थकशब्दस्थले व्यंजनाया अप्राकरणिकार्थप्रतीतिरिति प्राचां प्रोद्घोषितः सिद्धान्तः प्रबलयुक्तिप्रमाणेन जर्जरीकृतः पश्चाच्च प्रकारान्तरेण स्वकीयः सिद्धान्त एवं व्यवस्थापितः।

## शाब्द्या व्यञ्जनाया विषये पण्डितराजजगन्नाथस्य स्वीयं मतम्

योगरूढस्थले 'रूढिर्योगाद्बलीयसीत्यनेन न्यायेन रूढ्यर्थस्य प्राथमिक्यवगतिरित्यत्र न कस्यचिद्विप्रतिपत्तिः। शब्दादेव प्रमितः' (ब्रह्मसूत्रम्, १,३,२४) इति ब्रह्मसूत्रप्रमाणं रूढ्यर्थस्य प्राथमिकीमुपस्थितिं द्रढयति। तथाहि 'ईशानो भूतभव्यस्य स एवाद्य स उ श्वः' इत्यत्रेशानशब्दो जीवार्थबोधकः परब्रह्मरूपार्थाभिधायको वेति संशये योगमर्यादया ऐश्वर्यविशिष्टे जीवरूपिण्यर्थे उपस्थिते शब्दादेव प्रमितः' इति सूत्रबलादीशानशब्दस्य परं ब्रह्मेत्येव रूढ्यर्थो गृह्यते। एवं 'ईशान' इति योगरूढशब्दस्य केवलयोगशक्त्याऽवसीयमानो जीवार्थोऽसङ्गतो भवति। पश्चाच्च रूढिमर्यादया परब्रह्मरूपिणोऽर्थस्य ग्रहणम्। अयमाशयः। ईशानशब्दः परमात्मन्यर्थे योगरूढः। अतः केवलयोगमर्यादया ऐश्वर्यविशिष्टजीवरूपार्थप्रतीतिर्निरुध्यते, रूढेर्योगापहारित्वात्। ततश्च तादृशार्थलाभ इष्टश्चेत्तदा अभिधाभिन्ना वृत्तिरावश्यकीति उदाहरणस्यास्य पिण्डितार्थः। एवं पङ्कजादिषु योगरूढशब्देष्वपि रूढिमर्यादया कमलरूपिणोऽर्थस्यैव पूर्वमवगतिर्नतु कुमुदकल्हारादीनां योगलभ्यानामर्थानां प्रतीतिः। 'पङ्काज्जायते' इति व्युत्पत्त्या पङ्कजपदस्य कुमुदाद्यर्थो यौगिकः। परं रूढिमर्यादयाऽसावर्थो नियन्त्रितो भवति केवलं कमलरूपिणो रूढ्यर्थस्यैव बोधः अत एव नैयायिकाः पङ्कजपदात् कुमुदकल्हाररूपिणो योगलभ्यस्यार्थस्य प्रतीतिर्लाक्षणिकीति सम्प्रतिपद्यन्ते। अभिधायाः कमलरूपिणि रूढ्यर्थे नियन्त्रणात्। पङ्कजपदस्य सङ्केतितोऽर्थ आशुबुद्धिसमारूढः कमलरूप एव। पश्चाच्च कुमुदकल्हाररूपिण्यर्थे पङ्कजपदस्य साक्षात् सङ्केताकरणात् योगलभ्यस्यार्थस्य प्रतीतिर्लक्षणयैव सम्पाद्या।

एतदेवोदाहरणेन विशदीक्रियते—

अतात्पर्यार्थविषयशाब्दबुद्धिसम्पादनाय व्यक्तिस्वीकारोऽनुचित एव, शक्त्यैव बोधद्वयोपपत्तेः।' पण्डितराजजगन्नाथ—रसगंगाधर, पृ० १४०

अबलानां श्रियं हृत्वा वारिवाहैः सहानिशम् ।
रमन्ते चपला यत्र स कालः समुपागतः ॥[1]

इत्यत्राबलावारिवाहचपलाः शब्दा योगरूढाः । रूढिमर्यादया एषां शब्दानामभिधया स्त्रीमेघविद्युद्रूपिणोऽर्था अभिधीयन्ते । एषां शब्दानां साक्षात्तेष्वर्थेषु सङ्केतात् । परं पश्चात् गाढतरव्युत्पत्तिमसृणीकृतान्तःकरणानां विदग्धानां हृदयधाम्नि योगमर्यादया वारिवाहादीनां पदानां निर्बलधीवरादय असङ्केतिता अर्था अपि परिस्फुरन्ति । न च तादृशानां चमत्कारिणामर्थानां समुल्लासोऽभिधया, तस्याः साक्षात् सङ्केतिते मेघादिरूपिणि रूढ्यर्थे परिक्षयात् । अतोऽबलेत्यादीनां योगरूढानां शब्दानां यौगिकोऽर्थोऽसङ्केतितः शक्तिभिन्नेन व्यापारेणैव प्रतिपाद्यः । न चात्र लक्षणा, मुख्यार्थबाधादिलक्षणाहेत्वदर्शनात् । अतः पारिशेष्याद् व्यञ्जनयैवासावर्थो द्योत्यः । असावर्थोऽनुभूयते सहृदयैः चमत्कृतिञ्चादधातीति तद्द्योतकः शब्दस्य व्यापारो व्यञ्जनाह्वोऽत्रावश्यमभ्युपेयः ।

चाञ्चल्ययोगिनयनं तव जलजानां श्रियं हरतु ।
विपिनेऽतिचञ्चलानामपि च मृगाणां कथं हरति ॥[2]

इत्यत्रापि योगरूढपदेभ्यश्चञ्चलं नायिकानेत्रमचञ्चलानां कमलानां श्रियं यद्धरति तदस्मिन्नुपपद्यत एव । परं समधिकचञ्चलानां हरिणानां तिरस्कारस्तेन कथं क्रियते इत्यत्राश्चर्यमिति योऽर्थः प्रतीतिपदवीमधिरोहति, असौ रूढिमर्यादया । काव्यानुशीलनपरैः सूक्ष्मज्ञैः सहृदयैरनवधानवतामेव धनापहरणं चौरैः क्रियते, नत्ववधानवतां पुरुषाणामित्यर्थोऽप्यास्वाद्यते । अस्मिन्नपरेऽर्थे जलादीनां पदानां न साक्षात्सङ्केतः कमलादौ रूढेऽर्थे एव तेषां शक्तेर्नियन्त्रणात् । जलजादीनां पदानामज्ञाद्यर्थेषु न रूढिः । अतो रूढिमर्यादया न तेषां प्रतीतिः । परं योगशक्त्यां एभ्यः पदेभ्यश्चौराद्यर्थो भासते, अतो रूढार्थप्रत्यायनविरतसामर्थ्याया अभिधाया न तत्र प्रसरः । एवंविधे योगरूढस्थले लक्षणयापि न निर्वाहो मुख्यार्थबाधादिहेतुत्रयाभावात् । अतोऽशक्तानां द्रव्यमपहृत्य जलवाहकैः पुरुषैः सह पुंश्चल्यो रमन्ते इत्याकारकः असङ्केतितो

---

१. सम्पादक, म० म० पण्डित दुर्गाप्रसाद, जगन्नाथ पण्डितराज-रसगंगाधर, पृ० १४३
तत्रैव पृ० १४४

योगशक्तिलभ्योऽर्थः केन व्यापारेण समुल्लसेदिति व्यञ्जनावश्यमभ्युपगता भवति।

तथा सति प्राकरणिकाप्राकरणिकार्थविषये उपमाद्यलङ्काराणां स्वशब्देनानभिधानाद व्यङ्ग्यत्वमेव तेषां नाभिधेयत्वम्। यदि योगशक्तिलभ्यस्यार्थस्योपमानोपमेयभावावलम्बिनोऽलङ्कारस्य च प्रतीतौ व्यञ्जनाऽऽवश्यकी, तर्हि वस्तुरूपिणोऽप्राकरणिकार्थस्य प्रतीतिरपि व्यञ्जनयैव भवतीति स्वीकारे न काचिद्धानिः।[1]

एवं पण्डितराजेन जगन्नाथेन प्राचां मम्मटादीनां ध्वनिवादिनां मतं प्रबलयुक्तिपुरस्सरं दृढीकृतम्। शाब्द्या व्यञ्जनायाश्चेत्थं लक्षणमुपन्यस्तम्—

योगरूढस्य शब्दस्य योगे रूढ्या नियन्त्रिते।
धियं योगस्पृशोऽर्थस्य या सूते व्यञ्जनैव सा॥[2]

पण्डितराजजगन्नाथेनाप्यभिनवगुप्तमम्मटादिदर्शितां दिशमनुसृत्य वस्त्वलङ्काराभ्यां शाब्द्या व्यञ्जनाया द्विधा विभागः कृतः।

## शब्दशक्तिमूलवस्तुध्वनिः

राज्ञो मत्प्रतिकूलान्मे महद्भयमुपस्थितम्।
बाले, वारय पान्थस्य वासदानविधानतः।[3]

अत्र प्रतिकूलान्नृपाद् मम महद्भयमतः स्वगृहे वासो देय इति कस्यचिच्छरणार्थिनः प्रार्थना। अयमस्य पद्यस्य वाच्योऽर्थः अनन्तरं कामातुरं मामयमुदीयमानश्चन्द्रो नितरां संतापयतीति कृत्वा उपभोगं देहीति व्यङ्ग्योऽर्थः परिस्फुरति। अयमर्थो वस्तुरूपः। तेन चात्र शब्दशक्तिमूलवस्तुध्वनिः।

अनेन प्रकारेण पण्डितराजजगन्नाथेनाप्राकृतस्यार्थस्यापि व्यङ्ग्यत्वं सिद्धान्तितम्। यदि कश्चिद् ब्रूयात यत रूपकादेरलङ्कारस्यैव व्यङ्ग्यत्वात् वस्तु-

१ एवं स्थिते नानार्थस्थलेऽप्युपमायाः प्राकरणिकाप्राकरणिकार्थगतायाः प्रतिपत्तयेऽवश्यं वाच्यया व्यञ्जनयैवाप्राकरणिकस्याप्यर्थस्य प्रतिपत्तावलं क्लिष्टकल्पनयेत्याशयेन प्राचीनैरुक्तं नानार्थव्यञ्जनत्वमपि न दुष्यति।
रसगङ्गाधर, पृ० १४३-४४
२ तत्रैव पृ० १४६
३ तत्रैव, पृ० १६२

रूपिणोऽर्थस्य च व्यङ्ग्यत्वाभावान्नास्त्यत्र शब्दशक्तिमूलो वस्तुध्वनिस्तन्न, चन्द्ररूपिणोऽर्थस्य राजरूपार्थाच्छादकत्वात् । अतएव नृपार्थकोऽपि राजशब्द-श्चन्द्ररूपार्थाभिव्यक्त्यर्थमेव कविना प्रयुक्तः । यदि द्वयोर्नृपचन्द्ररूपिणोरर्थयोः प्रतीतिरेककालिकी स्यात्तदैवोपमानोपमेययोस्तुल्यप्रतीतौ सत्यामुपमाद्यलङ्कारस्य व्यङ्ग्यत्वं साम्प्रतम् । यतो राजादिपदैश्चन्द्रपक्षसम्बन्धा अर्था एव प्राधान्येन ग्राह्याः, अतः प्रस्तुते उदाहरणवाक्ये उपमानोपमेयभावस्य युगपदनुल्लासात रूपकादीनामलङ्काराणां न प्राधान्येनाभिव्यक्तिरपितु वस्तुरूप्यर्थ एवात्र प्राधान्येन व्यङ्ग्यः ।[1]

इत्थं पण्डितराजेन नानार्थकशब्दस्थले वस्तुरूपिणोऽर्थस्य व्यङ्ग्यादलङ्कारात् सर्वथा विविक्तो विषय इति प्रमाणीकृत्याप्राकृतस्यार्थस्यापि ध्वननं समुपोद्वलितम् ।

## शब्दशक्तिमूलालङ्कारध्वनिः

करतलनिर्गलदविरलदानजलोल्लासितावनीवलयः ।
धनदाग्रमहितमूर्तिर्जयतितरां सार्वभौमोऽयम् ।।[2]

अत्राभिधायां गजरूपार्थे नियन्त्रितायां सत्यामप्राकरणिक इन्द्रदेवरूपोऽर्थो व्यंङ्ग्योऽसम्बद्धो मा भवेदितिकृत्वा प्राकरणिकाप्राकरणिकयोरर्थयोरुपमानोपमेय-भावेनावस्थानम् । तेन चोपमालङ्कारध्वनिः ।

अनेन पर्यालोचनेन स्फुटं प्रतिपद्यते यच्छाब्दी व्यंजना सर्वथा श्लेषव्यतिरिक्ता । इयञ्च द्विविधा वस्त्वलङ्काररूपिणोरर्थयोर्ध्वननादिति सर्वेषां व्यंजनावादिनामा-लङ्कारिकाणामभिमतम् ।

## लक्षणामूला शाब्दी व्यंजना

लक्षणा मूले यस्याः सा व्यंजना लक्षणामूला । लक्षणासत्त्वे लक्षणामूलव्यं-जनासत्त्वं लक्षणाभावे लक्षणामूलव्यंजनाभाव इत्यन्वयव्यतिरेकाभ्यां लक्षणामूला शाब्दी व्यंजना लक्षणाश्रितैव । अत एवेयं लक्षणामूलेत्युच्यते ।

---

१ 'न चात्र नृपचन्द्रयोरुपमानोपमेयभावो भेदापोहरूपं रूपकं वा तथास्त्विति वाच्यम्, इह नृपरूपस्यार्थस्य चन्द्ररूपार्थगोपनमात्रार्थमुपात्तत्वेन युगपदुल्ल-सितोपमानोपमेयकयोरुपमारूपकयोस्तात्पर्यविषयताया अयोगात् ।

२ रसगंगाधर, पृ० १५६

नन्वभिधामूलायां शाब्द्यां व्यंजनायां शब्दस्य पर्यायान्तरेण परिवृत्यसहत्वात्तस्याः शाब्दीति व्यपदेशोऽन्वर्थकः, परं लक्षणामूलायां व्यंजनायां 'गङ्गायां घोषः' इत्यादौ गङ्गापदस्य भागीरथीत्यादिपर्यायान्तरेण परिवृत्तिसहत्वात् प्रयोजनभूतस्य शैत्यपावनत्वाद्यतिशयरूपिणो व्यंङ्ग्यार्थस्य भागीरथीत्यादिपर्यायान्तरप्रयोगेऽपि समुल्लासाच्छाब्दीत्यभिधानं सर्वथानुपपन्नमिति चेन्न, लक्षणामूलाया व्यंजनायाः शाब्दीति व्यपदेशे पर्यायान्तरपरिवृत्यसहत्वभिन्नकारणस्याप्यनुसन्धानात् । यतो हि लक्षणामूलाया व्यंजनायाः शाब्दीति नामकरण न केवलं पर्यायान्तरपरिवृत्यसहशब्दहेतुकम्, प्रत्युत यथाऽभिधा शब्दस्य व्यापारस्तद्वदर्थनिष्ठापि लक्षणा मूलतः शब्दस्यैव व्यापारः । ततश्च यथा लक्षणा शब्दाश्रिता तथा तन्मूला व्यंजनापि शब्दाश्रितेति हेतोः पर्यायान्तरपरिवृत्तिसहत्वेऽपि लक्षणामूला व्यंजना शाब्दीत्युच्यते ।

किञ्च 'गङ्गायां घोषः' इत्यादौ गङ्गापदं वाचकत्वेनैव पर्यायान्तरपरिवृत्तिसह नतु लक्षकत्वेन । यदि 'गङ्गायां घोषः' इत्यनभिधाय 'गङ्गातटे घोषः' इत्यभिधीयेत, तर्हि गङ्गापदस्य लक्षकत्वविघटनाच्छैत्यपावनत्वादीनां प्रयोजनानां न तथा प्रतिपत्तिः । यतो हि गङ्गापदं यथा लक्षकत्वेन शैत्यपावनत्वादिप्रयोजनान्यवगमयितुं प्रभवति न तथा वाचकत्वेन । अतो लक्षकस्य गंगापदस्य वाचकपदेन परिवृत्तिमसहमानाल्लक्षणोत्थापिताया व्यंजनाया अपि शाब्दीति व्यपदेशः सम्भवति ।

अभिधामूलायां व्यंजनायामभिधाव्यंजनयोर्नान्वयव्यतिरेकाभ्यामवस्थानम् । तत्राभिधासत्त्वेऽपि व्यंजनाभावो दृश्यते । परं लक्षणायाः प्रयोजनं विनाऽनुत्थानात् प्रयोजनस्य च सर्वदा व्यंजनाद्यो त्यत्वाल्लक्षणामूला व्यंजना लक्षणा विना नावस्थातुमर्हति । अतो लक्षणामूला व्यजना सर्वथा लक्षणानुप्राणिता, लक्षणामुपजीव्य तदुत्थानात् । तद्यथा —

मुखं विकसितस्मितं वशितवक्रिमप्रेक्षितम्
समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः ।
उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरम्
बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ।।[1]

कश्चित्तरुणः काञ्चित्तरुणीमवलोक्य तत्सौन्दर्यमुग्धस्तां श्लाघते मुखेत्यादिना । अत्र काव्यचारुत्वं लक्षणानुप्राणितव्यंजनाजन्यम् । विकसितवशितसमुच्छलितमुकुलितोद्धुरादयः शब्दा लाक्षणिकाः । विकासस्य पुष्पधर्मस्य स्मिते, वशीकरणस्य

१ सम्पादक, करमरकर, दामोदररघुनाथ, मम्मट-काव्यप्रकाश पृ० ५६ ।

चेतनधर्मस्य प्रेक्षिते, ऊर्ध्वगतिविशेषरूपसमुच्छलनस्य मूर्तद्रवधर्मस्य विभ्रमे, मुकुलतत्वस्य पुष्पधर्मस्य स्तनयोः, उद्धुरत्वस्योत्कृष्टधुरावत्वरूपस्य चेतनधर्मस्य जघने बाधितत्वात् । ततो लक्षणया विकसितादिपदैर्बाधितस्वार्थैःसातिशयत्वस्वाधीनत्वबाहुल्यत्वकाठिन्यत्वविलक्षणरतियोग्यत्वादयोऽर्थाः क्रमेण लक्ष्यन्ते । व्यंजनया च लक्षणायाः प्रयोजकीभूतानि सौरभयुक्तानुरागसकलमनोहारिताऽऽलिङ्गनयोग्यत्वरमणीयत्वादीनि द्योत्यन्ते । अत्र व्यंजनैतानि रमणीयत्वादीनि व्यंङ्ग्यानि लक्षणां निमित्तीकृत्य बोधयति, लाक्षणिकपदाभावे प्रयोजनस्याननुभवात् । अतो लक्षणामुखेन व्यंजनायाः सौरभसकलमनोहारितादिगूढार्थप्रत्यायनाल्लक्षणामूला शाब्दी व्यंजना । यथा वा—

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घनाः
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ।।[1]

अत्र लिप्तसुहृद्रामादयः शब्दा उपचरिताः, वियति लेपनस्य पयोदे चाचेतने सौहृदस्यानन्वयात् । अत एवानन्विता इमे लक्षणया सम्पर्कोपकारित्वादिकमर्थं लक्षयन्ति । तेन चातिशयप्रत्यायनं व्यंङ्ग्यं व्यक्तिवेद्यं विदग्धानां प्रतीतिपदवीमधिरोहति । रामशब्देनाप्युपचरितेनानुपयुज्यमानस्वार्थेन राज्यनिर्वासनाद्यसंख्येयं प्रयोजनं व्यज्यते लक्षणामुखेन । अन्वितं मुख्यं शब्दं परित्यज्य अमुख्यानन्वितपदप्रयोगः सर्वदा प्रयोजनप्रत्यायनार्थमेव । तच्च प्रयोजनमभिधाव्यापारेणाशक्यसमर्थ्यम्, शब्दानां तत्र सङ्केताभावात् । एतत् प्रयोजनं लक्षणयापि न प्रत्याययितुं शक्यते, तस्य लक्षणायाः प्रयोजकत्वात् । अतः पारिशेष्याद् ध्वननव्यापारद्योत्यमेव तत प्रयोजनमिति लक्षणामूला शाब्दी व्यंजना सर्वथा लाक्षणिकशब्दोत्थापिता विभाव्या । तल्लक्षणं विश्वनाथाचार्येणेत्थमुपनिबद्धम्—

लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम् ।
यया प्रत्याय्यते सा स्यात् व्यंजना लक्षणाश्रया ।।[2]

लक्षणायां प्रयोजनं सर्वथा व्यंजनाबोध्यमतः प्रयोजनवत्या लक्षणाया ये भेदा भवन्ति, तेषु सर्वत्र व्यंजनाप्रसरः । तथा सति प्रयोजनवत्या लक्षणाया विश्वनाथाचार्यप्रोक्तदिशा चतुष्षष्टिर्भेदा भवन्ति । एवमेव लक्षणामूलाया व्यंजनाया

---

१ सम्पादक, शास्त्री, पण्डित पट्टाभिराम, आनन्दवर्धन-ध्वन्यालोक, पृ० १६७
२ विश्वनाथ, साहित्य दर्पण, २,१५

अपि चतुष्षष्टिर्भेदा उपपादयितुं शक्यन्ते। यद्यपि ध्वनिवादिभिराचार्यैर्लक्षणामूलाया व्यंजनाया अयं भेदप्रपंचो न प्रदर्शितः तथाप्येतासु चतुष्पष्टिसंख्याकासु लक्षणासु प्रयोजनस्य व्यंजनागम्यत्वाल्लक्षणामूलाया व्यंजनाया अप्येते भेदा नूनं सम्भाव्यन्ते एवेति मामकीन सप्रश्रयं मतम्। ध्वनिवादिभिराचार्यैः केवलं प्रधानव्यंङ्ग्यगुणीभूतव्यंङ्ग्ययोरेव ध्वनिगुणीभूतव्यंङ्ग्यनामभ्यां भूयांसो भेदाः प्रपंचिताः। एतेषां सर्वेषां भेदानां विवेचनमत्र प्रकृतानुपयोगान्न सम्भाव्यते, अतः केवलमविवक्षितान्यपरवाच्यापरपर्यायस्य लक्षणामूलध्वनेरर्थान्तरसंक्रमितवाच्यात्यन्ततिरस्कृतवाच्यौ द्वावेव भेदो प्रदर्श्येते। उभयत्र व्यङ्ग्यार्थस्य लक्षणामूलया शाब्द्या व्यंजनया द्योत्यत्वात्। अवशिष्टेषु सर्वेषु ध्वनिभेदेषु व्यङ्ग्यार्थस्याभिधामूलाया व्यंजनया द्योत्यत्वात्तेषां विवेचनमत्र न विधीयते।

अविवक्षितान्यपरवाच्यध्वनौ व्यंग्योऽर्थो लक्षणमूलया शाब्द्या व्यंजनया द्योत्यः। लक्षणायां वाच्योऽर्थः क्वचिदर्थान्तरे संक्रान्तो भवति, क्वचिच्चात्यन्तं तिरस्कारमुपयाति। अतो वाच्यार्थस्यान्यत्रसङ्क्रमणादत्यन्ततिरस्काराच्चाविवक्षितान्यपरवाच्यो ध्वनिर्द्विविधः। अर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्च।[1]

## लक्षणामूलोऽर्थान्तरसङ्क्रमितवाच्यो ध्वनिः

यत्र वाच्योऽर्थः स्वार्थे सम्भवन्नपि तात्पर्योपपत्तये लक्ष्यार्थे स्वात्मानं समर्पयति, ततश्च प्रयोजनरूपिणोऽर्थस्य प्रतीतिर्व्यञ्जनया लक्षणामूलया, तत्रार्थान्तरसङ्क्रमितवाच्यो ध्वनिः। तद्यथा—

ताला जाअन्ति गुणा जाला दे सहिअएहिं घेप्पन्ति।
रइकिरणानुग्गहिआइं होन्ति कमलाइं कमलाइं॥[2]

अत्र द्वितीयः कमलशब्दो मुख्यार्थे सम्भवन्नपि तावतानुपयोगाल्लक्ष्मीपात्रत्वविकसितत्वसौरभत्वाद्यपरेऽर्थे आत्मानमर्पयित्वा तादृशगुण

---

१ अर्थान्तरं सङ्क्रमिते वाच्येऽत्यन्तं तिरस्कृते।
अविवक्षितवाच्योऽपि ध्वनिर्द्वैविध्यमृच्छति॥
— विश्वनाथ, साहित्यदर्पण, ४, ३

२ तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि॥
सम्पादक, शास्त्री, पण्डित पट्टाभिराम, आनन्दवर्धन-ध्वन्यालोक पृ० १७०

विशिष्टं कमलं, नतु साधारणं कमलरूपिणमभिधेयमर्थं लक्षणासहकारितया अभिव्यनक्ति। अतोऽत्र कमलरूपिणोऽर्थस्य सौरभादिगुणविशिष्टकमलरूपिण्यर्थान्तरे सङ्क्रमणात् अर्थान्तरसङ्क्रमितवाच्यो लक्षणामूलः शाब्दो ध्वनिः।

## लक्षणामूलोऽत्यन्ततिरस्कृतवाच्यो ध्वनिः

यत्र वाच्योऽर्थो बाधितः स्वार्थप्रतीतिं कारयित्वोपरतो भवति, अन्येऽर्थे च नोपसङ्क्रमते, तत्र वाच्यार्थस्यात्यन्ततिरस्काराद् अत्यन्ततिरस्कृतवाच्यो ध्वनिर्लक्षणामूलः। तद्यथा—

रविसङ्क्रान्तसौभाग्यस्तुषारावृतमण्डलः।
निश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते॥[1]

अत्रान्धशब्दः सर्वथा स्वार्थे बाधितः। आदर्शस्य नेत्ररहितत्वात्। नेत्रवत एवान्धता दृष्टिनाशाज्जायते नत्वनेत्रस्यादर्शादिकस्य जडवस्तुनः। एवमन्धशब्दः स्वार्थमभिधाय पलायते। ततो नष्टदृष्टिर्यथा न कञ्चन पदार्थं द्रष्टुं पारयति, तथा निश्वाससमाच्छन्ने आदर्शेऽपि न पदार्थस्फुटीकरणशक्तिरिति लक्ष्यार्थावगत्यनन्तरं चन्द्रमसोऽसाधारणविच्छायत्वानुपयोगित्वादिधर्मजातं लक्षणायाः प्रयोजनायितं लक्षणामूलया व्यंजनयाऽभिव्यक्तं भवति। अत्रान्धशब्दः स्वार्थे बाधितोऽपरस्मिन्नर्थेऽनुपपन्नः स्वार्थं प्रत्याय्य पलायते इव, अतो वाच्यार्थस्यात्यन्ततिरस्कारादत्यन्ततिरस्कृतवाच्यो लक्षणामूलो ध्वनिः।

नन्वभिधामूलायां व्यंजनायां शब्दस्य पर्यायान्तरेण परिवृत्यसहत्वेऽपि अर्थस्य व्यंजकता न निराकर्तुं शक्यते, काव्यस्य शब्दार्थोभयरूपत्वात्, शब्दस्यार्थं विना अर्थस्य च शब्दं विनावस्थातुमसम्भवत्वादतः शब्दव्यंजकतायामर्थस्याप्यपेक्षणाच्छाब्दीति व्यपदेशोऽयुक्त इति चेन्न, प्राधान्येन व्यपदेशा भवन्तीति न्यायाच्छब्दस्य प्राधान्येन व्यंजनायां शाब्दीतिव्यपदेशस्योपपन्नत्वात् अयमाशयः। शाब्द्यां व्यंजनायामर्थस्यापि सहकारित्वेनापेक्षा यद्यप्यशक्यशङ्का, अर्थं विना शब्दस्यानवस्थानात्तथापि शाब्द्यां व्यंजनायां शब्द एव प्राधान्येन व्यंजकोऽर्थस्तु केवलं सहकारी। अतोऽर्थस्य व्यंजकतायामपि शब्दव्यंजकतायाः प्राधान्याच्छब्दमुखेन व्यपदेशः।[2]

---

१ सम्पादक, शास्त्री, पण्डित पट्टाभिराम, आनन्दवर्धन-ध्वन्यालोक, पृ० १७२

२ 'केवलं शब्दशक्तिरुद्भटाऽर्थशक्तिस्तु तामेवानुप्राणयतीति नार्थशक्तिमूलो व्यवहारः' श्री शिवप्रसाद, मम्मटकाव्यप्रकाश, दीपिका टीका, पृ० ७४

# मेघदूते तिथिनिश्चयः

## रेवाप्रसादद्विवेदी

महाकवेः कालिदासस्य मेघदूतं नाम खण्डकाव्य कथावस्तुनो यत् खण्डमादायोपनिबद्धं तत्र तिथीनां विद्यमानायामपि सन्ध्यंगतायामिदन्तया निश्चयो नितान्तमेव दुष्करः। तत्र च तन्त्रं महाकवेरेवाभिव्यक्तेर्मुग्धात्वम्। ततश्च कथाखण्डमिदं ज्ञातुं कविवचनान्येवात्रोपस्थाप्यन्ते—

कश्चित् कान्ताविरहगुरुणा : स्वाधिकारात् प्रमत्तः
शापेनास्तंगमितमहिमा वर्षभोग्येण भर्त्तः।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥१॥

तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी
नीत्वा मासान् कनक-वलयभ्रंशरिक्तप्रकोष्ठः।
आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानु
वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श ॥२॥

तस्य स्थित्वा कथमपि पुरः कौतुकाधानहेतो-
रन्तर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ।
मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः
कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ॥३॥

प्रत्यासन्ने नभसि दयिताजीवितालम्बनार्थी
जीमूतेन स्वकुशलमयीं हारयिष्यन् प्रवृत्तिम्।
स प्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै
प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार ॥४॥

संतप्तानां त्वमसि शरणं तत् पयोद प्रियायाः
संदेशं मे हर धनपतिक्रोधविश्लेषितस्य।
गन्तव्या ते वसतिरलका नाम यक्षेश्वराणां
बाह्योद्यानस्थित-हरशिरश्चन्द्रिकाधौतहर्म्या ॥७॥

मेघेन वक्तव्यं वर्णितालकापथस्य यक्षस्य संदेशपदं च कविरेवमुपनिबध्नाति—

शापान्तो मे भुजगशयनादुत्थिते शाङ्र्गपाणौ
शेषान् मासान् गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगुणितं त तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चद्रिकासु क्षपासु ।।१०७।।

संदर्भेस्मिन्ननेके प्रश्ना उदयन्ते । यथा वर्षमात्रभोग्यस्य शापस्य प्रारम्भ-परिसमाप्तितिथी के, येयमत्र शिष्टस्य शापावधेर्मासचतुष्टयात्मकत्ववार्ता तत्र किं तावत् प्रथमं दिनम् यच्चेदं मेघदर्शनम्, यच्च ततः परं संदेशप्रेषणम्, तदुभयदिनं तादृशमासचतुष्टयप्रारम्भदिनं च परस्परमभिन्नं भिन्नं वेति । एतेषां समाधये यतमाना अपि विद्वांसो विसंवादक्लेशं परिहर्त्तुं न क्षमन्ते । लेखेऽत्र तेषां विकल्पानुपस्थाप्य स्वविचारानपि प्रस्तोतुं प्रयतिष्यते । तत्र प्रथमं शापावधिमेव गृह्णीमः ।

## शापावधिः

उपर्युक्तेषु पद्येषु चरमतमे पद्ये शापान्तो मे भुजगशयनादुत्थिते शाङ्र्गपाणौ इति वचनाद् योऽयं भगवतः प्रबोध उपनिबद्धस्तदर्थं तिस्रस्तिथयः पुराणेषूपलभ्यन्ते कार्तिकशुक्लपक्षस्य एकादशी, द्वादशी पूर्णिमा चेति । राधाकान्तदेवेन शब्दकल्पद्रुमेऽनेकानि पुराणवचनान्येतदर्थमुपस्थापितानि । निर्णयसिन्धुकृता कमलाकरभटटेनापि च प्रायेण तान्येव प्रमाणितानि तेषु ।

एकादश्यां तु शुक्लायां कार्तिके मासि केशवम् ।
प्रसुप्तं बोधयेद् ।

इत्यनेन ब्रह्मपुराणवचनेन,

कार्तिके - मलपक्षे तु साक्षादेकादशी स्मृता ।
भक्तिप्रदा हरेः सा तु नाम्ना ख्याता प्रबोधनी ।।

इत्यनेन वराहवचनेन, एवं प्रभृतिभिश्चानेकैः प्रमाणैः एकादश्याः,

इयं तु द्वादशी देव प्रबोधार्थं विनिर्मिता ।
प्राप्ता तव द्वादशी कौमुदाख्या जागृष्व जागृष्व च लोकनाथ ।
द्वादश्यां सन्धिसमये नक्षत्राणामसंभवे ।
आ-भा-का-सितपक्षेषु शयनावर्तनादिकम् ।।

इति वराहपुराणस्यैव वचनैः सह पुराणान्तरवचनैर्द्वादश्याः,

क्षीराब्धौ शेषपर्यङ्के आषाढ्यां संविशेद्धरिः ।
निद्रां त्यजति कार्तिक्याम्-

इत्यमुना च शब्दकल्पद्रुमे निर्णयसिन्धो च यम-वचनतया दक्षिणाव-

र्तनाथकृते मेघदूतप्रदीपे च कूर्मवचनतयोद्धृतेन प्रमाणेन पौर्णमास्याः प्रबोधतिथित्वं प्रतिपद्यते। कालिदासस्यात्र किमभिमतमिति वेदितुं न शक्यते तत्पद्ये तिथिनिर्देशं विना प्रबोधमात्रस्यैवोल्लेखात्। टीकितारः पुनरत्र परस्परं विसंवादिनः। तत्र मल्लिनाथः—

"पाणौ शाङ्‌र्गं यस्य तस्मिन् विष्णौ भुजगः शयनं तस्मादुत्थिते सति मे शापान्तः शापावसानं भविष्यतीति शेषः, शेषानवशिष्टांश्चतुरो मासान् मेघदर्शनप्रभृति हरिबोधन-दिनान्तमित्यर्थः, दशदिवसाधिक्यं त्वत्र न विवक्षित-मित्युक्तमेव, लोचने मीलयित्वा निमील्य गमयातिवाहये—"ति

"शापान्तो म" इति पद्यार्थं विवृण्वन् एकादशीमेव प्रबोधतिथिं मनुते, तेन "आषाढस्य प्रथमदिवस" इत्यत्रागतस्य प्रथमपदस्य आषाढ-शुक्ल-प्रतिपत्तया स्वीकृतत्वात्। भरतमल्लिकोपि सुबोधायाम्—

"... विष्णौ ... सर्पशय्याया उत्थिते ... प्रबुद्धे सति अर्थाद् उत्थानैकादश्याम्, तदानीमेव वर्षस्य पूर्णत्वात्, मे ... शापस्यान्तः परिसमाप्तिर्भविष्यती—"त्येवम् एकादशीमेव प्रबोधतिथिं मल्लिनाथवदेव

स्वीकरोति। मेघदूतपञ्जिकायां वल्लभः पुनः—

"कार्तिक-शुक्ल-द्वादश्यां भुजग-शयनाच्छेष-तल्पाद् उत्थिते शाङ्‌र्गपाणौ हरौ मम शापान्तो भविष्यति, तदैव वर्षस्य परिपूर्णत्वाद्—"

इत्येवं प्रागुक्तपद्यार्थ-व्याख्याने द्वादशीमेव प्रबोधतिथिमूरीकरोति। मेघदूत-प्रदीपकारो दक्षिणावर्तनाथश्च "क्षीराब्धौ शेषे-"त्यादिकं पूर्वोद्धृतं प्रमाणं कूर्म-वचनतयोद्धृत्य पौर्णमासीमेव प्रबोधतिथित्वेन निश्चिनोति। इत्थमत्र भिन्ना-ष्टीकाकारा, भिन्नत्वभांजि च तेषां मतानि। कालिदासश्च वाचंयमः। तर्हि किन्त्वत्र प्रतिपत्तव्यम्।

अयमत्रापरः प्रश्नो यदेतासां तिसृणां तिथीनां यापि काचन शापाव-सानतिथित्वेन गृह्येत तस्यां शापः कदा मोक्ष्यते। तस्या आरम्भ एव, समाप्तौ वा। अयमर्थो यत् तां मर्यादीकृत्य वा शापो मोक्ष्यते अभिव्याप्य वा। एवं च समापतितः शापारंम्भतिथावपि विकल्पः। तथा हि मर्यादा-पक्षे पूर्वोक्तानां ११, १२, १५ तिथीनामेव शापारम्भतिथित्वमापतति, अभि-व्याप्ति-पक्षे च तदव्यवहितोत्तरवर्त्तिनीनां क्रमेण १२, १३, १ तिथीनाम्। अत्रापि मल्लिनाथो वल्लभश्चेति द्वौ मर्यादा-वादिनौ, दक्षिणावर्त्तनाथोभिव्या-प्तिवादी, भरतश्च संदिग्धः। ततश्च मल्लिनाथमते एकादश्याः, भरतमते

तदुभयान्यतरस्य, दक्षिणावर्त्तनाथमते च तदुत्तरवर्त्ति-कृष्णपक्षप्रतिपदः शापारम्भ-तिथित्वमायाति । इत्थं हि शापस्यारम्भोऽवसानं चेति द्वितयस्यापि तिथिरनिश्चितैव । सोयमेकः शापावधिविषयकः प्रश्नः । एतत्समाधौ प्रश्नान्तराणि साहाय्यं वितरन्तीति साम्प्रतं विचार्यते । तत्र शिष्टस्य शापावधेर्मासचतुष्टयात्मकत्वात् प्रथमं दिनं तदेव यद्धि हरिशयनदिनत्वेन पुराणेषु प्रथितम् । का नामात्र तिथिरिति प्रश्नः प्रबोधनीवदेव दुस्समाधिः । एतत्तु तत्र नियतं यद् आषाढशुक्लपक्षस्य ११, १२, १५ एतासु काचनाप्येका तिथिर्हरिशयनतिथित्वेन मन्तुं शक्यते । तत एव प्रभृति धर्मशास्त्रेषु चातुर्मास्यव्रतस्यारम्भविधेर्दर्शनात् । यश्चात्र मेघदर्शन-संदेशप्रेषण-हरिशयन-दिनानामभिन्नतायाः प्रश्नस्तत्र मेघदर्शनदिनमेवात्यन्तं क्लेशावहमिति तदेव प्रथममुपादीयते ।

## मेघदर्शनदिनम्

मेघदर्शनदिननिश्चयाय कालिदासस्य पूर्वोद्धृतम् "आषाढस्ये-"ति द्वितीयं पद्यमेवैकमालम्बनम् । तत्र चार्थनिश्चये टीकितारो नैकमताः । ते हि "प्रथम-दिवस-"पदमनेकधा योजयन्तो दृश्यन्ते । पूर्वार्धगते च "कतिचित्"-पदे ते सर्व एवैकमताः । तथाहि दक्षिणावर्त्तनाथः—

"कतिचित् अनिर्दिष्टसंख्याविशेषेप्यस्मिन् पदे संख्याविशेषो द्रष्टव्यः । तद्यथा– "मासानन्यान् गमय चतुरो लोचने मीलयित्वा–"इति वक्ष्यमाण-वचनेन चतुर्णां मासानां गमयितव्यत्वं प्रतीयते । ते चाषाढात् प्रभृति चत्वारो मासाः "आषाढस्य प्रथम-दिवस" इति वक्ष्यमाणत्वात्–" इति द्वितीयं पद्यम्,

"मासानन्यान् गमय चतुर इति आषाढमासादिकानाश्वयुजमासान्तानित्यर्थः "इति च "शापान्तो म–"इति पद्यं विवृणोति । वल्लभदेवः "प्रथम-दिवस–"पदस्य स्थाने" प्रशमदिवस–"पदस्य मूलत्वं कल्पयति, विवृणोति च "आषाढे–"ति पद्यम्—

"ततोसौ यक्षः कतिचित् सप्ताष्टान् मासान् नीत्वा आषाढस्य प्रशमदिवसे समाप्तिदिने ग्रीष्मावसाने ... । केचित्तु शकार-थकारयोर्लिपिसारूप्यमोहात् प्रथम इत्यूचुः, कथं कथमपि चैतमेवार्थं प्रतिपन्नाः । वर्षाकालस्य प्रस्तुतत्वात् आदिदिनमित्येतत्त्वतीव विरुद्धम् । –"इत्येवम्; "शापान्त–"पद्यं च—

"कार्तिक-शुक्ल-द्वादश्यां ... मम शापान्तो भविष्यति, तदैव वर्षस्य परिपूर्णत्वात्, अतश्चाद्यारभ्य मासचतुष्टयं लोचने मीलयित्वा ... गमये"-त्येवम् ।

चारित्रवर्धनः शापावधिसंगतये वल्लभस्यैव क्रममनुसरति किन्तु पाठमसौ दक्षिणावर्तवदेव "प्रथमदिवस–" इत्येवादत्ते । तत्र स्वचातुर्यं प्रकटयन्नसौ भणति–

"आषाढस्य प्रथमः प्रवरश्चासौ दिवसश्च, यस्मिन् वासरे मासः पूर्तिमियर्त्ति । सा आषाढ्यमावस्येति भावः । तस्य प्रवरत्वं च कृष्यादिकार्याणां तस्मिन् प्रारभ्यमाणत्वात्–"इति ।

पक्षान्तरमप्युपस्थापयन्नसौ वक्ति—

"मासस्यावसानो दिवसः स एव प्रथमदिवसः । प्रथमः प्रख्यातो विष्णु-दिवसः प्रथमैकादशीत्यर्थः । "इति ।

मल्लिनाथोपि "प्रथम–"पदघटितमेव पाठं मूलत्वेनांगीकृत्य पद्यमिदम्—

"कतिचित् मासान् अष्टौ मासान् इत्यर्थः "शेषान् मासान् गमय चतुर-"इति वक्ष्यमाणत्वात्, नीत्वा, आषाढ्यस्मिन् पौर्णमासीत्याषाढो मासः, तस्य प्रथमदिवसे आश्लिष्टसानुमाक्रान्तकूटं ... मेघ ददर्श । –एवम्,

"शापान्त–"पद्यं च पूर्वोक्तेन क्रमेण व्याख्याति । भरतमल्लिकोपि सुबोधायां प्रथमं पद्यम्—

"आषाढस्य प्रथमदिवस आद्ये दिने मेघं ददर्श । ... । यद्यपि कतिचिन्मासानिति संख्या नाभिहिता तथापि अष्टौ मासा बोद्धव्याः "शेषान् मासान् गमय चतुर– "इति वक्ष्यमाणत्वात् । "एवम्,

"शापान्त–"पद्यं च पूर्वोक्तेन क्रमेण व्याख्याति ।

इत्थं हि प्रथमदिवसपदार्थे विवादोस्ति । कतिचिन्मास-पदार्थे संवादः । तदयमत्र प्रश्नः - 'योयं शापो वर्षमात्रभोग्यः प्रबोधतिथौ च कार्तिके मासि समाप्यः, तस्य प्रारम्भो नियतमेव कार्तिकमासस्य तामेव तिथिं मर्यादीकृत्याभिव्याप्य वा मान्यः । ततश्च शापारम्भतिथिः प्रबोधनतिथित्वेन गृहीतासु पूर्वोक्तासु ११, १२, १५ एव वा कापि तिथिः । सर्वथा यदि "अष्टौ मासा व्यतीताः, केवलाश्चत्वार एव चावशिष्टाः "तर्हि मेघदर्शनदिनत्वेन तानि दिनानि ग्रहीतुं कथं शक्यानि यानि प्रागुक्तमतैः टीकाकृद्भिर्गृहीतानि इति । को नामात्र दोष इति चेद्, गणनाविसंवादः । कथमिति चेद् एवम् । यदि नाम शापः प्रबोधन्यां मोक्ष्यते तर्हि मेघदर्शनतिथिर्नियतमेवैका हरिशयनतिथिरेव भवति प्रबोधनीपर्यवसायिनश्चातुर्मास्यस्य तत एव प्रारम्भसंभवात् । कल्पा-

न्तरे च तस्यान्यथात्वप्रसंगात् । तथाहि यदि मासारम्भः शुक्लपक्षान्मन्यते चाषाढस्य प्रथमं दिनं शुक्लपक्षप्रतिपत्तितिथिरूपं तर्हि चातुर्मास्यं कार्तिककृष्णपक्षं यावदेव पूर्यते, ततश्च कार्तिकशुक्लपक्षस्य प्रतिपद आरम्य प्रबोधनदिनं यावद् यावन्ति दिनानि तानि तत्राधिकानि भवन्ति । ततश्च क्षीयते शापस्य वर्षभोग्यत्वम् । यदि च चारित्रवर्धनक्रमेण प्रथमदिनपदेनाषाढ्यमावास्या गृह्येत तर्हि समापतति पुराणवचनविरोधः, आषाढशुक्लपक्षस्यैव तत्र हरिशयनतिथिघटिततया प्रतिपादितत्वात्, अमावस्यायाश्च कृष्णपक्षघटकत्वात् । यदि च मासारम्भः कृष्णपक्षान्मन्येत मन्येत च प्रथमपदस्य प्रतिपत्परत्वम् तदा कार्तिककृष्णपक्षतः प्रबोधनतिथिं यावद यः कश्चन समयः स शापावधौ वर्धते । खण्ड्यते वा व्यतीतानां मासानामष्टत्वम् । नास्ति च प्रतिपदो हरिशयनतिथित्वम् । प्रशमदिवसपाठो वल्लभनीत्या यदि ग्रीष्मावसानदिनस्य प्रशमदिनत्वं मन्यते तर्हि मासस्य शुक्लादित्वपक्षे ग्रीष्मावसानतिथिराषाढ्यमावास्या । तत्र च दोषो दर्शित एव । कृष्णादित्वपक्षे पूर्णिमा चेत् सा नभोमासप्रत्यासत्तिविरुद्धा । यो हि नभोमासे दयिताजीवितसंशयी स ततः पूर्वमेव चेतयेत प्रवृत्तिहरणाय, न तु आगत एव तस्मिन् । पूर्णिमा च नभोमाससन्धितिथिः । यदि च कार्तिकशुक्लैकादशी प्रबोधतिथिस्तर्हि तत्र चातुर्मास्ये न्यूनत्वमपि प्रसज्यते । तदिदं सर्वमपि दोषजातं परिजिहीर्षन्तष्टीकाकारा अत्र विविधं विकल्पन्ते । तत्र मल्लिनाथः—

'केचिद्' आषाढस्य प्रथमदिवस' इत्यत्र 'प्रत्यासन्ने नभसी' ति वक्ष्यमाणनभोमासस्य प्रत्यासत्त्यर्थं "प्रथमदिवस"-इति पाठं कल्पयन्ति, तदसंगतम्, प्रथमातिरेके कारणाभावात् । नभोमासस्य प्रत्यासत्त्यर्थमित्युक्तमिति चेन्न, प्रत्यासत्तिमात्रस्य मासप्रत्यासत्त्यैव प्रथमदिवसस्याप्युपपत्तेः, अत्यन्तप्रत्यासत्तेरुपयोगाभावेनाविवक्षितत्वात् । विवक्षितत्वे वा स्वपक्षेऽपि प्रथमदिवसातिक्रमेण मेघदर्शनकल्पनायां प्रमाणाभावेन तदसंभवात् । प्रत्युतास्मत्पक्ष एव कुशलसन्देशस्य भाव्यनर्थप्रतीकारार्थस्य पुरत एवानुमानमुक्तं भवतीत्युपयोगसिद्धिः। ननून्मत्तस्य नायं विवेक इति चेन्न, उन्मत्तस्य नानर्थस्य प्रतीकारार्थं प्रवृत्तिरिति सन्देश एव माभूत् । तथा च काव्यारम्भ एवाप्रसिद्धः । ... । कथं तर्हि ... शापस्य मासचतुष्टयाशिष्टस्योक्तिः, दशदिवसाधिक्यादिति चेत् स्वपक्षेऽपि सा कथम्, विंशतिदिवसैर्न्यूनत्वात् । तस्माद् **'ईषद् वैषम्यमविवक्षितम्'** । इति

वल्लभदेवस्य 'प्रशमदिवस'—पाठं कल्पनाप्रसूतमिति प्रदर्श्य तत्र विंशतेर्दिवसानां न्यूनत्वरूपं यद वैषम्यं तत्र गौरवम्, स्वपक्षे च दशदिवसानां वृद्धिरूपं यद्

वैषम्यं तत्र लाघवं वीक्षमाणः स्वपक्षवरीयस्त्वमात्रेण तुष्यति। वैषम्यं सर्वथैवोन्मूलयितुं न प्रभवति। एतन्मते विंशतिदिवसानां न्यूनतापि कथमिति विज्ञेयम्, मासस्य शुक्लादित्वे आषाढस्य कृष्णादित्वपक्षे श्रावणत्वेन गणनीयत्वं कृष्णपक्षं यावद् व्याप्तेः। प्रबोधन्याश्च कार्तिकशुक्लपक्ष एव जायमानत्वात् पूर्ण आषाढः, पूर्णः श्रावणः, पूर्णो भाद्रः, पूर्ण आश्विनः, प्रबोधनीं यावत् कतिचिद् दिनानि च कार्तिक इत्येवमत्र दिनानां वृद्धेरेव संभवात्। न च मासस्य कृष्णादित्वपक्षेपि तावतां दिवसानां न्यूनता संभवति, तदा कार्तिके प्रबोधन्याः प्राक् कृष्णपक्षस्य परिगणनामादाय चतुःपंचानामेव दिवसानां न्यूनतायाः सभवात्। तेन वल्लभपक्ष एव लाघवं स्पृशति। भरतमल्लिकस्तस्य सुबोधायां वैषम्यमिदं शमयितुं विचित्रं विकल्पयते। स कथयति—

१-मेघो वार्त्तां श्रावणे श्रावयिष्यति, तदपेक्षया चत्वारो मासाः।

२-मेघं दृष्ट्वा कष्टसृष्ट्या आषाढं गमयित्वा श्रावणे वार्ता प्रस्थापिता, अतस्तदपेक्षया चत्वारो मासाः, वक्ष्यते हि "तस्य स्थित्वा कथमपी-" त्यादि, "प्रत्यासन्ने नभसी-"त्यादि च।

३-किं वा कामेनानवस्थितचित्तत्वात् सङ्ख्यामविभाव्यैव तथोक्तम्।"इति।

एतेषु यस्तृतीयः कल्पः स मल्लिनाथेनैव "ननून्मत्तस्य नायं विवेक" इत्युपस्थाप्य "उन्मत्तस्य नानर्थप्रतीकारेषु प्रवृत्ति-" रित्यादिना तर्केण निष्प्राणितः। अवशिष्टयोराद्ये मेघस्यालकामार्गलंघने त्रिंशत् पञ्चदश वा दिनान्यपेक्ष्येरन्। तच्च यक्षस्यानभिप्रेतम्। स हि विलम्बासहिष्णुर्मेघं संज्ञापयते-" मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः" इति। नास्ति च कल्पनामात्रमृते किमपि प्रमाणं यन्मेघो वार्त्तां श्रावण एव श्रावयिष्यतीति। किमत्र विनिगमकं यदसौ आषाढ एव वार्त्तां न श्रावयिष्यति। इद चात्रापरं प्रतिकूलं यदत्र मासचतुष्टयावशेषवार्ता विराध्यते।अलकाप्राप्तिदिनस्य संदेशप्रेषणदिन एव यक्षेण निश्चेतुमशक्यत्वात्। नास्त्यत्र किमपि प्रमाणं येनासौ प्रागेव निश्चेतुं प्रभवेद् यन्मेघोऽलकां तदानीं प्राप्स्यति। यच्चात्र द्वितीये कल्पे मेघदर्शन-संदेशप्रेषणयोरेकमासस्य व्यवधिः कल्पितः सोऽपि निष्प्रमाण एव। समनन्तर-पद्य-घटकीभूतयोश्चिरध्यान-नभोमास-प्रत्यासत्त्योस्तादात्विकत्वस्यापि ग्रहीतुं शक्यत्वात्। नास्ति चात्र महाकवेर्वचःसंप्रसादः। यदि संपूर्णमाषाढमासं यावद् यक्षस्य मेघदर्शनं कवेरभिप्रेतं तर्हि पौनःपुन्यमप्यसौ दर्शयेदेव, कथयेच्चैवमिव किंचित्—

तस्मिन्नद्रौ ... स ... आषाढस्य ... मेघं ... ददर्श ॥

दर्शं दर्शं कतिपयदिनान्येष मेघान् प्रियायाः
प्रत्यासन्ने नभसि नितरां जीविते संदिहानः।
एकेनैभ्यः स्वकुशलमयीं हारयिष्यन् प्रवृत्तिं
संपाद्यार्घ्यं कुटजकुसुमैः स्वागतं व्याजहार ॥

किं च "मेघं ... ददर्श, कौतुकाधानहेतोस्तस्य पुरः कथमपि स्थित्वा राजराजानुचरश्चिरं दध्याविति वचोन्यासे को नु सहृदयो मेघदर्शनानन्तरं प्रतिपाद्यमाने चिरध्याने मासावधिकत्वं प्रतिपद्येत । चिरध्यानस्य तत्र द्वित्रि-मुहूर्त्तमात्रावधिकत्वमेव हृदये सजति। या चात्र नभोमासदर्शनस्य वार्त्ता सा वस्तुतश्चिरध्यानस्य परिणामः। चिरध्याने तेन नभोमासप्रत्यासत्तिनिष्ठा कातर-कामिनीजन-जीवित-व्यापत्तिजनकतैव स्वदशाहेतुकानुमिता । तत एव च विच-लितोयमचेतनादपि मेघात् प्रवृत्तिं प्रेषयितुं तत्वरे। तदेवं नास्ति मल्लिको-पस्थापितेषु समाधानसूत्रेषु क्षेमसौरभम् ।

अयमेव च कांश्चन पूर्वपक्षानपि विमतिपूर्वकं प्रस्तवीति। यथा—

१- केचित् तु चान्द्रमासगणनया समादधते ।

२- केचित् तु आषाढस्य प्रथमदिवसे प्रधानदिवसे पूर्णिमायामित्यर्थः, यतः आषाढी पूर्णिमा यस्मिन् मासे स आषाढ इति पूर्णिमयैवाषाढसंज्ञो-त्पत्तेः, पूर्णिमाया अत्र प्राधान्यमिति वक्ष्यते। तन्न कृत्यं कष्टकल्पि-तत्वात् ।

३- केचित् तु प्रथमं ख्यातं मेघम् अ- दिवसे विष्णुदिवसे शुक्लैकादश्याम्, किंवा अदिवसे अविद्यमानदिवसे मासावसाने, किंवा अदिवसे रात्राविति व्याचक्षते । एतदपि न कृत्यम्, अनुपादेयत्वेन कुकवित्वापत्तेः ।

४- "प्रशम" इति पठित्वा अन्तदिवस इति केचिद् व्याचक्षते, स पाठः क्वचिदपि न दृश्यते ।

अत्र योयं प्रथमो विकल्पस्तत्र टीकाकृता काचनापि विप्रतिपत्तिर्न दर्शिता। धर्मशास्त्रव्यवस्थासु चान्द्रमास एव गृह्यते तत्तत्पर्वसु तथापि तत्र शापावधा-वागतस्थितिविसंवादो न शाम्यति । चान्द्रे हि मासे तिथीनां वृद्धि-क्षयौ जायेते । किन्तु चतुर्षु मासेषु ३०, १५, १० दिनानि वा वर्धितानि, क्षीणानि वा कल्पितुं न शक्यन्ते । किं चासति स्वस्थे क्वचन समाधा-नान्तरे समाधिपदवीयमाद्रियेतापि । अस्ति चात्र तादृशं समाधानमिति किमि-त्येषा विडम्बना । किमिदमिति चेद्, वक्ष्यते न चिरात् । भरतमल्लिको-पस्थापितानि यानि चान्यानि पूर्वपक्षमतानि तानि हि दर्शितदूषणान्येव ।

आधुनिकेषु श्रीमान् रंजनसूरिदेवो नवीनमेवैकं पन्थानमुन्मीलयति । स हि प्रथमदिवसपदेन शुक्लपक्षषष्ठीं गृह्णाति । एतदर्थं स मुहूर्त्तचिन्तामणेष्टीकायाः पीयूषधारायाः—

"आ पञ्चम्यास्तु तिथयः कृष्णवत् परिकीर्तिताः-"

इति वचनं प्रमाणीकरोति । प्रबोधतिथिमसौ प्रसिद्ध्यनुसारं पूर्वोक्तामेकादशीमेव स्वीकरोति । ततश्च पचानां दिनाना वृद्धिमसौ चान्द्रमासचतुष्टये तिथिवृद्धिकल्पनया संगमयति । अत्र हि द्वयं विमर्शविषयः १-शुक्लपक्षस्य प्रथमानां पंचानां तिथीनां कृष्णपक्षतिथितुल्यता २-तिथिवृद्धिप्रमापकं च । किमत्र कृष्णतुल्यत्वेन शुक्लतिथीनां शुक्लत्वमपचीयते, कृष्णत्वमेव च तत्राधीयते । यद्येवं तर्हि पक्षोभयस्य षष्ठयां प्रतिपत्त्वं पूर्णिमायां चैकादशीत्वं व्यपदिश्येत । व्यपदिश्येत च पंचम्या एव पूर्णिमात्वममावास्यात्वं च । न चासौ व्यपदेशो मौहूर्तिकैरपि क्वचन कृतः, सूर्यचन्द्रग्रहणतिथ्योस्तेषु सर्वत्र अमा-पूर्णिमात्वेनैव व्यपदिश्यमानत्वात् । न हि कश्चनापि ज्योतिर्विद् शुक्ल-कृष्ण-पंचम्योर्ग्रहणतिथित्वमुदीरयति, उदीरयति वा ग्रहणतिथेरेकादशीत्वम् । वस्तुतोत्र तमोबहलतासाम्यप्रतिपिपादयिषयैवं व्यपदेशः । शुक्लपक्षस्य प्रारम्भिकाः पंच तिथयस्तथैवान्धकारभूयिष्ठा भवन्ति यथा कृष्णपक्षस्यान्तिमाः पंच । इयानेव तत्र भेदो यदेकत्र रात्रेरारम्भे चन्द्रमा उदयते, अपरत्र चान्ते । एतेन हि तमोबहलतामात्रेण यदि शुक्लपक्षस्य कृष्णत्वमायाति तर्हि कृष्णपक्षस्यापि शुक्लत्वे तथैव न्यायलभ्यम् । ततश्च प्रबोधनपर्वणोपि कतिपयदिनाभ्यधिकत्वमापतति । तेन च चान्द्रमासगणनया समाहितो दिनवृद्धिप्रसंगो वेतालवत् तत्रैवावलम्बते । न हि चतुर्मात्रेषु मासेषु दश दिनानि वर्धितुं शक्नुयुः । अपि चात्र मासा गण्यन्ते । तत्र तिथीनां क्षयो वा भवतु वृद्धिर्वा, मासपरिमाणं न क्षीयते । ततश्च वृद्धिक्षययोः संभवस्तेष्वेव दिनेषु संभवति यानि हरिशयनीतः श्रावणमासारम्भं यावदापतन्ति यानि च कार्तिकारम्भतः प्रबोधिनीं यावत् । सोऽयं मासमध्यावधिकोवधिः । अत्र अधिकादधिकं त्रिंशद्दिनप्रमाणत्वं कल्पितुं शक्यम् । न च त्रिंशति दिनेषु दश पंचदश वा दिनानि क्षयं वृद्धिं वाश्नुवीरन् । एवं हि सूरिवरेणानेन तिथिवृद्धिः स्वमनीषिकयैवागूर्यते । नास्ति तत्र किमपि प्रमापकम् । तदित्थं "प्रथम-प्रशमयोः" मध्ये कस्यचनापि पाठस्याश्रये नास्ति वैषम्योपशमः ।

वयमत्र एवमिव किंचिच्चिन्तयामः यदिदमवधिवैषम्यं तत्र मूलं केवलमेकमेव । तच्च "आषाढ-" पदानन्तरीयायाः षष्ठ्या अर्थस्य "प्रथमदिवस-"

पदार्थेनान्वयः । सर्वैरपि प्रागुल्लिखितैष्टीकाकारैस्तथैव तस्यान्वयः क्रियते । तत्र च मूलमनययोरव्यवधिना समभिव्याहारः तथा हि शाब्दधीरवरुध्यते । धीरियं ततोपसर्तुं न क्षमते । यदि चात्र "आषाढस्य मेघं प्रथमदिवस आश्लिष्टसानुं ददर्श-"ति पदार्थयोजना क्रियेत तर्हि सर्वोप्ययमुपशममियादुपप्लवप्रसंगः । औचित्यसुभगस्य पूर्वादधिकस्यार्थस्य लाभश्चात्र गुणः । कोयमिति चेदयम्—"यक्षः प्रथमदिवस आश्लिष्टसानुमाषाढस्य मेघं ददर्श । सान्वाश्लेषस्य येयं मुद्रा सा तेन तस्मिन् वर्षारम्भमासे प्रथमप्रथममेव दृष्टा । इयं हि मन्मथोन्माथमुत्थापयितुं तथा समर्था न यथा ततः पूर्वं तत्रैव मासे दृष्टा मेघस्य काश्चनान्या मुद्राः । अस्यां हि स्त्रीपुंसयोराश्लेषो व्यज्यते । सान्द्रतया विरहिचेतांस्यन्यथयितुं प्रागेवालंभूष्णुराषाढमेघः यदि परिरम्भमुद्रामादाय पुरस्तादाजिहीते ततो युक्त एव जीवितसंशयो विरहितपस्विनाम् । ततश्च युक्ता एव चेतनेष्विवाचेतनेष्वपि प्रणयकृपणता प्रवृत्तिप्रेषणाय तेषाम्, तत्र च कालक्षेपस्तेषामत्यर्थमेवासह्यः । किं पुनस्तदा यदा मेघसान्द्रतायामात्यन्तिकीं निबिडतामुपजनयन् अत एव च नितान्तमेवोद्वेजयन् नभोमासः प्रत्यासीदेत् । ततश्चासौ चिरं ध्यात्वापि कल्पान्तरमवीक्षमाणो मेघेनैव स्वकुशलप्रवृत्तिं प्रेषयितुमियेष ।" अस्यां हि पदार्थयोजनायां प्रबोधतिथितया गृहीतां तिथिं यावन्मासचतुष्टयावधिसंवादायाषाढशुक्लपक्षस्य काचनापि तादृशी तिथिर्ग्रहीतुं शक्यते । तस्यामेव हि तिथौ यक्षेण प्रथमं वारमाश्लेषमुद्रायामाषाढमेघो दृष्ट इति च मन्तुं शक्यते । बलं चास्मिन् पक्षे पूर्वोक्तचतुर्मासावधिसंवादान्यथानुपपत्तिः । अस्ति चावधिसंवादानुपपत्तेरन्वयेनैतेनोपशमः । ननुपदार्थयोजनेयमस्वाभाविकी, दिवसमासयोरन्वयस्य प्रसिद्धतया मासवाचकाषाढपदानन्तरीयविभक्तिवाच्यस्य समभिव्याहृतदिवसपदवाच्येनैवान्वयस्य प्रथमप्रतीतत्वात् । अन्वयान्तरे चास्थानस्थपदत्वाभिषंगप्रसंगात्, ततो युक्त एव टीकाकृतामेवान्वयक्रमः । "इति चेत्" ततो मृगेन्द्रस्य मृगेन्द्रगामी वधाय वध्यस्येत्यादौ किमुच्येत । किमुच्ये च—

"इदमनन्यपरायणमन्यथा हृदयसन्निहिते हृदयं मम ।
यदि समर्थयसे मदिरेक्षणे मदनबाणहतोपि हतः पुनः ।।"

इत्येवमादिषु अन्वयवक्रताभ्राजिष्णुषु पद्यरत्नेषु । एतेषु हि महाकविवाचोभीष्टयोजनाप्रातीपिकत्वेपि नास्ति तादृशमस्थानस्थत्वम् । इहापि च न ह्येव स्यादीदृशी धीः यदि निपुणतरमनुध्यायेत । तादृशान्वयानुकूल्यभाजि हि मतौ "शापान्तो मे" इति संदर्भान्तिरावहितस्य प्रत्युतान्वयान्तरमेव न प्ररोहेत् । यदि च "आषाढीयं प्रथमदिवसे मेघमाश्लिष्टसानुम्" एवमभ्यस्येत तर्हि "आषाढस्य प्रथमे" त्यादावपि

मासचतुष्टयावधिविसवादिनी पदार्थान्वयधीर्नोदियादेव । एवं च कृते परिरम्भ-मुद्रायां मेघदर्शनस्य प्रथमा तिथिः प्रबोधतिथितया गृहीतायाः कुतश्चनापि तिथेर्मास-चतुष्टयारम्भतिथिरूपा काचनापि मर्यादाभिव्याप्तिपक्षद्वयान्यतर-रूपा आषाढ-मासस्य शुक्लपक्षीयासु चरमतमासु पंचसु तिथिषु एका ग्रहीतुं शक्यते । तत्रापि च पुराणवचनप्राकाम्यादेकादशी-द्वादशी-पूर्णिमेत्यतदन्यतमत्रैवावधानं दीयेत । आसा-मप्येकादशी-द्वादश्योः सन्धिरेव वस्तुतः संरम्भास्पदम् । प्रबोधस्यापि तस्मिन्नेव सन्धौ मान्यत्वात् । अस्ति हि निर्णयसिन्धु-शब्दकल्पद्रुम-व्रतराजादिषु प्रमाणग्रन्थेषु तत्रैव प्रमाणबाहुल्यम् । तेषु हि—

"एकादश्यां तु शुक्लायां कार्तिके मासि केशवम् ।
प्रसुप्तं बोधयेद् रात्रौ भक्तिश्रद्धासमन्वितः ॥" इति ब्रह्मपुराणस्य,
"रेवत्यन्तो यदा रात्रौ द्वादश्या च समन्वितः ।
तदा विबुध्यते विष्णुर्दिनान्ते प्राप्य रेवतीम् ॥" इति स्कन्दपुराणस्य,
"महातूर्यरवै रात्रौ भ्रामयेत् स्यन्दने स्थितम् ।
उत्थितं देवदेवेशं नगरे पार्थिवः स्वयम् ॥" इति भविष्योत्तरपुराणस्य

एवंप्रभृतीन्यन्यानि चानेकानि वचनान्युद्धृत्य तिथ्योरनयोः सन्धिकाल एव प्रबोधाय स्थिरीकृतः । भीष्मपंचकव्रतम्, तुलसी-विवाहः, चातुर्मास्यव्रतपूर्तिश्चेति बहुविधा-न्यन्यान्यपि पुण्यकर्माणि प्रायेण कार्तिकशुक्लैकादश्या आरम्भतो द्वादशीप्रारम्भं यावन्निर्वर्त्यन्ते । हरिशयनमपि आषाढशुक्लपक्षीययोरनयोरेव तिथ्योः सन्धिसमये विधीयते । तथा हि शब्दकल्पद्रुमकारो वामनपुराणस्य—

"एकादश्यां जगत्स्वामिशयनं परिकल्पयेत् ।
शेषाहिभोगपर्यङ्कं कृत्वा संपूज्य केशवम् ॥"

इत्यनेन वचनेनैकादश्याः शयनतिथित्वमुदीर्य निम्नलिखितेन भविष्यपुराणवचनेन द्वादशीप्रारम्भे शयनविधिं व्यवस्थापयते—

"निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम् ।
अन्यत्र पादयोगे तु द्वादश्यामेव कारयेत् ॥" इति ।

अस्ति च शयन-बोधनयोर्मेघदर्शनस्यापि पुराणेषु संग्रहः । शयनतिथौ हि मेघदर्शन-मेव कारणमुच्यते । एतच्च—

"पश्यन्तु मेघानञ्जि मेघश्यामं हृष्युपागतं सिच्यमानं महीमिमाम् ।
निद्रां भगवान् गृह्णातु लोकनाथ वर्षास्विमं पश्यतु मेघवृन्दम् ॥
ज्ञात्वैव पश्यैव च लोकनाथ मासांश्चत्वारि वैकुण्ठस्य च पश्य नाथ ।

इत्यनेन वराहपुराणस्य शब्दकल्पद्रुमोद्धृतेन वचनेन स्पष्टम् । जागरणतिथावपि

मेघापगमः स्मर्यते । यथा चैतत् तदधोदत्तेन ब्रह्मपुराणवचनेन स्पष्टम्—

"मेघा गता निर्मलपूर्णचन्द्रः शारद्यपुष्पाणि च लोकनाथ ।
अहं ददानीति च पुण्यहेतोर्जागृष्व जागृष्व च लोकनाथ ॥"

कुटजादिपुष्पाणामपि शयनतिथौ पुराणेषूल्लेखो लभ्यते । तथा हि शयनात् पूर्वं यैः पुष्पैर्भगवतः पूजनं क्रियते तेषु कुटजपुष्पमेव वराहपुराणे प्रथममुल्लिख्यते—

"कदम्ब-कुटजश्चैव धवकोर्जुनकस्तथा ।
एभिरभ्यर्च्चनं कुर्याद् विधिदृष्टेन कर्मणा ॥ इति

तदित्थं कालिदासः पुराणवचनान्यनुसरन्नेव यक्षमुल्लापयते । तेन हि तस्य कार्तिक-शुक्लैकादशीद्वादशीसन्धिसमय एव प्रबोधपर्वतयाभिमतः । अतएव च यक्षो रात्रि-मेव शापावसानोत्तरकालिकावसरत्वेनोद्धरति—

"शापान्तो मे ...... लोचने मीलयित्वा ।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥" इति ।

इदमन्यत्र वक्तुं शक्यते यत् पुराणवचनेषु परस्परं विरोधात् कालिदासः शयन-प्रबोधयोः कृते कामपि तिथिं नोल्लिलेख सामान्येनैव वचनोपन्यासेन शापावधिं निर्दिदेश । एतत्तु सर्वथा निश्चितं यद् यक्षो मेघं हरिशयनदिने ददर्श । तत्रैव च दयितायै स्वकुशलप्रवृत्तिं प्रेषयितुमसौ मेघं याचितवान् । स एव च दिवस आषाढस्य प्रवरत्वात् प्रथमो दिवसः । यदि चात्र "जानामि त्वां प्रकृतिपुरुषमि" त्यत्र प्रकृति-पदमिवानिहतार्थं मत्वा प्रथमपदमपि प्रवरत्वपरमादीयेत ततश्चारित्रवर्धनरीत्या तादृशान्वयवक्रताक्लेशोपि परिहीयेत ।

इत्थमत्र शापारम्भः कार्तिकशुक्लैकादशी-द्वादशी-सन्धि-कालिको मान्यः । तत्र हि प्रबोधनोत्सवसमये यक्षेण कश्चन प्रमादः कृतः स्याद् येनापराधितो यक्षे-श्वरस्तं शापेन यन्त्रितवान् । सोपि च प्रमादः प्रबोधसमयेपि दयितैकरतिरूपः स्यात् । ततश्च शापावसानमपि तथाविधसन्धि-कालिकमेव मान्यम् । हरिप्रबोधनं यावच्चातुर्मास्यस्यावशेषोक्त्या च मेघदर्शनं हरिशयनीतिथौ मान्यम् । चातुर्मास्या-वधिनिर्वाहाय च संदेशप्रेषणमपि च मेघदर्शनानन्तरमेव तस्मिन्नेव तिथौ मान्यम् । सोयं पौराणिकस्य कवेः कालिदासस्य यक्षशापावधिः । एतेनैतदपि सुवचं यत् पौलस्त्यवधात् पवनतनयदूत्येन गृहीतदूत्याभिप्रायः सुकविः पुराणेभ्यो भगवत्प्रबोध-शयनाभ्यां यक्ष-शापावधिं नियमयामास ।

# कर्मकर्तृमीमांसा

विश्वनाथ मिश्रः

अथेदानीं मीमांस्यते कर्मकर्तृप्रक्रिया। तत्र कर्तृत्वकर्मत्वादयः कारकत्वव्याप्यसंज्ञाः। कारकत्वञ्च क्रियानिष्ठजन्यतानिरूपितजनकतावत्त्वम्। भवति हि प्रत्येकं कारकाणां स्वस्वावान्तरक्रियाद्वारा प्रधानक्रियानिष्पादकत्वम्। "वह्निना स्थाल्यां तण्डुलं पचति" इत्यादौ वह्नेर्व्यापारो ज्वलनम्, स्थाल्या व्यापारस्तण्डुलस्य धारणम्, तण्डुलनिष्ठो व्यापारः स्थाल्यामुच्छलनमित्येवंरूपेण प्रत्येकं व्यापारोऽनुभवसिद्धो वर्तते एव। एवञ्च सर्वैः कारकैः स्वकीयावान्तरव्यापारद्वारा एका मुख्या क्रिया निष्पाद्यते। तदुक्तम्—

गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।
बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते॥

न च "घटं करोति" इत्यादौ तदानीं घटाभावेन कथं तस्य क्रियाजनकत्वमिति वाच्यम्? वैयाकरणनये बौद्धपदार्थस्यैव पदवाच्यत्वात् शाब्दबोधविषयत्वेन बौद्धार्थविषयकबोधतात्पर्येणैव पदानामुच्चारणात्। एवञ्च घटादिपदानां क्रियाजनककर्मादिरूपार्थविषयकबोधतात्पर्येणोच्चरितत्वञ्च - "कर्मणि द्वितीया" इत्यादिशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वेन ततः परं द्वितीयासाधनात्। एवं रीत्या समेषां कारकाणां क्रियाजनकत्वं निर्बाधमस्ति।

क्रियावाचकश्च धातुर्भवति। धातोश्च फलं व्यापारश्चेत्यर्थद्वयम्। "फलव्यापारयोः धातुरित्युक्तेः। तत्र फलाश्रयः कर्म व्यापाराश्रयश्च कर्तेति स्थितिः। स चायं कर्ता क्रियानिष्पत्तौ कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थव्यापाराश्रयो भवति। तत्र यदा सौकर्यातिशयं प्रकटयितुं कर्तृव्यापारो न विवक्ष्यते, किन्तु कर्मादिगतव्यापार एव प्रधानत्वेन विवक्ष्यते तदा कर्मादिकारकान्तराण्यपि प्राधान्यमुपगतानि भवन्ति कर्तृपदव्यवहार्याणि, स्वव्यापारे स्वतन्त्रत्वात्, स्वतन्त्रस्य च कर्तृत्वात्।"

तत्र करणाधिकरणनिष्ठव्यापारस्य प्रधानत्वेन विवक्षया जातेऽपि तयोः कर्तृत्वे धातोः सकर्मकत्वं न व्याहन्यते। यतो हि कर्तृव्यापारप्रयोज्य - विक्लि-

त्यादिफलानां तत्र वर्तमानतया तदाश्रयाणां कर्मत्वस्य सुलभत्वात् । यथा "देवदत्तः काष्ठैः ओदनं पचतीत्यादौ काष्ठनिष्ठव्यापारस्य प्रधानधात्वर्थत्वेन विवक्षायां क्रियमाणायामपि विक्लितिनिष्ठाधेयतानिरूपिताधिकरणतायाः ओदने सत्त्वेन फलव्यधिकरणव्यापारवाचकत्वात् धातोः सकर्मकत्वम् । अतोऽत्र सकर्मकात् धातोः कर्मणि कर्तरि च प्रत्ययः । कर्तरि यथा– देवदत्तेन किम् ? काष्ठानि स्वयमेव ओदनं पचन्ति । कर्मणि यथा– काष्ठैः ओदनः पच्यते ! एवमधिकरणनिष्ठव्यापारस्य प्रधानत्वेन विवक्षायां "स्थाली ओदनं पचति" "स्थाल्या ओदनः पच्यते" इति कर्तृकर्मणोः प्रत्ययः ।

यदा तु कर्मनिष्ठव्यापारस्य प्रधानधात्वर्थत्वेन विवक्षा क्रियते तदा कर्मनिष्ठं फलमेव व्यापारस्थानापन्नं भवति । अतस्तत्र फलान्तराभावेन न कस्यापि कर्मत्वं, किन्तु व्यापाराश्रयत्वादोदनस्य कर्तृत्वं जायते । एवञ्च तत्र कर्मणोऽभावात् धातोरकर्मकत्वम् । अथवा तत्र विक्लितिरूपफलाश्रयस्तथा तद्रूपव्यापाराश्रयश्च एक ओदन एवेति फलसमानाधिकरणव्यापारवाचकत्वात् धातोरकर्मकत्वम् । इयं हि स्थितिः एककर्मकाणां धातूनां वर्तते । तत्र च पूर्वमेककर्मकेभ्यः सम्प्रति च तस्य कर्मणः कर्तृत्वेन विवक्षातः सञ्जाताकर्मकेभ्यो धातुभ्यो भावे कर्तरि च लकारो जायते । तत्र भावे यथा– पच्यते ओदनेन स्वयमेव । कर्तरि यथा– पच्यते ओदनः स्वयमेव । अत्रौदनस्य कर्मत्वे तत्र या विक्लितिक्रिया आसीत् सैवेदानीं तस्य कर्तृत्वेऽपि तत्र वर्तत इति कर्मस्थक्रियया तुल्यक्रियत्वेन कर्तुः कर्मवद्भावेन यद्यपि यगात्मनेपदे भवतस्तथापि लादेशेन तिङा कर्तुरभिहितत्वेन कर्तरि प्रथमैव भवति न तु द्वितीयाऽपि कदाचन । न चैवं या कर्मस्था क्रिया सैवेदानीं कर्तृस्था चेत् कथमुभयोः तुल्यत्वं सम्पद्येत ? तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वस्यैव तुल्यपदवाच्यत्वादिति चेत्– ओदनस्य कर्मत्वे तत्समानाधिकरणाविक्लितिः भिन्ना तस्य कर्तृत्वे च तत्समानाधिकरणा विक्लितिः भिन्नेति, उपाधिकृतं भिन्नत्वमादाय भेदघटिततुल्यत्वस्य निर्वाहात् ।

न चैवंभावे लकारेऽपि पच्धातोः कर्मस्थक्रियातुल्यक्रियत्वेन कर्मवद्भावातिदेशे कर्तुस्तिङानभिहितत्वात् तत्र द्वितीया स्यादिति वाच्यम् । लकारवाच्यस्यैव कर्तुः कर्मवद्भावविधानेन प्रकृते लकारेण भावस्योक्ततया कर्तुरभिधानाभावात् । ये तु द्विकर्मका धातवो दुह्याच्प्रभृतयस्तत्रैकस्य कर्मणः कर्तृत्वेन विवक्षायामपि इतरेण कर्मणा धातूनां सकर्मकत्वमेवावतिष्ठते । तदुक्तम्– "कर्मणः कर्तृत्वविवक्षायां प्राक्सकर्मका अपि प्रायेणाकर्मका इति । अर्थात्

द्विकर्मकास्तु "सकर्मकत्वं न जहतीत्याशयः । एतादृशेभ्यः सकर्मकधातुभ्यः कर्मणि कर्तरि च लकारो भवति । परन्त्वत्र भवत्येवं विचिकित्सा यदत्र गौणं प्रधानञ्चेति कर्मद्वयम् । तत्र तावत् कस्य कर्मणः कर्तृत्वेन विवक्षा जायतामिति ? अत्रोच्यते—"गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्" इति वार्तिकानुसारं यस्मिन् कर्मणि प्रत्ययोऽभिप्रेतस्तस्यैव कर्मणः क्रियतां विवक्षा कर्तृत्वेन । अत एव "स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनी" इति श्लोके "मेदिनी स्वयमेव वसूनि प्रदुग्धे" इत्येवंरूपेण गौणकर्मणः कर्तृत्वेन विवक्षायां भारवेरुदाहरणं संगतं भवति कर्तृवाच्ये । कर्मणि तु मेदिन्या वसूनि दुह्यन्ते" इत्युदाहरणम् ।

न चैतस्यां कर्मकर्तृप्रक्रियायां यदा सौकर्यातिशयं द्योतयितुं प्रथमकक्षस्थं कर्तारमपाकृत्य कर्मैव कर्ता क्रियते, तेन च विधिना धातोरकर्मकत्वमपि सम्पद्यते चेत् कथं "युज्यते ब्रह्मचारी योगम्" इत्यत्र "योगः ब्रह्मचारिणं युनक्ति इति प्रथमकक्षस्य कर्तुः योगस्य कर्मत्वम् ? कथञ्च तदादाय धातो. सकर्मकत्वं वा ? कर्मणः कर्तृत्वप्रकरणे केयं कर्तुः कर्मत्वविडम्बना ? एवमेव तपः तापसं तपति-दुःखयति इति प्रथमकक्षा । ततो द्वितीयकक्षायां तपसा किम् ? तापसः स्वयमेव तपस्तप्यते" अत्र प्रथमकक्षस्थस्य कर्तुः तपसः कथं कर्मत्वम् ? कथं वा धातोरत्रापि सकर्मकत्वमिति चेदत्र ब्रूमः —

"योगः ब्रह्मचारिणं युनक्ति" इति प्रथमकक्षायां सम्बन्धानुकूलो व्यापारो हि युजेरर्थः । युनक्तीत्यस्य सम्बध्नाति इत्यर्थः । सम्बन्धश्चात्राश्रयत्वरूपः । अर्थादाश्रयत्वरूपसम्बन्धेन शमदमादिरूपो योगो ब्रह्मचारिणि तिष्ठति । योगनिष्ठाधेयतानिरूपिताधिकरणता ब्रह्मचारिनिष्ठेति भावः । तत्र ब्रह्मचारिणि या आश्रयता सा योगनिष्ठव्यापारजन्येति आश्रयत्वसम्बन्धरूप-फलाश्रयत्वेन ब्रह्मचारिणः कर्मत्वं, व्यापाराश्रयत्वाच्च योगस्य कर्तृत्वं प्रथमकक्षायां सिद्धयति । द्वितीयकक्षायान्तु-न केवलं सम्बन्धानुकूलव्यापारमात्रं धात्वर्थः किन्तु प्रतियोगित्वावच्छिन्नसम्बन्धानुकूलो व्यापारो हि युजेरर्थः । योगब्रह्मचारिणोः यः खलु आधाराधेयभावसम्बन्धः, तत्र योगः प्रतियोगी ब्रह्मचारी तु अनुयोगी । एवञ्च प्रतियोगित्वरूपफलाश्रयत्वात् योगस्य कर्मत्वमत्र सिद्धयति । न च द्वितीयकक्षायामपि युजेः सम्बन्धमात्रमेवार्थः । योगमिति द्वितीया तु प्रतिशब्दाध्याहारेण तद्योगे "अभितः परितः इत्यादिनियमेन सेत्स्यति । एवञ्चात्र धातोरकर्मकत्वात् कर्मस्थक्रियातुल्यक्रियत्वाच्च "कर्मवत्कर्मणातुल्यक्रियः" इत्य-

नेनैव कर्मवद्भावोऽपि सिद्ध एवेति "सृजियुज्यो श्यँस्त्विति" वार्तिकमपि केवलं श्यन्मात्रविधायकमेवास्तामिति वाच्यम् ? उपर्युक्तवार्तिकव्याख्यानावसरे भाष्यकृता "दुहिपच्योरितिवार्तिकात् सकर्मकयोरित्यनुवृत्ति विधाय "सृजियुज्योः सकर्मकयोः कर्ता बहुलं कर्मवद्भवतीति रीत्या व्याख्यातत्वेन तद्विरोधात् उपर्युक्तकथनस्योपेक्ष्यमाणत्वात् ।

"तप्यते तपस्तापसः" इत्यत्र तु" "तपः तापसं तपति" इति प्रथमकक्षा । अत्र तपिरन्तर्भावितण्यर्थः । शरीरसन्तापानुकूलव्यापारानुकूलव्यापारो धात्वर्थः । शरीरसन्तापानुकूलो व्यापारश्च शरीरसन्तापस्वीकाररूप एव । तदाश्रयत्वात् तापसस्य कर्मत्वम् । तापसनिष्ठतादृशस्वीकाररूपफलानुकूलो व्यापारश्च तपोनिष्ठः । तपःपदार्थश्च शरीरसन्ताप एव । तदीयो व्यापारश्च तापसशरीरे स्वस्वरूपेणावस्थानमेव । एवञ्च तापसस्य कर्मत्वे शरीरसन्तापस्वीकरणरूपा क्रिया । ततो "तप्यते तपस्तापसः" इति द्वितीयकक्षायां ण्यर्थस्य त्यागेन कर्मनिष्ठव्यापारस्य प्रधानत्वेन विवक्षया "शरीरसन्तापानुकूलव्यापारः" अर्थात् तदेव स्वीकरणं धात्वर्थः । तदाश्रयत्वात् तापसस्य कर्तृत्वम् । तपसः कर्मत्वन्तु व्यपदेशिभावेन जायते । यथा "स्तोकमोदनं पचतीत्यत्र फलतावच्छेदकतादात्म्यसम्बन्धेन, व्यपदेशिवद्भावेन वा विक्लितिः क्रिया विक्लितौ वर्तते तथैव स्तोकेऽपि वर्तते, स्तोकेन सह विक्लितेरभेदान्वयात् । एवञ्च फलाश्रयत्वेन स्तोकस्य तत्र कर्मत्वं जायते । एवमेव "तप् सन्तापे" इति धातुपाठे सन्तापविशेषस्यानुक्ततया तप्पदेन सन्तापसामान्यस्य ग्रहणम् । तस्मात् औणादिके असुनि निष्पन्नस्य तपः शब्दस्य कोऽर्थः ? इति जिज्ञासायां "स एव सन्तापः" इति भाष्योक्त्या ज्ञानजनकोपवासादौ तपःपदार्थस्य प्रसिद्ध्या च तपःपदेन सन्तापविशेषस्य ग्रहणम् । अत्र प्रकृत्यर्थः सन्तापसामान्यम्, प्रत्ययार्थश्च सन्तापविशेषः । तपश्च प्रकृतिप्रत्ययार्थयोरभेदान्वयः । एवञ्च सन्तापविशेषाभिन्नशरीरसन्तापानुकूलव्यापारः तापसकर्तृकः यो द्वितीयकक्षायां वर्तते, तत्फलं तपोऽर्जनं सन्तापरूपमेवेति यथा तत्फलं तापसे वर्तते तथैव व्यपदेशिवद्भावेन स्वस्मिन्नपि वर्तते । अतः "तपः" इति क्रियाविशेषणमपि व्यपदेशिवद्भावेन फलाश्रयम् । अतः फलाश्रयत्वात् तस्य कर्मत्वम् । किं वा क्रियाविशेषणत्वात् तत्र द्वितीयेति बोध्यम् ।

ननु "देवदत्तो ग्रामं गच्छति" इत्यत्र देवदत्तनिष्ठाधिकरणतानिरूपिताधेयता गमनक्रियायां वर्तते । एवञ्च क्रियया सह कर्तुः भेदान्वये एव यथा कर्तरि प्रत्ययो भवति, तथैव तत्साहचर्यात् यस्य कर्मणः क्रियायां भेदेनान्वयस्तत्रैव कर्मणि प्रत्ययः । यथा देवदत्तेन स्तोकमोदनः पच्यते "अत्र विक्लितिनिष्ठाधेयतानिरू-

पिताधिकरणताया ओदने सत्त्वेन क्रियया सह तस्य भेदान्वयात् तत्रैव प्रत्ययो नतु विक्लित्या सहाभेदेनान्विते स्तोकेऽपि। एवमेव "तप्यते तपस्तापसः" इत्यत्र क्रियया सह कर्मणोऽभेदेनान्वयात् कर्मवाच्ये प्रत्ययो न स्यादिति चेन्न— सामान्य-विशेषभावेन यत्र भवत्यन्वय. कर्मणः क्रियायां तत्रापि कर्मणि प्रत्ययस्याभिप्रेयत्वात्। अत एव "स्वपोषानपुषत्" इति प्रयोगे पोषणं पोप इति सामान्यक्रियाया अपुष-दितिभूतकालिकविशेष-क्रियया सहाभेदान्वयेऽपि क्रियाविशेषणे क्लीबत्वमेव, कर्म-त्वमेव, कर्मणि प्रत्ययाभाव एवेत्यादिनिखिलनियममुपेक्ष्य द्वितीयाबहुवचनत्व पुंस्त्वञ्च भाष्यकृतोदाहृतम्। एवञ्च "तापसेन तपस्तप्यते" इति कर्मणि प्रत्ययो भवत्येव।

इदमत्रावधेयम्—कर्मणः कर्तृत्वविवक्षायाम् एककर्मकेभ्यो द्विकर्मकेभ्यो वा धातुभ्यो यदा कर्तरि प्रत्ययः क्रियते तदा कर्मस्थक्रियेभ्यो धातुभ्यः कर्मवद्भावो भवति। धातवो हि द्विधा भवन्ति—कर्तृस्थक्रियाः कर्मस्थक्रियाश्च। यत्र कर्मणि क्रियाकृतं किमपि वैलक्षण्यमुपलभ्यते तत्र कर्मस्थक्रियः धातुः। यथा पक्वेषु तण्डुलेषु छिन्नेषु काष्ठेषु वा क्रियाजन्यवैशिष्ट्यवशात् पच्छिद्भिदादिधातूनां कर्मस्थक्रियत्वं सम्पद्यते। यत्र च क्रियाया किमपि वैलक्षण्यं न जायते, भवति हि तत्र धातोः कर्तृस्थक्रियत्वम्। यथा गतागतग्रामादिषु। नहि पक्वेषु तण्डुलेष्विव गतागत-ग्रामेषु क्रियाकृतं किमपि वैशिष्ट्यमुपलभ्यते। कर्तृस्थक्रियाणां धातूनां कर्म प्राप्य-कर्मेति नाम्ना व्यवह्रियते। कर्मस्थक्रियाणाञ्च कर्म निर्वर्त्यं विकार्यञ्चोच्यते। तत्र निर्वर्त्यविकार्ययोरेव कर्मणोः कर्तृत्वविवक्षायां कर्तरिलकारे कर्मवद्भावो जायते न तु प्राप्ये कर्मण्यपि। उक्तञ्च—

निर्वर्त्ये च विकार्ये च कर्मवद्भाव इष्यते।
न तु प्राप्ये कर्मणीति सिद्धान्तो हि व्यवस्थितः॥

यद्यपि कर्मकर्तृप्रक्रियेति अभिधानात् केवलं कर्मण एव भवति कर्तृत्वमिति प्रतीति-पथमवतरति पूर्वं तथापि अत्र कर्मणः कारकान्तरस्यापि उपलक्षणतया करणाधि-करणयोरपि ग्रहणं भवति। एवञ्चात्र कर्मकरणाधिकरणानि स्वनिष्ठव्यापारस्य प्राधान्येन विवक्षायां कर्तृत्वं लभन्ते। सम्प्रदानापादानयोस्तु न भवति कर्तृत्वम्, असम्भवात्। अत एव सर्वत्र कर्मकरणाधिकरणानामेवोदाहरणानि उपलभ्यन्ते इति विस्तरेणालम्।

# संस्कृतं भारतीयराष्ट्रियता च

रामजी उपाध्यायः

भारतस्यैकताद्य वर्तते। सा कथं कदा वा सम्पादितेति विचारे समुपस्थिते सर्वंङ्कषो विमर्शो जायते यदुपक्रमेऽस्मिन् नास्ति तत्राङ्गलानां तेषां भाषाया अनुयायिनां वा कृतित्वम्, अपितु तेषां भारते प्रादुर्भावात् प्राक् किमपि तत् तत्त्वमासीत् सुप्रकटितं येन निःसन्दिग्धमिदं प्रोक्तम्—

उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।
वर्षं तद् भारतं नाम भारती यत्र सन्ततिः॥

बहुविधजनानां देशेऽस्मिन् सा भारतीया संस्कृतिर्विकसिता यस्या आदर्शमात्मनीनं कर्तुं ते सर्वे जनाः परस्परं साहचर्यं विदधुरिति भारतीयसंस्कृतेः प्रतिष्ठायाः प्रथमं पदम्। इयमेव भारतीयसंस्कृतिर्भारतस्यैकराष्ट्रियत्वमपि विहितवती। वस्तुतस्तु न कश्चिद्देशो भौगोलिकसीमाभीराष्ट्रमिति नामविशेषमर्हति, अपितु केनापि संस्कृतिविशेषेण कस्यचिद् भूभागस्य राष्ट्रसंज्ञेति विशेषो जायते। सा संस्कृतिः प्रधानतः संस्कृत-साहित्ये गौणत इतरभाषासाहित्येषु च निहिता वर्तते। यदि नाम संस्कृतमपरा भारतीय-भाषा वोपेक्षिताः स्युः तर्हि भारतीया संस्कृतिरपि मूलत उच्छिन्ना भविष्यति। फलतो भारतस्य भारतीयतापि विनष्टा जायेत। आंग्लभाषाद्वारेण या अन्ताराष्ट्रियसंस्कृतिः प्रचार्यते, तस्याश्चाकचक्येन भारतीयां संस्कृतिं विनाशयितुमेवाङ्गलभाषासमर्थकानां पक्षः प्रवर्तते।

स्वकीया राजनीतिकी वा सामाजिकी वा संस्कृतिः परेषु देशेषु स्थिरं पदं निदध्यादिति आधुनिकयुगे सर्वेषां प्रबलराष्ट्राणां परमोद्योगो वर्तते। इदमेवोद्दिश्य इङ्गलैण्ड-अमेरिका-जर्मनी-रूसादि-देशानां न केवलं सार्वजनिकसंस्था अपितु शासन-संस्था अपि भारतदेशे स्वल्पमूल्येनोत्कृष्टं साहित्यं विक्रीणन्ति, भारतीय-विद्यार्थिनां स्वकीयेषु देशेषु अध्ययनार्थं समृद्धां छात्रवृत्तिमुपहरन्ति, स्वकीयदेशस्य भाषा-संस्कृतीतिहासादीनां विषयाणामध्यापनार्थं प्राध्यापकान् नियोजयन्ति। 'फोर्ड फाउण्डेशन' इति विख्याता संस्था तदेवोद्देश्यं परमं कृत्वा प्रपञ्चिता।

राष्ट्रभाषाद्वारेण राष्ट्रिया संस्कृतिः संस्थापनीया यतो नाम राष्ट्रिय-

संस्कृतिं विना राष्ट्रस्य राजनीतिकमेकत्वमपि स्वप्नसृष्टिर्भविष्यति, भारतस्य विघटनमवश्यं भविता च । सा राष्ट्रिया संस्कृतिः केवलं भारतीयभाषासु सन्निहिता वर्तते । अतएव तासां सर्वासां भाषाणामध्ययनाध्यापनं सविशेषं व्यवस्थापनीयम् । अधुना तासु केवलं संस्कृतस्य माहात्म्यं भारते सर्वत्र राजते । सा भाषा सर्वासां भारतीयभाषाणां जननीरूपेण वा सहचरीरूपेण वा समादृता । अस्माकं राष्ट्रिय-साहित्यं प्राचीनकालतोऽद्यावधि सविशेषं संस्कृतभाषायामेव वर्तते । नातः परं किमपि सत्यम् । हिन्दी-भाषायामन्यासु वा भारतीयभाषासु सन्ति नामांगुलि-गणनीया एव राष्ट्रिय-साहित्य-कक्षा-योग्या ग्रन्थाः, अथ च शतशो ग्रन्था वेदोपनिषद्रामायण-महाभारतपुराणादयः, अन्ये वा बहुविधविषय-स्पृशो महाकवीनामाचार्याणां च संस्कृतग्रन्था राष्ट्रिय-साहित्य-कोटिमवगाहन्ते । न केवलं भारतीय-भाषासु भाविसाहित्यस्य निर्माणार्थमपितु भारतमिति नाम्नः सार्थकतां विधातुमपि संस्कृतभाषाया राष्ट्रियं साहित्यं महनीयम् ।

आंगलभाषाया अनिवार्यमध्यापनं तु दुराग्रह एव, यतो नाम कापि वैदेशिकी भाषा कस्मिश्चित् स्वतन्त्रदेशेऽनिवार्यरूपेण न ध्रियते । आंग्लभाषा तु केवलं तैर्जनैः पठनीया ये अन्ताराष्ट्रियज्ञान-विज्ञान-समुपासका अन्ताराष्ट्रियां ख्यातिं लब्धुं समुत्सुकाः सन्ति ।

आंग्लभाषा तु भारतीय-संस्कृतेः प्रोच्चाटिनी वर्तते । यदि नाम आंग्ल-भाषाया भारते सर्वोपरि स्थानं क्रियते, तर्हि त एवाङ्गल-साहित्य-संस्कृति-रंजिता जना देशेऽस्मिन् प्रामुख्यं भक्ष्यन्ते, येषामादर्शेन साहचर्येण च वैदेशिकी संस्कृति-र्देशेऽस्मिन् सनातनपदं लप्स्यते । सा स्थितिस्तु भारतस्य भारतीयतामेवाचिरं निराकुर्यात् ।

# मदनकविः तस्य पारिजातमञ्जरी च

हरीन्द्रभूषण जैनः

मालवप्रदेशे शक्तेः सरस्वत्याश्च सामजस्यमिदं नाम यत् सुदूरेऽतीते एकतो विक्रमादित्य-भोजदेवसदृशैश्चक्रवर्तिभूपालैरितः समस्तेऽपि भारतवर्षे स्वकीया विजयवैजयन्ती प्रकम्पिता परतश्च तस्यामेव पुण्यभुवि कालिदास-वररुचि-वराह-मिहिरामरसिंह - सिद्धसेनदिवाकर - भवभूति-वत्सभट्टि- धनपालाशाधरसदृशैर्महा-कविभिश्चरमोत्कृष्टं साहित्यं विरचितम् । महाकवीनामेतेषामेव परम्परायां 'श्रीमदनकविरासीत् यस्य यशोऽधुनापि धारानगर्याः शारदासदनस्य 'भोजशाला' इत्यपराभिधेयस्य प्रस्तरखण्डेऽङ्कितं राजते ।

'पारिजातमंजरी'-नामिकायाः सस्कृतनाटिकाया रचयिता महाकविर्मदनो मूलाद् गौडदेशं स्वजन्मनाऽमण्डयत् । सोऽयं महाकविर्महाराजश्रीभोजदेवस्य वंशजस्य मालवनरेशश्रीमदर्जुनवर्मणो वैदुष्येण विद्वत्समाजं प्रति च तस्य भूयसानुरागेण समाकृष्टो धारानगर्यामागत्य न्यवसत् । महाराजश्रीमदर्जुनवर्मणः शासनकालः १२१० ई० संवत्सरात् १२१८ ई० पर्यन्तमासीदित्यनेन मदनकवेरपि स्थितिकालः स्पष्टमेव त्रयोदशशताब्दस्य पूर्वार्धे एव मन्येत ।

महाकविरयं मदनो वेदत्रय्यां निष्णातो नैकासु कलासु कुशलः सहृदयो रसिकश्चासीत् । नालछानिवासि-जैनपण्डिताचार्यप्रवरश्रीमदाशाधरेभ्यस्तेन काव्यशास्त्रीयमध्ययनं विहितम् । स्वकीयविद्याबलेन पुरस्कृतोऽयं महाकविः धाराधराधीशेन श्रीमदर्जुनवर्मणा 'राजगुरु'-पदे प्रतिष्ठापितः । बाल्यादेव सरस्वत्या विलासेन स 'बालसरस्वतीति समलंकृतः' ।

अर्जुनवर्मणा रचितायाम् 'अमरुशतक'-स्य संजीवनीनाम्न्यां टीकायां स्थाने स्थाने 'यदुक्तमुपाध्यायेन बालसरस्वत्यपरनाम्ना मदनेने'ति विलिख्यास्य कवेरनेकानि पद्यानि समुद्धृतानि । मदनकवेः पारिजातमञ्जर्या ऋते कश्चनालङ्कारिको ग्रन्थोऽप्यवश्यं स्थितिमानभविष्यदिति अनेन सम्भाव्यते ।

मदनकविना चतुरङ्कशालिन्येका नाटिका विरचिता । सा च प्रस्तरखण्डद्वय्यां समुत्कीर्य धारानगर्याः शारदासदने प्रतिष्ठापिता । अस्या नाटिकायाः

सोहाकनाम्नः सुप्रसिद्धस्य शिल्पकारस्य पुत्रेण रामदेवेन शिलाङ्कनं विहितम् । अस्याश्च साम्प्रतं केवलमङ्कद्वयवानेकः प्रस्तरखण्डस्तत्र शारदासदने विद्यते, द्वितीयस्य प्रस्तरखण्डस्याद्यावधि सम्प्राप्तिर्न जाता ।

नाटिकाया अस्याः प्रारम्भे युद्धविजयस्य प्रसङ्गे देवैर्विहितया सुमनोवृष्टया सह स्वर्गत एका पारिजातमञ्जरी महाराजश्रीमदर्जुनवर्मणो वक्षसि निपतति सैव च सद्यो रमणीरूपे परिणता। महाराजोऽस्यामनुरज्यति, सा च तस्य पत्नीत्वं स्वीकरोति । घटनामेतामधिकृत्य नाटिकाया अस्या अभिधानं 'पारिजातमञ्जरीति वर्तते ।' कविना महाराजस्य गुर्जरनृपतौ जयसिंहे विजयमनुलक्ष्य स विजयः स्त्री रूपकल्पनामाश्रित्य विजयश्रीरिति नाम्ना सम्बोधितम्—

मनोज्ञां निर्विशन्नेतां कल्याणीं विजयश्रियम् ।
सदृशो भोजराजेन धाराधिप भविष्यसि ॥ मञ्जरी, १.६

अस्मादेव कारणादेतस्या नाटिकाया अपरं नाम 'विजयश्री' रित्यस्ति ।

कथानकञ्चास्या विक्रमाङ्कदेवचरित–राजतरङ्गिणी–हरिवंशपुराणानां पारिजातमञ्जर्याः कथानकप्रसङ्गैः कियत्स्वंशेषु सम्बद्धमस्ति । कविनेदं कथानकं रूपकयोग्यं स्वकीयसंयोजनेन सविशेषं निर्मितम् । नाटिकाया द्वावङ्कौ स्तः । तयोः प्रथमो वसन्तोत्सवस्तथा द्वितीयस्ताडङ्कदर्पणः । प्रथमेऽङ्के नारीरूपेण परिणतां पारिजातमञ्जरीं राजा स्वराज्ञीदृष्टेर्निगूहयितुं तामुपवनस्य मालाकर्तुः पत्न्याः संरक्षणे लीलोद्यानस्थिते मरकतमण्डपे रक्षयति । तदनन्तरं धारानगर्यां वसन्तोत्सवस्य वर्णनमस्ति । द्वितीयाङ्के लीलोद्यानमुपस्थितो नृपतिः स्वस्या महाराज्ञ्याः सर्वकलायास्ताडङ्के दूरस्थिताया राज्ञ्याश्च प्रच्छन्नायाः पारिजातमञ्जर्याः प्रतिबिम्बं दृष्ट्वा भृशं मोदते । राज्ञी रहस्यस्यास्य समुद्घाटनं करोति राज्ञो रुष्टा सती च सा क्रीडावनात् परागच्छति ।

पारिजातमञ्जरीयं साहित्य–संस्कृतीतिहासानां दृष्टया महत्त्वपूर्णा वर्तते । साहित्यदर्पणस्य नाटिकाया लक्षणानि सर्वाण्येवास्यां नाटिकायां संघटन्ते । कथायाः काल्पनिकता, स्त्रीपात्राणां बहुलता, धीरललितो नायकः, चत्वारोऽङ्काः, कथानकस्यान्तःपुरेण सम्बद्धता, नवीनयानुरागवत्या कन्यया सह प्रेमप्रभृतयः विशेषाः शास्त्रीयतामुपलक्ष्य निबद्धाः सन्ति । संस्कृतनाट्यपरम्परानुसारं नाटिकायामस्यां सर्वाण्यपि स्त्रीपात्राणि विदूषकश्च प्राकृतभाषाया एव प्रयोगं कुर्वन्त्यन्यानि पात्राणि च संस्कृतं प्रयुञ्जते । उपवनस्य मालाकारो नाम्ना कुसुमाकरस्तस्य पत्नी च वसन्तलीलाः । राज्ञी नाम्ना सर्वकला नायिका च पारिजातमञ्जरीत्यभिधीयते । इमानि सर्वाण्यपि पात्राण्यस्मान् 'अभिज्ञानशाकुन्तल'–स्य प्रियंवदानुसूयादिसार्थक-

नाम्नां परम्परामनुसरन्ति । 'तद्वशः सङ्गमो द्वयोः' नाटिकाया एतल्लक्षणानुसारं ज्ञायते यद् राज्ञः पारिजातमञ्जर्याश्च सङ्गमेन सह नाटिका समाप्यते ।

अस्या नाटिकाया भाषा श्रुतिमधुरा भावानुगामिनी च विद्यते । कविः प्रायेण 'गद्यं कवीनां निकषं वदन्ति' किंवदन्तीमेतां स्मृत्वा स्वस्य गद्यकौशलं दर्शयितुमपि प्रायतत । क्वचित् क्वचित् गद्यविधानपाटवं कादम्बरीमनुधावति ।

तद्यथा—सूत्रधारः—प्रिये, शृणु तर्हि । त्रिविधवीरचूडामणेः सार्वभौमश्री-भोजदेवान्वयमूर्धन्यस्य राज्ञः श्रीमदर्जुनवर्मदेवस्य गुर्जरपतिना जयसिंहेन सह पर्वपर्वतोपत्यकापरिसरेषु हिरण्यकशिपुकदनकुपितवैकुण्ठकण्ठीरवकण्ठनादचकितदिग्वारणेन्द्रमुक्तविश्वम्भरावनिनिपतनोद्वेलसप्तार्णवलहरिसम्फेटतुल्यतुमुलकोलाहलः कलहो बभूव । (पारिजातमंजरी, प्रथमोऽङ्कः पृ० ३)

अत्रार्जुनवर्मणो गुर्जरपतिना जयसिंहेन सह युद्धस्य वर्णनं सरभसं सम्पादितम् ।

पारिजातमंजर्यां तात्कालिक्या भारतीयसंस्कृत्या विज्ञानस्य च बहुश उल्लेखा सन्ति । यथा—

"विदूषकः– (ससम्भ्रमम्) अहो अरिट्ठं अरिट्ठं ।

चूओ[1] चम्पयकुसुमेहिं चम्पओ पाडलापसूणेहिं ।
बउलो सिरीसउप्फेहिं वियसिओ हंत अच्चरियं ॥ ४३ ॥

राजा – (सस्मितम्) धिङ् मूर्ख, नेदमरिष्टं किन्तु देव्यायमस्माकमाचार्येण चित्रप्रयोगो नाम वृक्षायुर्वेद - भेदः प्रदर्शितः ।"

(पारिजातमंजरी द्वितीयोऽङ्कः, पृ० १७)

एतेन ज्ञायते यत्तस्मिन् काले जनाश्चित्रप्रयोगनाम्नो वृक्षायुर्वेदस्य तेन प्रयोगेण परिचिता येनाम्रवृक्षे चम्पककुसुमानां चम्पके पाटलाकुसुमानां बकुले च शिरीषपुष्पाणां विकासः प्रदर्शयितुं शक्य आसीत् ।

चैत्रे पर्वणि शारदामन्दिरे नाटकाभिनया धारा नगर्यां वसन्तोत्सवस्योल्लासो राज्ञो वसन्तवेशेन तत्र सम्मिलतं तथा चास्यैवोत्सवस्य प्रसङ्गेन लीलोद्याने माधवी लताया आम्रेण सह विवाहप्रभृतयो विषयास्तात्कालिक-संस्कृति-वैशिष्ट्यं प्रकाशयन्ति । धारानगर्या वसन्तोत्सववर्णनं विलोक्यताम्—

सिन्दूरं क्वचिदट्टहासनिनदैरुद्दण्डमुड्डीयते
कस्तूरीनिकरः क्वचित् क्वचिदपि श्रीखण्डरेणूत्करः ।

---

१ संस्कृतच्छाया—चूतश्चम्पककुसुमैश्चम्पकः पाटलाप्रसूनैः ।
बकुलः शिरीषपुष्पैर्विकसितो हन्ताश्चर्यम् ॥

काश्मीरद्रवशीकरैर्दृतिमुखोन्मुक्तै रतिव्याकुल:
पौरैः स्वैरमनेकधायमधुनारब्धो मधोरुत्सवः ।। १.२०

अपि च— पौष्पैराभरणैर्मनोजतनवः स्वैरं दधत्योऽधुना
सैन्दूरीमरुणीकृतालकलतां लेखां ललाटीतटं ।
नृत्यन्तो मदविह्वलं लयविसंवादेषु पौराङ्गनाः
क्रीडामौरजिकस्वकान्तवदनान्यालोकयन्ति स्मिताः ।। १.२१

महाराजश्रीमदर्जुनवर्मा सङ्गीतज्ञ आसीत् राज्ञ्या हिन्दोलकरागस्याकर्णनाय प्रोत्साहितः स कथयति—

अंशन्यासग्रहकृतपदं ताडितं मन्द्रभूमौ
षड्जं तन्वन्नृपभरहितं धैवतेनापि हीनम् ।
हिन्दोलाख्यः सुखयति दधन्मध्यमं तारदेशे
कम्पं बिभ्रत्किमपि रुचिरं षड्जके पंचमे च ।। १.२२

पारिजातमंजर्यां अनेकोल्लेखा ऐतिहासिकाःसन्ति । भोजदेवेन कलचुरि-नरेशस्य गाङ्गेयदेवस्योपरि विजयः प्राप्तः । सुवर्मणः पुत्रेण श्रीमदर्जुनवर्मणा गुर्जरपतिजयसिंहः पावागढ़समरे पराजितस्तदीयराज्यश्रियोऽपहरणमपि च कृतम् । धारायां तदानीं चत्वारो राजमार्गाश्चतुरशीतिश्चतुष्पथा भोजदेवस्य शारदामन्दिरं विशालं नाट्यगृहं धारागिरिलीलोद्यानश्चासन् । तत्र विदुषामेकः समृद्धः समाजोऽपि व्यराजत । अर्जुनवर्मदेवस्य शासनकाले धारायाः स्पृहणीयोन्नतिरभूत् । एतानि सर्वाणि तादृशानि ऐतिहासिकानि तथ्यानि सन्ति येषां समर्थनं विचारणीयम् ।

मदनकविर्निःसन्देहं त्रयोदशशताब्दस्य विशिष्टकविरासीत् । तस्य पारिजात-मंजरीनामिकैकैव रचनास्माकं पुरतोऽधुना वर्तते । कविनान्या अपि रचनाः कृताः स्युः ।

कविर्मदनः संस्कृतस्य प्राकृतभाषायाश्च श्रेष्ठः पण्डित आसीत् । साहित्यस्य सङ्गीतस्य वृक्षायुर्वेदस्य च स ज्ञातासीत् । गद्यरचनायां तस्य नैपुण्यं सातिशयं वर्तते । ईदृशः कविराजः श्रीमदनः संस्कृतसाहित्यस्येतिहासे चिरस्मरणीयो मालव-भूमेर्गौरवाय च चिरं स्थास्यति ।

# व्रजनाथो भट्टः तस्य पद्यतरङ्गिणी च

प्रभाकरः शास्त्री

जयपुरनगरसंस्थापकेन सवाईतिपदधारिणा महाराजेन जयसिंहवर्मणा (द्वितीयेन) (१६९९-१७४३ ई०) समाहूतो विद्वान् श्रीव्रजनाथभट्टो हयमेधानुष्ठाने एको याज्ञिक आसीत्। पर्वणीकरोपाह्वेन श्रीसीतारामभट्टेन विदुषा (१८१८-१८३५ ई०) स्वरचिते "जयवंश" नाम्नि महाकाव्ये[1] हयमेधस्य वर्णनमुपस्थापयता लिखितमिदं पद्यम्—

जगदादिनाथमवृताथनृपो गुरुमात्मनो महति गातृपदे।
'व्रजनाथ' दीक्षितमुखान् विबुधानवरीष्टषोडशपदेष्ववृत ॥ १४-३७

कविकलानिधिना श्रीकृष्णभट्टेन स्वकीये 'ईश्वरविलास' नाम्नि महाकाव्ये व्रजनाथभट्टस्य वर्णनमपि हयमेधस्य विवेचनावसरे समुपस्थापितम्—

"तदात्मजः श्रीव्रजनाथनामा तथा परो गोकुलनाथ उक्तः।
तौ भ्रातरौ संनिहितौ नृपस्य निरन्तरं शास्त्रकथां दधाते ॥ ७.१९
प्राज्ञोत्तम श्रीव्रजनाथवक्त्र-विनिर्गतां शास्त्रकथामजस्रम्।
शृण्वन् स विद्वत्समुदायमध्ये धर्मेण कालं सकलं निनाय ॥ ७.१

एवमेव ऐतिहासिककाव्ये "माधवार्याशितके" श्रीश्यामसुन्दरशर्मा 'लट्टू' महोदयः ब्रह्मपुरीवर्णनं प्रस्तुवन्नन्यैर्विद्वद्भिः समं श्रीव्रजनाथभट्टं स्तौति—

"वाडववासवचार्यः श्रौतस्मार्तैकतत्परो धीमान्।
जयति श्रीव्रजनाथः कविरिह सततं व्रजाधीशे ॥" १२४

वाजपेयी ब्रह्मनिष्ठः श्रीरत्नाकरपौण्डरीकः श्रीमतां व्रजनाथदीक्षितानां पितृव्य आसीत्। श्रीदेवभट्ट महोदयानां द्वौ पुत्रौ—ज्येष्ठः श्रीप्रभाकरभट्टः कनिष्ठश्च श्रीरत्नाकरभट्ट आस्ताम्। ज्येष्ठानां श्रीप्रभाकरभट्टानामपि द्वौ सुतौ बभूवतुः,

---

1 राजस्थानविश्वविद्यालयतः प्रकाशितमिदं काव्यम् ऐतिहासिकमहाकाव्यकोटौ गण्यते। अस्य सम्पादनकार्यं जयपुरीयसंस्कृतमहाविद्यालयस्य भूतपूर्वाचार्येण पं० पट्टाभिरामशास्त्रिणा कृतम्।

तयोः ज्येष्ठः श्रीव्रजनाथदीक्षितोऽपरश्च श्रीगोकुलनाथः ।[2]

डा० गोडे मतानुसारं, कविकलानिधेः श्रीकृष्णभट्टस्य च ईश्वरविलासमहाकाव्यात् इदमेव ज्ञायते यत् श्रीप्रभाकरभट्टा मथुरैकवासिन आसन् । श्रीव्रजनाथभट्टः सर्वतः पूर्वं श्रीमतां वल्लभाचार्याणां शिष्यत्वेन न्यवसत् । "पेशवा ड्राफ्टर संग्रहः" भाग ३०, पत्र संख्या १०८ (दिनाङ्काः १६ अगस्त १७३४ ई०) एतत् पत्रमपि श्रीमतां व्रजनाथभट्टानामुल्लेखं करोति । पत्रमिदं मराठीभाषायां वर्तते, यस्यानुवाद आंग्लभाषायां डा० गोडेमहोदयैः पूर्वोक्ते स्वकीये निबन्धे प्रस्तुतो वर्तते । एवमेव, "रजिस्टरकौमवार दस्तूर" (भाग २) रहीफ 'ब' जातिनाम ब्राह्मणः पृष्टांङ्कः २४ तः उद्धृतोंऽशः प्रस्तूयतेऽत्र, यस्य प्राप्तिः राजस्थान–पुरालेखविभागात् बीकानेरात् भवितुं शक्यते—

"पुण्डरीक व्रजनाथ प्रभाकर का, श्री पुण्ढरीकजी का भतीजा, सं० १७७६ चैतसुदि ६ ने महरवानगी सिरो पाव ५१) रु०" इत्यादि ।

अनेन सिद्धयति यत् श्रीमतां व्रजनाथभट्टानां जयपुरे निवासः १७७६ विक्रमाब्दतः अश्वमेधयागसमय–पर्यन्तं वैक्रमाब्द १७९१ पर्यन्तमासीदेव । यतो हि श्रीश्यामसुन्दरलट्टू पाख्येन महोदयेन 'माधवसिंहार्यशतके' श्रीमतां वर्णनमुपस्थापितम् लट्टूमहोदयो म० सवाई माधवसिंहानां ( प्रथम ) सभासदः, ग्रन्थस्य च निर्माणसमयः वैक्रमाब्दः १८१२ इति निश्चितवान् । अतः सिद्धयति वर्तमानकालिकक्रियाप्रयोगात्, श्रीमतां स्थितिरासीत् वैक्रमाब्द १८१२ पर्यन्तम् ।

श्रीमतां व्रजनाथभट्टानां रचनाद्वयमेवोपलब्धमद्यावधि । (१) ब्रह्मसूत्राणुभाष्यवृत्तिः (मरीचिकाख्या टिप्पणी) 'पद्य-तरंगिणी च' । तरंगिणीविषये विवेचयिष्यामोऽत्र ।

सेयं 'पद्यतरंगिणी' लघुकाव्य रचना वर्तते । श्री भांडारकर प्राच्यविद्या शोधप्रतिष्ठाने पुण्यपत्तने (Bhandarkar Oriental Research Institute, Poona–4) ग्रन्थास्यास्य तिस्रः प्रतयः सन्ति[3] । आसु परस्परं

---

[2] डा० पी० के० गोडे सहोदयैः 'सवाई जयसिंह (आमेराधिपति) के गुरु श्री रत्नाकरभट्ट के भ्राता श्री प्रभाकरभट्ट' शीर्षकलेखे उल्लेखनात् । इण्डियन कल्चर भाग १ पृष्ठांकाः २९३-२९६ ।

[3] पद्यतरंगिणी—(१) ४२१ क्रमांङ्के १८८७-९१ ईशवीयाब्दस्य संकलने.
(२) ७२४ क्रमाङ्के १८८६-९२ ,, ,,
(३) ७२५ क्रमाङ्के १८८६-९२ ,, ,,

वैरूप्यं वर्तते । प्रथमा प्रतिः केवलं द्वादश-तरंगात्मिकैव । नास्यामुपलभ्यते आदितः एकादशतरंगपर्यन्तो विषयः, नृपतिवंशवर्ण्यात्मकश्च परिशिष्टोऽपि । द्वितीयप्रतौ प्रथमतः नृपतिवंशवर्णनात्मकस्य परिशिष्टस्योपलब्धिः विशेषरूपेण वर्तते । परिशिष्टस्यापि प्रारम्भश्चतुर्थचरणात् (प्रथम १ लोकस्य) प्राप्यते । तृतीया प्रतिः परिपूर्णा-नृपतिवंशवर्णनात्मकपरिशिष्टेन सह द्वादशमात्रतरंगात्मिका। इयमेव सर्वतः प्राचीनापि । अस्या लेखनकालोऽपि वर्तते उट्टङ्कितस्तत्र-("पौष एकादशी रविवार सं० १८०६" इति) आसु तिसृषु प्रतिषु द्वादशतरंगस्य प्राप्तिः ग्रन्थस्यास्य द्वादशतरंगात्मकत्वमेव सूचयति । 'एशियाटिक सोसायटी' १ पार्क स्ट्रीट कलिकातानगरे अस्या एका प्रतिः समुपलब्धा[1] । दौर्भाग्यात् सैषा प्रतिरपि अपूर्णैव । अस्यां प्रथमतरंगतः नवमतरगस्य ५१ पद्य यावत् प्राप्यते विषयः । चतसृणां रचनानां प्रतीनां सम्मेलनेनापि ग्रन्थ अपूर्ण एव । सर्वप्रथमं कलिकातायाः 'एशियाटिक सोसायटी' नामिकायां संस्थायां समुपलब्धा प्रतिः विचारसरणिमागच्छति । अस्या विवेचनमेवमुपलभ्यते—

"5465-Brijnath. 9773 Padyatarangini. Substance-Country made Paper, Size 14×5½ inches. Folio 10, Lines 11 on a page. ecktant 300, Character Nagar. Appearance-Tolerable. Incomplete Ms. of Padyatarangini in an anthology in twelve Tarangās. It gives a table of contents in beginning—

"नवनीलनीरदसमानरोचिषे कुसुमायुधातिकमनीयशोचिषे ।
तडिदम्बराय महते फलाय ते निगमान्तवेद्यवपुषे नमो नमः ।। १
सर्वान् प्रबन्धानालोच्य विदुषां तोषदेवते ।
कृतेयं व्रजनाथेन रम्या पद्यतरंगिणी ।। २
सज्जनानां प्रशंसा च प्रशंसा गुणिनां तथा ।
विदुषां चैव लक्ष्म्याश्च प्रशंसा दातुरेव च ।। ३
मित्रस्य च प्रशंसात्र दैवाख्यानमतः परम् ।
उद्यमाख्यानमप्यत्र तथा निन्दातरंगके ।। ४

---

1 म० म० हरप्रसादशास्त्रिभिः विरचितं ग्रन्थविवरणात्मकं सूचीपत्रम् (डिस्क्रिप्टिव कैटेलोग) क्रमांकः ५४६५, तत्र ग्रन्थस्यास्य क्रमांकः (G) ९७७३, १४ बी ४" (G 9773, 14 B 4)

मूर्ख-दुर्जनलब्धानां दुर्गतस्य च निन्दनम् ।
नीतिः प्रकीर्णकाख्यानमन्योक्तिश्च समासतः ।। ५
अन्योक्तीनामभिप्रायसूचनं च समासतः ।
तरंगा द्वादशैवात्र तरंगिण्यामुदाहृताः ।। ६
विस्तृतानेकसन्दर्भा लोकन्यायासमुक्तये ।
मुदं सहृदयानाञ्च प्रयत्नोऽहं ममात्र हि ।।" ७

उद्धृतेष्वेषु पद्येषु ग्रन्थस्य विषयसूची लभ्यते । ज्ञायते चान्यद् व्रज सर्वेषामेव प्रामाणिकग्रंथानामनुशीलनं कृत्वा ततश्च निर्मिता सेयं 'पद्यतरंगि अस्यां तरंगिण्यामनेकश्लोकाः संकलिता बहवश्च लेखककृताः प्रतिभानि द्वादशतरंगाणां संक्षेपेण विवेचनमेवं कर्तुं शक्यते—

१. **सज्जन प्रशंसात्मिका** प्रथमा वीचिः संस्कृतसाहित्ये विश्रु पद्यानां संकलनं प्रस्तौति । संकलनमिदं विद्वत्तापूर्णम् । पद्यानां सारल्यं वर्तते । एतेषां संख्या वर्तते । यथा—

"उपचरितव्याः सन्तो यद्यपि कथयन्ति नैकमुपदेशम् ।
यास्तेषां स्वैरकथास्त एव भवन्ति शास्त्राणि ।। १
अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम् ।
सदालोकहिते युक्ता रत्नदीपा इवोत्तमाः ।। २
सज्जनः सुधया तुल्य इति चेतसि मा कृथाः ।
सुधा पीता सुखं दत्ते दर्शनेन हि सज्जनः ।। ३
मज्जन्तोऽपि विपत् पयोधिगहने निःशङ्कधैर्यव्रताः
कुर्वन्त्येव परोपकारमनिशं सन्तो यथाशक्तितः ।। इत्यादि

**'द्वितीये तरंगे'-** गुणगुणिनोः प्रशंसा' वर्तते । उक्तमपि-" गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः" । गुणैरेव नरो गुणी प्रोच्यते । तथाहि

"गुणाः कुर्वन्ति दूतत्वं दूरेऽपि वसतां सताम् ।
केतक्या गन्धमाघ्राय स्वयं गच्छन्ति षट्पदाः ।। १
गुणाः सर्वत्र पूज्यन्ते पितृवंशो निरर्थकः ।
वासुदेवं नमस्यन्ति वसुदेवं न ते जनाः ।। ४
जनकः सानुविशेषो जातिः काष्ठं भुजङ्गमैः सह संगः ।
स्वगुणैश्चन्दन-विटपी गतस्तथापि हि लोके महिमानम् ३८

अस्मिन् तरंगे अष्टात्रिंशत् ३८ पद्यानि सन्ति ।

**'तृतीये तरंगे'**- 'विद्वत्-प्रशंसा' वर्तते । तत्र ४२ पद्यानि सन्ति । सन्ति केचन श्लोकाः प्रसिद्धा विद्वत्समाजे । यथा—

"विदुषां वदनाद् वाचः सहसा यान्ति नो बहिः ।
याताश्चेन्न पराञ्चन्ति द्विरदानां रदा इव ।। १
अधरस्य मधुरिमाणं कुचकाठिन्यं दृशोस्तैक्ष्ण्यम् ।
कवितायाः परिपाकान्ननु भव रसिको विजानीहि ।। ६
उत्कर्षवान्निजगुणो यथा यथा याति कर्णमन्यस्य ।
धनुरिव वसुवंशजन्मा तथा तथा सज्जनो नमति ।। ४१
सज्जन एव हि विद्या शोभायै भवति दुर्जने मोघा ।
नहि दूरदर्शनतया कैश्चिदुपादीयते गृध्रः ।। ४२

**'चतुर्थ-तरंगे'**- 'लक्ष्मी प्रशंसा' उपवर्णिता । तत्र केवलं अष्टादश श्लोका एव सन्ति । प्रायश एते श्लोका सुप्रसिद्धा एव । तत्र द्वौ श्लोकौ प्रस्तूयेते—

"धनमर्जय काकुत्स्थ, धनमूलमिदं जगत् ।
अन्तरं नैव पश्यामि निर्धनस्य मृतस्य च ।। ५
वयोवृद्धास्तपोवृद्धा ये च वृद्धा बहुश्रुताः ।
सर्वे ते धनवृद्धस्य द्वारे तिष्ठन्ति किंकराः ।। १८"

**पंचम-तरंगे**ऽपि अष्टादश श्लोका एव, ये दातृ–प्रशंसामुपवर्णयन्ति । केचन श्लोकाः सूक्तिरूपेण प्रयुज्यन्ते विद्वद्भिः । यथा—

"ददतो युध्यमानस्य पठतः पुलको न चेत् ।
अन्तश्च परस्यापि धिग्दानं पौरुषं स्मृतम् ।। १
कृच्छ्रानुवृत्तयोऽपि हि परोपकारं त्यजन्ति न महान्तः ।
तृणमात्र–जीवना अपि करिणो दानद्रवार्द्रकराः ।। ४
हस्तादपि न दातव्यं गृहादपि न दीयते ।
परोपकरणार्थाय वचनेऽपि दरिद्रता ।। १८"

**षष्ठ-तरंगे**–पञ्चदशपद्यैः 'मित्रप्रशंसा' वर्तते । तदनुसारं यो हि शरीररक्षायै हस्ताविव, नेत्ररक्षायै च पक्ष्मणीव स्वयमेव हितमाचरति, न च केनापि प्रेरितः, स सन्मित्रम् । यथा—

"कराविव शरीरस्य नेत्रयोरिव पक्ष्मणी ।
अप्रेरितं हितं कुर्यात्तन्मित्रं मित्रमुच्यते ।। १

एवमेवान्तिमपद्ये सज्जन - संगमस्य लाभा वर्णिताः । यथा—

"बुद्धिं वर्द्धयति श्रियं वितनुते वैदग्ध्यमामुञ्चति

श्रेयः पल्लवयत्पदानि दलयत्युन्मीलयत्युन्नतिम् ।
विज्ञानं परिशोधयत्युपचिनोत्युच्चैः कलाकौशलं
किं किं नारभते हरेरिव कथा [विद्वत्-] सतां संगतम् ।। १५"

**सप्तमतरंगे**–नव श्लोका एव । तो च दैव-विषयं प्रकटयन्ति । प्रसिद्धा एव श्लोका हितोपदेश-पञ्चतन्त्रादिकथाग्रन्थेषु । कानिचित् पद्यानि उदाह्रियन्ते—

"प्राप्तव्यमर्थं लभते मनुष्यो देवोऽपि नो लङ्घयितुं समर्थः ।
तस्मान्न शोचामि न विस्मयो मे यदस्मदीयं न हि तत्परेषाम् ।। १
अम्भोधिः स्थलतां स्थलं जलधितां धूलीलवः शैलतां
मेरुः मृत्कणतां तृणं कुलिशतां वज्रं तृणप्रायताम् ।।
वह्निः शीतलतां हिमं दहनताम् आयाति यस्येच्छया
लीला दुर्ललिताद्भुतव्यसनिनोरस्मै नमः कर्मणे ।। ८"

अन्तिमं पद्यं तु—

तुल्यं भूभृति जन्म तुल्यमुभयोर्मूल्यञ्च तुल्यं वपुः
तुल्यं दार्ढ्यमुदग्रठङ्कदलनं तुल्यं च पाषाणयोः ।
एकस्याखिलवन्दनाय च विना देवत्वमारोपितं
तद्द्वारे विहिता परस्य तु पदायातास्पदं देहली ।। ६"

**अष्टम-तरंगे**–'उद्यम - प्रशंसा' वर्णिता । तत्र सप्तदश श्लोकाः सन्ति सर्वे च सुप्रसिद्धाः । तद्यथा–'उद्योगिनं पुरुषसिंहमुपैतिलक्ष्मीः, कोऽतिभारःसमर्थानाम्, आरम्यते न खलु विघ्नभयेन नीचैः – इत्यादयः । महाकवेर्माघस्यापि प्रसिद्धं पद्यमुद्धृतमत्र–

"सम्पदा सुस्थिरं मन्यो न वर्द्धयति तस्यताम् ।
कृतकृत्यो विधिर्मन्ये न वर्द्धयति तस्य ताम् ।। १५"

**नवम-तरंगे**–मूर्खस्य निन्दा दशपद्येषु, दुर्जननिन्दा च परतः वर्णिता । तरंगस्यास्य अपूर्णत्वात् निश्चितसंख्या वक्तुं न शक्या । प्रारम्भिके पद्ये– "मूर्ख-दुर्जनलुब्धानां दुर्गतस्य च निन्दनम् इत्यादिकं यदुल्लेखनं वर्तते, तदनुसारि अनुमातुं शक्यतेऽस्य तरंगस्य विस्तृतत्वम् । मूर्खनिन्दात्मका आदौ श्लोकाः । तद्यथा–

"अरण्यरुदितं कृतं शवशरीरमुद्वर्तितं
स्थलेब्जमवरोपितं वधिरकर्णजापः कृतः ।
श्वपुच्छमवनायितं सुचिरमूषके वर्णितं
धृतोन्धमुखदर्पणो यदबुधो जनः सेवितः ।। ५"

'दुर्जन-निन्दायाः' वर्णनाद् ग्रन्थसमाप्तिर्भवति । द्विपञ्चाशत्तमःश्लोकस्तु—

"नन्वाश्रयस्थितिरियन्तव कालकूट केनोत्तरोत्तरविशिष्टपदोपदिष्टा । प्रागर्णव···" इयदेव प्राप्यते, शेषाणां पत्राणामनुपलब्धत्वात् । अतः दशमैकादशयोः तरंगयोः नोपलब्धिर्भूता । द्वादशतरंगस्य प्राप्तिः पुण्यपत्तनस्थासु प्रतिषु वर्तते एव । अस्मिन् तरंगे अन्योक्तीनां संकलनं कृतम् । संकलनेन साकं तेषां पद्यानां विश्लेषणमपि प्राप्यते । यथा "सूर्यान्योक्तिः"—

"खद्योतो द्योतते तावद्यावन्नोदयते शशी ।
उदिते तु सहस्रांशौ न खद्योतो न चन्द्रमाः ।। १"

लेखको व्याकरोति पद्यमिदम्—"कश्चिद् गुणहीनं गुणिजनवर्जे समाजे लब्धप्रतिष्ठं वीक्ष्य सव्यथं कंचित् प्रति कश्चित् मा खिदस्त्वं समागते कस्मिंश्चिद् विदुषि स्वयमेव परास्तो भविष्यति इति सूर्यापदेशेन वक्ति-खद्योत इत्यादि ।" अस्याशयः स्पष्टमेव । द्वितीया सूर्यान्योक्तिः याचकानुद्दिश्य लिखिता । यथा हिन्द्यां 'रहीमस्य' पदानि प्रसिद्धानि—"रहिमन जाचकता गहे, बड़े छोट ह्वै जात" इत्यादीनि, तथैव लिखितं वर्तते—

करं प्रसार्य रविणा दक्षिणाशावलम्बिना ।
न केवलमनेनात्मा दिवसोऽपि लघूकृतः ।।"

दिवाकरो दक्षिणायने शैत्यात् शान्तः लघ्वाकृतिश्च दृश्यते, न केवलं दिवाकरो दिवसा अपि लघुतां प्राप्नुवन्ति, एवमेव दक्षिणां प्राप्तुकामः कोऽपि यदि हस्तौ प्रसारयति तदा लघुत्वं प्राप्नोतीत्यर्थः ।

सूर्यान्योक्तीना परतः चन्द्रान्योक्तयः सन्ति । आसामपि गूढोऽर्थो विशिष्टः । महापुरुषस्य संगमनात् (महापुरुषेण सह निवसता) सदोषोऽपि निर्दोषो भवति । अन्यच्च तत्साहाय्येन स उत्तमपदमपि प्राप्नोति । यथा चन्द्रः । स शिवस्य मस्तके स्थान प्राप्तवान्, कलङ्करहितः क्षयदोषरहितश्च संजातः । सर्वमिदं संसर्गेणैव—

"प्रकुर्वता संगतिमिन्दुनामुना किं किं न लब्धं परमेश्वरस्य ।
कलंकहानिः सुरसिन्धुसंगमः कलाक्षयत्वं च पदं तथोच्चैः ।।३"

एवमेव-समुद्र-मुक्ता-सिंह-चातक - कोकिल - शुक - भ्रमरादीनाम् अन्योक्तयः शोभनरूपेण वर्णिताः अस्मिन् तरंगे । एका भ्रमरोक्तिः प्रस्तूयतेऽत्र । भ्रमरमुद्दिश्य कश्चित् वक्ति—

"अये मधुप ! मा कृथा वृथा मनोदीनतां
तुषारसमये लताशतनिषेवको व्याकुलः ।
इयं पुरत एव ते सरसपुष्पमासोदये
रसालनवमंजरी रसभरी दरीदृश्यते ।। ७५"

तरंगेऽस्मिन् वर्तते १०२ अन्योक्तीनां संग्रहः। ग्रन्थस्य च समाप्ति-रत्रैव भवति। "नृपतिवंशवर्णनात्मकं" तु परिशिष्टम्। अस्मिन् लेखकेन श्रीव्रजनाथभट्टेन स्वाश्रयदातृणां राज्ञां संक्षेपेण वर्णनमुपस्थापितम्। परिशिष्टमिदं योधपुरतः (जोधपुर) राजस्थानप्राच्यविद्याप्रतिष्ठानतः प्रकाशितेन ईश्वरविलास-महाकाव्येन सह प्राकाश्यतां नीतम्। सप्तत्रिंशत्-पद्यात्मकेऽस्मिन् आद्येषु दशपद्येषु जयपुर - संस्थापकानां जयसिंह - (द्वितीय) वर्मणां स्तुतिर्वर्तते। एषु तुरंगमेधस्य वर्णनमपि प्रस्तुतं लेखकेन। यथा—

के वाभवन्नृपतयो वत विक्रमाद्याः केनप्यकारि न हि तेषु तुरंगमेधः।
अस्मिन् युगे निखिल-भूपतिसार्वभौमस्तद्यज्ञकृद् विजयते जयसिंह एकः॥"३

ततश्चावशिष्टेषु पद्येषु महाराज - जयसिंहस्य कनिष्ठपुत्रस्य म० स० माधवसिंहस्य वर्णनं वर्तते। आश्चर्यकरं नु इदं यत् म० स० ईश्वरीसिंहस्य वर्णनं, नात्र चित्रितम् - यस्य समयः १७४३-१७५० ई० आसीत्। स० माधवसिंहस्य शासन - समयः आसीत् १७५०-१७६५ ई०। माधवसिंहः स्वभ्रातुः ईश्वरीसिंहस्य मृत्योः साधक आसीत्— इति जानन्ति इतिहास-विदो विद्वांसः। कविनापि स्वीयमाश्रयदातारं प्रसादयितुमेषा सरणिः स्वीकृतेति मन्ये। समाप्तौ च रचनायाः कालो निर्दिष्टः—

"नन्दाभ्रवसुशीतांशु (१८०९)- मितेब्दे मासि पौषके।
एकादश्यां रविदिने ग्रन्थः संपूर्णतामगात्॥"

ऐतिह्यदृष्टया तदा जयपुरस्य शासक आसीत् माधवसिंहः प्रथमः। अतः कवेः व्रजनाथभट्टस्य समयः आश्रयदातुश्च नाम अनेन ज्ञातुं शक्येते। माधव-सिंहस्यालंकारिकं वर्णनमुपस्थापयन् कविः पद्यमिदं प्रस्तौति—

"कर्पूरन्ति हरन्ति मौक्तिकलसद्धारन्ति हीरन्त्यथो
कैलासन्ति विसन्ति मुग्धदशनज्योत्स्नान्ति हंसन्ति च।
क्षीरोदन्ति हिमन्ति चन्द्रकिरणग्रामन्ति रामन्त्यपि
श्रीमन्माधव - भूमहेन्द्रमुकुटालंकारकीर्तिच्छटाः॥ ३१"

# या सृष्टिः स्रष्टुराद्या

डा० श्रीमुकुन्दमाधव शर्मा

या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ।
यामाहुः सर्वबीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥

इदं कालिदासीय**शाकुन्तले** प्रथमं पद्यं नान्दीश्लोकरूपेण वर्तते । जलं, वह्निः, यजमानः, चन्द्रः, सूर्यः, आकाशः, पृथिवी, वायुश्चेति प्रत्यक्षयोग्याभिरष्टभिः तनुभिः भगवान् शिवः वः सामाजिकान् अवतु इति नान्दीश्लोकस्य सरलार्थः । एतदतिरिक्ततया परमव्यङ्ग्यार्थनिपुणस्य कालिदासस्यास्यां कृतावनेके व्यङ्ग्यार्था अहंपूर्विकया समुल्लसन्ति । दिङ्मात्रेण चायमेकः व्यङ्ग्यार्थः - बौद्धदर्शनानुसारं प्रत्यक्षायोग्यत्वान्नास्ति ईश्वरः । तन्मतनिराकरणपरः व्यङ्ग्यार्थः प्रत्यक्षाभिरिति चतुर्थपादे । एवंक्रमेण बहुश एवं व्यङ्ग्यार्था प्रथमश्लोक एव राघवभट्टादिभिष्टीकाकृद्भिः निभालिताः । अत्र च विशेषतः काव्यार्थसूचनात्मक-व्यञ्जनाविषय एवास्माकमनुसन्धित्सा । तथा चोच्यते मातृगुप्ताचार्येण[1]—आशीर्नमस्क्रियारूपः श्लोकः काव्यार्थसूचकः नान्दीति कथ्यत इति । एवं **दशरूपके**ऽपि नान्दीश्लोकः काव्यार्थसूचकः स्यादित्युच्यते ।[2] एतन्मतस्य शोभनतममुदाहरणं तावत् कालिदासस्य या सृष्टिरिति नान्दीश्लोक एव । अस्मिन् विषये च राघवभट्टस्य व्याख्यानमेवास्माभिः सरणिनिर्देशकत्वेन स्वीक्रियते । क्वचित् सति बाधके त्यज्यते च । प्रकृते

---

1 अयञ्च मातृगुप्ताचार्यः कल्हणेन काश्मीरराजप्रवरसेनपूर्ववर्तित्वेन परामृष्टः नाट्यशास्त्रटीकाकर्तृरूपेण प्रसिद्धः । विलुप्तायामपि तस्य तत्कृतौ तद्वाक्यानि विभिन्नेष्वलंकारग्रन्थेषु बाहुल्येनोद्धृतानि वर्तन्ते ।

2 रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः ।
ऋतुं कंचिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥ **दशरूपक** ३.४

च तन्मतानुवादपुरस्सरं ततोऽप्यधिकं किञ्चित् प्रतीयमानं वस्तु निर्देष्टुमिष्यते। तथा हि "अथ या सृष्टिः स्रष्टुराद्येत्यनेन शकुन्तला सूचिता। एतावत्-कालपर्यन्तं तादृशसृष्टेरजातत्वादाद्यत्वम्।" इति राघवभट्टवचनम्। अनेन ग्रन्थेन च सर्वोत्कृष्टरूपशालिनी शकुन्तला नाटकनायिका परामृष्टा। एवं कालिदासीयोत्तरमेघेऽपि सर्वोत्कृष्ट-शोभाशालित्वद्योतनार्थम् आद्यसृष्टत्वकथनं यथा "या तत्र स्याद् युवतिविषये स्रष्टुराद्येव धातु"रिति। (उ० मे० २१)। न खलु आद्या सृष्टिरित्यनेन कालिकसर्वप्राथम्यमवगन्तव्यम्। अभ्यर्हितं पूर्वमिति न्यायेन अभ्यर्हितस्य श्रेष्ठत्वेन स्वीकृतस्य जनस्य सर्वप्राथम्येनोल्लेखः भवति। एतन्न्यायस्वीकरणार्थम् अभ्यर्हितं चेति कात्यायनवार्तिकमेव मानम्। तच्च वार्तिकमल्पाच्तरम् (पा० २-२-३४) इति सूत्रानन्तरं द्वन्द्वसमास-प्रकरणे – दीक्षितेन पठितम्। उदाहरणञ्च दीक्षितप्रदत्तं तापसपर्वताविति। भाष्ये तु मातापितरावित्युदाहृतम्। मातुः अभ्यर्हितत्वात्। अयञ्च न्यायः श्रीमता सायणाचार्येण ऋग्वेदभाष्यभूमिकायामेवं परामृष्टः – "ऋग्वेदस्य प्राथम्येन सर्वत्र आम्नातत्वात् अभ्यर्हितं पूर्वमिति न्यायेन अभ्यर्हितत्वाद् तद्व्याख्यानमादौ युक्तम्, प्राथम्यं च **पुरुषसूक्ते** विस्पष्टम् – "तस्माद् यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत॥ (ऋ० सं० ६०।६) इति। अत्र स्थले श्रीपशुपतिनाथशास्त्रिसम्पादितायां भाष्यभूमिकायामियानेव पाठ उपलभ्यते यथा–– "ऋग्वेदस्य प्राथम्येन सर्वत्र आम्नातत्वाद् अभ्यर्हितत्वाद् तद्व्याख्यानमादौ युक्तम्" इत्यलं बहुना।

वहति विधिहुतमित्थं शकुन्तलादुष्यन्तयोः विवाहः तथा शकुन्तलया गर्भधारणं सूच्येते। तथा हि "या विधिना सुरतविधिना हुतं निषिक्तं हवी रेतो वहतीति तस्या गर्भः।" इति राघवभट्टस्यार्थद्योतनिका। अस्मन्मते विधिहुतमित्यत्र सुरतविधिनेति नार्थः अपि तु गान्धर्वेन विवाह-विधिनेत्येव ज्यायानर्थः। तथा हि "हला प्रियम्वदे यद्यपि गान्धर्वेन विवाह-विधिना निवृत्तकल्याणा शकुन्तला" इत्यादिकं चतुर्थाङ्कस्य विष्कम्भके अनसूयावचनमेव प्रमाणं स्यात्। होत्री इत्यनेन कण्वः सूचित इति राघवभट्टः। ये द्वे इत्यनेनानसूयाप्रियंवदे सख्यौ कालं शापान्तसमयं विधत्ते बोधयतः। "श्रुतिविषय-गुणा या स्थिता व्याप्य विश्वम्" इत्यस्यांशस्य व्यंग्यार्थः राघवभट्टेनैवं निभा-लितः––पातिव्रत्यादिभिर्गुणैः विश्वं व्याप्य श्रुत्या वार्तया विषये देशे गुणैस्त्रिभिः शार्ङ्गरवशारद्वतगौतमीभिरयत एतादृशी स्थिता। एतेन सगर्भायास्तस्या दुष्यन्तद्वारदेशगमनमिति। अत्रायमाशयः, या शकुन्तला विश्वं व्याप्य

स्थिता पातिव्रत्यादिभिर्गुणैः विश्वविश्रुता, अथवा श्रुतिः वार्ता कण्वेन प्रेषितः अस्मान् साधु विचिन्त्य संयमधनान् इत्यादिसन्देशः। विषये देशे दुष्यन्तो द्वारदेशे। गुणैः त्रिभिः शार्ङ्गरवादिभिः परिवेष्टिता सत्त्वरजस्तमोभेदेन गुणानां त्रिसंख्यकत्वात्। परन्तु श्रुतिविषयगुणेत्यंशः राघवभट्टेन यथा व्याख्यातः तथा शकुन्तलया विशेष्यविशेषणभावेन न संगच्छते इति तद्व्याख्यानगतेयं व्यग्यार्थस्य कष्टकल्पना नास्माकं हृदयमावर्जयति। तथाप्यलमत्रोपजीव्यानां मान्यानां व्याख्याने कटाक्षनिक्षेपेणेति सति सम्भवे सरलतर व्याख्यानान्तरमेवानुसन्धेयम्। [illegible] आङ्गलभाषामयव्याख्यातॄणां श्रीगजेन्द्रगड्करमहोदयानां मते श्रुतिविषयगुणा या स्थिता व्याप्य विश्वमित्यनेनांशेन सेयं शकुन्तला सूच्यते यस्या गुणराशिः समग्रमपि विश्वमभिव्याप्य वर्तते। "श्रुति विषय etc. stands for Śakuntalā as a woman whose virtues had spread throughout the universe." शोभनतरमेतत् प्रतिभाति। किन्तु नैतावताप्यस्माकं सन्तोषः। अस्मन्मते तु या सृष्टिः स्रष्टुराद्या इत्यनेन साधारण्येन सूचिता शकुन्तला पुनरपि साधारण्येन परामर्शं नार्हति। नान्दीश्लोकस्य व्यंग्यार्थेन काव्यार्थस्य धारावाहिकभावेनोपस्थापनमेव ज्यायः। एवं क्रमेण प्रथमाङ्के अनन्यसाधारणसौन्दर्याधारभूतत्वेन परिचिता शकुन्तला या सृष्टिरित्यनेन परामृष्टा। सैव पुनरपि केवलं सकलगुणशालित्वेन निर्द्देष्टुं न युज्यते। शकुन्तलाया निर्द्देशेन काव्यवस्तुनोऽपि कियान् निर्द्देशः यथा स्यात् तथा कार्यम्। तद् विभाव्यतामयमस्माभिः परिकल्पितः काव्यवस्तुनः धारावाहिकव्यजनक्रमः। तथा हि या सृष्टिरित्यनेन साधारण्येन शकुन्तला - परिचयः। दुष्यन्तेन सैव आद्या सृष्टिरिति परिचितेति प्रथमाङ्कगतं वृत्तम्। वहति विधिहुतमित्यनेन गान्धर्वविधिना विवाहः गर्भधारणञ्चेति द्वितीयतृतीयाङ्कगतं वृत्तम्। होत्री इत्यनेन कण्वः सूचितः। स च चतुर्थाङ्के आविर्भवति, शकुन्तलाञ्च पतिगृहे प्रेषयति। कण्व एव चतुर्थाङ्कस्य प्रधानः नायकः। कण्वस्यैव व्यवहारेण चतुर्थाङ्कगतः वात्सल्यरसः परां काष्ठामधिरोहते। तेनैव च काव्येषु नाटकं रम्यं तत्र रम्य शकुन्तला। तत्रापि च चतुर्थाङ्क इति वचनं सङ्गच्छते। तदेवं कण्वस्य सूचनेनैव समग्रमपि चतुर्थाङ्कतं वृत्तं सूचितं भवति। किञ्च ये द्वे कालं विधत्त इत्यनेन अनसूयाप्रियंवदयोः न साधारण्येन सूचनमपि तु दुर्वाससः सविधे शापान्तकालज्ञानं शकुन्तलां प्रति च "सखि यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत् ततस्तस्यैदमात्मनामधेयाङ्कितमंगुलीयकं दर्शय।" इति वचनेन शापान्तकालबोधनमिति उभयथापि चतुर्थाङ्कगतमेव वृत्तं सूचितम्। एवं क्रमप्राप्ततया "श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम्" इत्यनेन चतुर्थाङ्कोत्तर-

कालगतमेव वृत्तं सूचितं भवतीति अस्माकं प्रतिभाति। पञ्चमाङ्कस्यान्तिमे भागे राज्ञा भार्यारूपेणस्वीकृता सती शकुन्तला केनचित् स्त्रीसंस्थानेनोत्क्षिप्ता अप्सरस्तीर्थं नीता। तदनन्तरं स्वर्गपथे हेमकूटे मारिचाश्रमे स्थापिता। समग्रेऽपि षष्ठाङ्के नेयं प्रत्यक्षगोचरमायाति। अथ च मिश्रकेशीवचनाद् अंगुरीयकलाभोत्तरं दुष्यन्तवचनाच्च तस्या गुणराशिः केवलं श्रोतुमेव शक्यते न तु द्रष्टुम्। एवमेव दृष्टिविषयगुणा शकुन्तला श्रुतिविषयगुणा संजाता। अथ च मर्त्यं परित्यज्यान्तरीक्षे अप्सरस्तीर्थं प्रति नीता सा शकुन्तला विश्वं व्याप्य वर्तमाना इत्युच्यत इति श्रुतिविषयगुणेत्य-दिना पञ्चमषष्ठाङ्कगतमेव वृत्तं सूचितमस्तु। सर्वबीजप्रकृतिरित्यं **शस्यार्थ-द्योतनिकायां** "सर्वेषां बीजं मूलभूतश्चक्रवर्तित्वाद्भरतः। तस्य प्रकृतिरुत्पत्तिरिति भरतोत्पत्ति" रिति राघवभट्टः। अस्मन्मते राघवभट्टस्येयमपि कष्टकल्पनाऽनायासं परित्यक्तुं शक्यते। तथा हि श्रुतिविषयगुणेति यथा शकुन्तला परामृश्यते तथैव सर्वबीजप्रकृतिरित्यनेनापि शकुन्तलैव परामृश्यते। ततश्च सर्वो नाम सर्वदमनः भरतः। नामैकदेशेन नाममात्रग्रहणमिति न्यायेन। स चायं न्यायः महाभाष्य-कारोपज्ञ इति प्रतिभाति। तथा हि पाणिनीय १-१-४५ सूत्रस्य भाष्येऽभिहितम् "दृश्यन्ते हि वाक्येषु वाक्यैकदेशान् प्रयुञ्जानाः पदेषु च पदैकदेशान्। वाक्येषु तावद् वाक्यैकदेशान्। प्रविश पिण्डीम् प्रविश तर्पणम्। पदेषु पदैकदेशान्। देवदत्तो दत्तः सत्यभामा भामेति।" नामैकग्रहणस्योदाहरणं **नैषधे** यथा—

सभा नलश्रीयमकैर्यमाद्यैर्नलं विनाभूद्धृतदिव्यरत्नैः।

**भामाङ्कन** प्राघुणिके चतुर्भिर्देवद्रुमैद्यौरिव पारिजाते॥(१०-२४)॥ इति[3] सर्व इति पदेन सर्वदमनस्य ग्रहणेन भरतस्य शकुन्तलातनयस्य ग्रहणे "स्थाने खलु ऋषिजनेन सर्वदमन इति कृतनामधेयोऽसि" इति सप्तमाङ्कगतं तपस्विनी-वचनमपि प्रमाणत्वेनानुसन्धेयम्[3] एवं क्रमेण सर्वदमन एव बीजं सर्वबीजम्। तस्य प्रकृतिः जननी शकुन्तला। अर्थात् सप्तमाङ्के सर्वदमनस्य मातृरूपेणो-पलभ्यमाना शकुन्तलेत्यनेनापि क्रमप्राप्ततया सप्तमाङ्कगतमेव वृत्तं सूचितम्। "यया प्राणिनः प्राणवन्तः इत्यनेन भरतशकुन्तलया सह स्वपुरागमनम्" इति राघवभट्टः। सङ्गच्छते चायं क्रमप्राप्तः व्यङ्ग्यार्थः दुष्यन्तशकुन्तलयोः पुनर्मेल-नेन उभयोरुत्कण्ठानिरासेन सामाजिकानामप्युद्वेगनाशात् सर्वे प्राणिनः प्राणवन्त इत्यलमति पल्लवितेन।

---

3 विस्तरस्तु अस्मद्गुरुवर्यैः डा० क्षितीशचन्द्र चट्टोपाध्यायमहोदयैः सम्पादिते **महाभाष्यस्य** पस्पशाह्निकेऽवलोकनीयः (पृ० ५४-५६)

"अथ च येत्यादिसर्वत्र स्त्रीलिङ्गनिर्देशात्तनुभिः कृशाभिरिति समासोक्त्याष्टनायिकायुक्तनायकव्यवहारसमारोपात् शृङ्गाररसोऽपि व्यज्यते तत्प्रधानत्वादस्य रूपकस्ये" ति राघवभट्टस्य मतं नास्मभ्यं रोचते। अस्त्वत्र समासोक्तिः। तथापि धर्मिग्राहकमानसिद्धा शृङ्गाररसानुभूतिरत्र लेशतोऽपि न सम्भवतीत्यस्मत्पर्यनुयोगे सहृदया एव प्रमाणम्।

"स्रग्धरा छन्दः। म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्। अनेनास्य सप्ताङ्कत्वमपि सूचितम्।" इति सुनिपुणं निभालितं राघवभट्टेन। अस्माभिस्त्वेतदधिकमपि किञ्चिदाविष्कर्तुमिष्यते। तथाहि स्रग्धरा यथा त्रिमुनियतियुता तथा शकुन्तलाऽपि। कण्वः, दुर्वासा, मारीचश्चेति मुनित्रयेण शकुन्तलाजीवनस्य दशात्रयं यतित्रयं वा सूचितम्। कौशिकमुनेस्तु नाटके उल्लेखमात्रमस्तीति नाटकीयकथावस्तुसूचने न तस्य ग्रहणं सङ्गच्छते। परन्तु इदमत्रावधेयम्। राघवभट्टप्रदत्तं त्रिमुनिपदसमन्वितं स्रग्धरालक्षणं **छन्दोमञ्जर्या**मुपलभ्यते। कालिदासपूर्वेषु स्रग्धरालक्षणेषु मुनिपदं तत्पर्यायमपि वा नोपलभ्यते। **नाट्यशास्त्रे** पञ्चदशाध्याये स्रग्धरालक्षणे सप्तपदस्यैवोल्लेखः न तु मुनिपदस्य तत्पर्यायस्य वा। कालिदासविरचिते **श्रुतबोधे** तु मुनिपदस्य त्रिवारमुल्लेखः — येन च कालिदासस्याप्यभीष्टं त्रिमुनिपदेन तत्पर्यायेण वा स्रग्धरालक्षणगतेन नान्दीश्लोकसूचितेन काश्यपादिमुनित्रयसूचनम् इत्युन्नेतुं शक्यते।

चत्वारो यत्र वर्णाः प्रथममलघवः षष्ठकः सप्तमोऽपि
द्वौ तद्वत् षोडशाद्यौ मृगमदतिलके षोडशान्त्यौ तथान्त्यौ।
रम्भास्तम्भोरुकान्ते मुनिमुनिमुनिभिर्दृश्यते चेद्विरामो
बाले वन्द्यैः सुतनु निगदिता स्रग्धरा सा प्रसिद्धा॥

इति **श्रुतबोधे** कालिदासीयस्रग्धरालक्षणम्। यद्येतल्लक्षणं मनसि निधायैव कालिदासेन शाकुन्तलनान्दीश्लोके काव्यार्थसूचका व्यङ्ग्यार्थास्समुद्भाविता इति परिकल्प्यते तर्हि एतद् व्यङ्ग्यार्थान्तरमपि आविर्भवति यत् चत्वारो यत्र वर्णा इत्यंशेन ब्राह्मणा ऋषयः, क्षत्रियः राजा, वैश्यः सार्थवाहः धनमित्रः, शूद्रः धीवर इति चतुर्णामेव वर्णानामस्मिन् नाटके सम्भाव्यत इति।

अत्र तावदायात्येकः पर्यनुयोगावसरः। ननु कालिदासीय-**विक्रमोर्वशीये**ऽपि नान्दीश्लोकः स्रग्धरावृत्तावुपलभ्यत इति तत्रापि रूपकस्य सप्ताङ्कसमन्वितत्वं सूचितमस्तु इति चेदुच्यते—कवेरपरिणतावस्थायां विरचिते **विक्रमोर्वशीये** न तथा व्यञ्जनावैचक्षण्यं यथा तु परिणतावस्थायां विरचिते **शाकुन्तले**।

परिणतावस्थायां कालिदासेन विरचितेषु काव्येषु विशेषाभिप्रायेण छन्दसः प्रयोगस्य विद्यते प्रमाणम् । तथा हि मेघस्य मन्दगतिं सूचयितुमेव मन्दाक्रान्ताछन्दसि **मेघदूतं** विरचितमिति प्रतिभाति । तस्य मन्दाक्रान्ताछन्दसि प्रावीण्यं क्षेमेन्द्रेणापि **सुवृत्ततिलके** सुविवृतं यथा—

सुवशा कालिदासस्य मन्दाक्रान्ता प्रवल्गति ।
सदश्वदमकस्येव काम्बोजतुरगाङ्गना ।। (३-३४)

किञ्च **कुमारसम्भवे रघुवंशे** च वर्णनीयविषयवैशिष्टचानुरोधेन छन्दोविशेषं प्रयुंक्ते कालिदासः । तद्यथा देवतास्तुतिप्रार्थनादिषु श्लोकछन्दः **कुमारे** द्वितीयसर्गे चतुर्थतः षोडशश्लोकपर्यन्तम् । **रघुवंशे** च दशमे सर्गे षोडशश्लोकतः द्वात्रिंशच्छ्लोकपर्यन्तम् । मृत्युवर्णने विलापवर्णने वा वियोगिनीछन्दः यथा **कुमारे** चतुर्थसर्गे रतिविलापे **रघुवंशे** चाष्टमसर्गे अजविलापे । विलापवर्णने वियोगसूचकस्यान्वर्थनामधेयस्य वियोगिनीछन्दसः प्रयोगादेव विस्पष्टमेतत् प्रतिभाति यत् छन्दसः नामलक्षणे समीक्ष्यैव वर्णनीयविषयानुरूपतयैव छन्दः प्रयुंक्तेऽयं कविकुलललामभूतः कालिदास इति ।

स्रग्धरेति छन्दोनाम्नः अपरमपि तात्पर्यमस्माभिरनुमीयते । तथा हि स्रक् नाम पुष्पमाला । सग्धरा सा भवति या शोभनाङ्गी पुष्पमालां धारयति एवं कवेरियं शाकुन्तलं नाम कृतिरपि अनन्यसाधारणमाधुर्यवती पुष्पमालावत् कोमलकान्तभावादिसमन्विता ।

या सृष्टिः सष्टुराद्येति वाक्येनाऽपि सार्थकभावेन काव्यप्रारम्भः कृतः । स्रष्टुराद्या सृष्टिः यथा सर्वोत्कृष्टसौन्दर्याधारभूः तथैव कवेरियं प्रारभ्यमाणा सृष्टिः शाकुन्तलं नाम । "अपारे काव्यसंसारे कविरेव प्रजापतिरिति आनन्दवर्धनवचनानुसारं कविः स्वयमेवात्र स्रष्टा । स च या सृष्टिः स्रष्टुराद्या इत्यनेन प्रशंसति । एवमपरेऽपि कवयः स्वस्वकृतिष्वेव व्यञ्जनाबहुलभणितिभिः स्वकीयकविकर्मप्रशंसां विदधति । तद्यथा— "अहो सरसरमणीयता संविधानकस्य" **मालतीमाधवस्य** षष्ठाङ्के भवभूतिः । "अहो संविधानकमिति भवभूतेरेव **उत्तररामचरिते** तृतीयाङ्के । "नवमिव संविधानकम्" इति **मृच्छकटिकायां** प्रथमाङ्के शूद्रकस्य । तत्रैव "चतुरो मधुरश्चायमुपन्यासः" । एवं सर्वथा इच्छाकृतभावेनैव स्वकीयकाव्यसौन्दर्यसूचकेन या सृष्टिरित्यनेन निजनाटकं प्रारभ्यते कविकर्मकुशलेन कालिदासेन[4] ।

4. अयन्निबन्धोऽलीगडविश्वविद्यालयेऽखिलभारतप्राच्यविद्यामहासम्मेलनस्य त्रयोविंशाधिवेशने पण्डितपरिषदि वाचितः ।

# यतीन्द्रस्यानुसन्धानप्रवृत्तयः

कु० मनोरमा सक्सेना

डाक्टर यतीन्द्रविमलचतुर्धुरीण उच्चकोटिकोऽनुसन्धानकर्तासीत् । विद्यार्थिकालात्प्रभृति तस्यानुसन्धानप्रवृत्तिः सविशेषमासीत् । सन् १९३० वर्षादारभ्य तेन शोधकार्यं प्रारब्धम् । स्नातकपरीक्षोत्तरणानन्तरमुच्चशिक्षाप्राप्त्यर्थं इंगलैण्ड-देशवासकाले स एम. ए. उपाधेर्हेतोः "वैदिकयुगे स्त्रीणां स्थितिः"[1] इति शोधनिबंधं लिखितवान् । शनैः शनैः अनुसन्धानकार्याय तस्याभिरुचिरवर्धत । पश्चात् सन् १९३४ ई० वर्षे पी. एच. डी. उपाध्यर्थं स "वैदिकधार्मिककृत्येषु स्त्रीणां स्थितिः"[2] विषये लन्दनविश्वविद्यालयस्य संस्कृतविभागस्य प्राध्यापकस्य डा. सी. आर. रायलैण्डस्महोदयस्याध्यक्ष्ये शोधप्रबन्धं लिखितवान् ।[3] स्वगवेषणात्मकधिया नैकग्रन्थान् विरचय्य सोऽभिनवज्ञानपरिधिषु जनतायाः प्रज्ञां समाकर्षत् । डा० चतुर्धुरीणकृता गवेषणग्रन्था अधोनिर्दिष्टाः सन्ति—

१. संस्कृतसाहित्ये नारीणां योगदानम्, सप्त भागाः ।[4]
२. संस्कृतसाहित्ये महम्मदीयानां योगदानम् । त्रयो भागाः[5]
३. संस्कृतसाहित्याय महम्मदीयशासकानामाश्रयः, त्रयो भागाः ।[6]

---

1 'The Position of Women in Vedic Age.'
2 'The Position of Women in Vedic Ritual.'
3 डा० चतुर्धुरीणस्यायं शोधग्रन्थः 'इन्डियन हिस्टोरिकल क्वार्टरली' पत्रिकायाम्, 'न्यू इन्डियन एन्टीक्वैरी' पत्रिकायाञ्च लेखमालारूपेण सन् १९३९ ईसवीतः १९४१ ईसवीपर्यन्तं प्रकाशितोऽभूत् ।
4 Contribution of Women to Sanskrit Literature. 7 vols.
5 Contribution of Muslims to Sanskrit Learning. 3 vols.
6 Muslims' Patronage to Sanskrit Learning. 3 vols.

४. स्मृतिसाहित्ये वंगदेशस्य योगदानम् । त्रयो भागाः ।[1]

५. संस्कृतकोषकाव्यसंग्रहः, सप्त भागाः ।

६. संस्कृतदूतकाव्यसंग्रहः, सप्त भागाः ।

७. वंगीयदूतकाव्येतिहासः ।

८. संस्कृतसाहित्ये ऐतिहासिककाव्यानि, चत्वारो भागाः ।

डा० चतुर्धुरीणः सम्पादनस्य वैज्ञानिकीं प्रणालीं गृहीतवान् ।[2] पुस्तकानां सम्पादनाय तेन सर्वासां प्राप्यप्रतिलिपीनां सम्यग्रूपेणाध्ययनं कृतं तासु प्राप्तानां विभिन्नपाठानां टिप्पणञ्च कृतम् । स हस्तलिखितप्रतिलिपिभ्यः समीचीनं मूलपाठं संशोधनपद्धत्या लिखितुं विशेषश्रममकार्षीत् । ग्रन्थानां प्रारम्भे विस्तृतप्रस्तावनां प्राक्कथनं च पुरस्कृत्य पुस्तकसम्बद्धविषयानाङ्ग्लभाषया स्पष्टीकृतवान् । तेन पुस्तकान्ते परिशिष्टशब्दानुक्रमणिकासन्दर्भग्रन्थसूच्यादीनि निहितानि । स स्वसम्पादितेषु ग्रन्थेषु सर्वासां हस्तलिखितप्रतिलिपीनां पाठान् निर्दिष्टवान् । सम्पादितग्रन्थेषूल्लिखितानां पुरुषाणां, स्थानानाञ्च तथात्वं निर्धारयितुं गवेषणां कृतवान् ।

अस्मिन् निबन्धे संस्कृतसाहित्ये नारीणां योगदानमिति विषयस्य विवेचनं प्रस्तूयते ।

डा० चतुर्धुरीणो मातृशक्तेरुपासक आसीत् । तस्य हृदये नारीजातिं प्रति विशेषसम्मान आसीत् । स नारीणां विषये विविधरचनाभिः स्वकीया-

---

1 Contribution of Bengal to Smṛti Literature. 3 Vols.

2 "So far as the editing is concerned, we must say that it leaves nothing undone. Dr. Chaudhuri has already edited so many unpublished manuscripts that he may well be looked upon as an expert in this line of work. He has thoroughly mastered the technique of dealing with manuscript materials.

..............Dr. Chaudhuri's edition is so helpful to the reader that even if one does not care to read the original Sanskrit, one can easily be acquainted with the subject-matter of the book by glancing at a full summary of it given in the beginning of the book.

..............Dr. Chaudhuri possesses a place in the world of research and scholarship and we congratulate him on his rapid rise." The Modern Review, 1941, July.

दरभावनां व्यञ्जितवान् । "वैदिकधार्मिककृत्येषु स्त्रीणां स्थितिः" इत्यस्मिन् ग्रन्थे तेन प्रतिपादितं यत् वैदिककालाद् अस्माक देशे स्त्रीणां स्थानमुत्कृष्टमासीत् । स्त्रियः परामर्शदात्र्य आसन् । तासां पावनत्वं, दिव्यगुणसम्पन्नत्वं च वैशिष्ट्यं तत्र दर्शितम् । संस्कृतग्रन्थानां लेखिकाः सर्वेषु युगेष्वासन्, सन्ति च । न केवलं काव्यसाहित्यमपितु ज्योतिषादिविषयानधिकृत्य स्त्रीणामुत्कृष्टा रचनाः सन्ति । तासां स्त्रीणां प्रतिभा बहुमुखी आसीत् । काव्येन सह गायनवादननृत्यादिललितकलासु तासां व्युत्पन्नत्वं सुसिद्धमेव ।

'संस्कृतसाहित्ये नारीणां योगदानम्' इति ग्रन्थस्य प्रथमे भागे डा० चतुर्धुरीणः संस्कृतकवयित्रीसुन्दरीकमलाभ्यां विरचितं 'चमत्कार-तरङ्गिणी'-पुस्तकं सम्पाद्य इमे कवयित्र्यौ सस्कृतसाहित्येतिहासे प्रतिष्ठापितवान् । 'चमत्कार - तरङ्गिण्यां' राजशेखरस्य विद्धशालभंजिकायाः समीक्षा वर्तते ।

'संस्कृतसाहित्ये नारीणां योगदानम्' इति ग्रन्थस्य द्वितीयभागे डा० चतुर्धुरीणेन प्राचीनमध्यकालयोः त्रयस्त्रिंशत्कवयित्रीणां, तासां काव्यानाञ्च परिचयो विहितः । स संस्कृतलेखिकाभिः सह प्राकृतभाषायाः कवयित्रीणामपि नामानि संगृहीतवान् । अस्यां कृतौ संस्कृतकवयित्रीविरचितानां १४० श्लोकानां संकलनं वर्तते । ग्रन्थोऽयं त्रिखण्डेषु विभक्तः । प्रथमे भागे डा० चतुर्धुरीणस्य पत्नी डा० रमा चतुर्धुरीणा आँग्लभाषायां प्रस्तावनां लिखितवती, यस्यां लेखिकानां जन्मकालवंशपरम्पराविचारधाराकृतीनां च विषये उल्लेखो वर्तते । द्वितीयखण्डे डा० चतुर्धुरीणः संस्कृतप्राकृतकवयित्रीणां काव्यानां प्रमुखश्लोकान् संकलितवान् । तृतीयखण्डे श्रीमती रमाचतुर्धुरीणः आँग्लभाषायां श्लोकानामनुवादं कृतवती । ग्रन्थस्यान्तिमे भागे डा० चतुर्धुरीणेन परिशिष्टशब्दसूचीसन्दर्भग्रन्थसूचयो दत्ताः । अस्य ग्रन्थस्य सम्पादनेन डा० चतुर्धुरीणः विद्वद्वराणां प्रशंसास्पदमभवत् ।[1]

'संस्कृतसाहित्ये नारीणां योगदानम्' इति पुस्तकस्य तृतीयचतुर्थभागयोः

---

1 "We congratulate Dr. Chaudhuri and his eminent partner in life Dr. Mrs. Roma Chaudhuri on the production of this scholarly volume edited in a scientific manner which should attract not only lay readers but also Sanskritists to the enchanting field of their study."Review published in "Annals of the Bhandarkar Oriental Research Institute." Vol. XX Parts III-IV, pp. 331-333.

डा० चतुर्धुरीणेन वीनाबाईरचित–'द्वारका-पत्तलम्' विश्वासदेव्या च कृता 'वाक्यावली' इति ग्रन्थयोः सम्पादनं कृतम् । वीनाबाई सन् १५१८ ई० वर्षे 'द्वारकापत्तलं' लिखितवती । अयं पौराणिको ग्रन्थोऽस्ति । अस्य सम्पादनेन डा० चतुर्धुरीणस्य साध्यमासीत् यत् सकलविद्यापारङ्गताः भारतीयनार्यः धार्मिकपौराणिकविषयेषु निष्णाताः सन्ति । वीनाबाईविरचितद्वारका-पत्तलं पुराणानुसारी ग्रन्थः एक एव स्वकोटिकम् । 'गंगावाक्यावली' शकसंवत्सरे १५९६ वर्षे मिथिलानरेशशिवसिंहस्य भ्रातुः पद्मसिंहस्य पत्न्या विश्वास-देव्या विरचितः स्मृतिग्रन्थोऽस्ति । अस्य ग्रन्थस्य सम्पादनं सर्वप्रथमं डा० चतुर्धुरीणेनैव कृतम् । अस्मिन् मूलपाठानुसारिणी ग्रन्थारम्भे प्रस्तावना लिखिता । तत्र नदीपर्वतनगराणामैतिहासिकनामभिः सह टिप्पण्यां तेषां नवीनानि नामानि अपि दत्तानि । पुस्तकस्यान्ते अनुक्रमणिका, पंच शब्दसूचयः, संक्षिप्तशब्दरूपाणि च विद्यन्ते ।

'संस्कृतसाहित्ये नारीणां योगदानम्' इति पुस्तकस्य पंचमभागे डा० चतुर्धुरीणः प्राणमञ्जरीविरचित'तन्त्रराजतन्त्रम्' इत्यस्य पुस्तकस्य सुदर्शनटीकया सह सम्पादनं कृतवान् । अत्र डा० चतुर्धुरीणेनेदं प्रतिपादितं यत् स्त्रियो न केवलं काव्यमहाकाव्यनाटकानां विरचने एव निष्णाता अपितु तन्त्रादि-गूढविषयेष्वपि तासां रचनानैपुण्यमासीत् । अस्य ग्रन्थस्य सम्पादनस्य वैज्ञा-निकतामधिकृत्य समालोचकाः डा० चतुर्धुरीणं भृशं प्रशंसितवन्तः ।

'संस्कृतसाहित्ये नारीणां योगदानस्य' षष्ठभागे डा० चतुर्धुरीणः देव-कुमारिकाकृत–'वैद्यनाथप्रसाद - प्रशस्तिः' लक्ष्मीराज्ञया च विरचितं 'सन्तान-गोपालकाव्यम्' इत्यनयोः ग्रन्थयोः सम्पादनं कृतवान् । 'वैद्यनाथप्रसादप्रशस्ति'-काव्यस्य रचना संवत् १७७२ वर्षे अभवत् । अस्य लेखिका देवकुमारिका राज्ञः अमरसिंहस्य पत्नी, जयसिंहस्य पुत्रवधूः चित्तौडनृपसंग्रामसिंहस्य मातासीत् । 'सन्तानगोपालकाव्यम्' १६०० ई० वर्षे विरचितम् । डा० चतुर्धुरीणेन ग्रन्थे विद्यमाना विशेषा घटनाः टिप्पणीभिर्लिखिता । मूलग्रन्थस्य समास-युक्तशब्दान् सम्पादिते ग्रन्थे समस्तचिह्नानि दत्त्वा सुबोधाय पृथक् पृथक् लिखि-तवान् । व्यक्ती नांनामानि विशालस्पष्टाक्षरेषु अङ्कितानि।

'संस्कृतसाहित्ये नारीणां योगदानस्य सप्तमभागे डा० चतुर्धुरीणः लक्ष्मी-देवीपायगुण्डाविरचितं 'काल-माधव-लक्ष्मी'ग्रन्थं सम्पादितवान् ।

# श्रीकृष्णलालः तस्य शिञ्जारवश्च

## श्रीमती माया पाठक

एकषष्टिसंख्याककवितासंग्रहोऽयं शिंजारवाख्यः श्रीकृष्णलालेन विरचितः।[1] दशवर्षाभ्यन्तरे निर्मितानि विविध विषयाश्रितानि मुक्तछन्दस्सु सरसभावगुम्फितानि गीतानि अस्मिन्नवीनसंग्रहे विद्यन्ते।

## लेखक-परिचयः

डा० कृष्णलालस्याण्डमानद्वीपे खिष्टाब्दे १९३३ तमे २० नवम्बरे जनिः। ईशाब्दे १९६५ कविना दिल्लीविश्वविद्यालयतः "A Critical Study of Gṛhya Mantras with Special Refrence to their Ritual Application" नाम्नि प्रबन्धे पी. एच. डी. उपाधिमधिगतवान्। सम्प्रति डा० कृष्णलालो दिल्ली-विश्वविद्यालयान्तर्गत - पन्नालाल - गिरधरलाल-दयानन्द-एंग्लो-वैदिकमहाविद्यालये १९५७ ईशाब्दात् अध्यापयति। अस्य कवेः 'शिंजारवः' नाम्नः गीतिकाव्यस्यालोचनात्र प्रस्तूयते।

## प्रेमगीतिः

कविना प्रकृतिसौन्दर्यस्यालम्बनं कृत्वा कतिपयानि प्रेमगीतानि संरचितानि। तस्य मनसो क्षणिकरतिभावा मुक्तछन्दःसु संगुम्फिताः सन्ति। स्त्रीसौन्दर्येणोद्भूता सहजाभिव्यक्तिरस्मिन्नास्ति।

'केशप्रसाधनम्' इति गीतिः कवेर्हृदयस्य विविधकल्पनानामुद्बोधिकाऽस्ति। कविरत्यन्तं भावाकुलहृदयेन प्रियां केशप्रसाधनान्निवारयति निवेदयति च

'अकाल इव हन्त
मम नेत्रयोराकाशे

---

[1] प्रकाशक-वासुदेव प्रकाशन, (१९६५) माडल टाऊन, दिल्ली-९

आच्छादितो भवति जीमूतो
मयूरश्च नृत्यतीव बर्हैः
स्फुरितरुचिभिः प्रसारितैर्
घनेषु निभृत इव दृश्यते मुख-चन्द्रमाः ।'

कविः प्रकृतेरानंदमयसम्मिलनं वैपुल्यं च हृदयंगमं कर्त्तुमिच्छति । 'प्रकृते-राह्वानम्' इति गीते यथा—

'वनेषु वाता वहन्ति सुखदा
आह्वयन्ति ते शृणु आह्वानम् ।
सङ्गीतमेतत् प्रकृतेर्मधुरम्
एहि तया सह क्रियतां गानम् ॥'

विप्रलम्भ-शृंगाराश्रिताः कतिपया गीतयः सन्ति । तत्र रसस्य पूर्णपरिपाको न दृश्यते । विरहभावना तदानुभूतिगम्याभवत् यदा वसन्तसमीरः किसलयपरागः खगगुंजनं विविधवर्णाः कुसुमबालास्मितेङ्गितकम्पनानि कविमाह्वयन्ति । प्रिया दूरंगता वर्तते परं तस्या प्रतिबिम्बं विस्तृतसंसारे दृष्टिगम्यमस्ति यत्—

'यतो न त्वद्विना सौन्दर्यकल्पना
कथं रे स्यादयि मोहिना
तृप्तिः सौन्दर्येण त्वद्विरहितेन ।
दहति मम चेतो निराधारं
किं करोमि कथं जीवामि ॥"

'कथं जीवामि' मात्र कथयित्वा कविः स्वचरमवेदनाया अभिव्यक्ति करोति ।

## प्रकृतिसम्बन्धिगीतिः

काव्येऽस्मिन् प्रकृतिगीतय एव हि प्रायशः सन्ति । प्रकृतेरालम्बनोद्दीपन-रूपयोः सम्यक् वर्णनं कृतम् । कविना हिमकिरीटनगराजहिमालयस्य वैभव-सौन्दर्यस्यालौकिकताया वर्णनं सुष्ठु कृतम् । नीलमेघहरितशैलानां मध्ये जलधारा माला इव दृश्यन्ते । सन्ध्याकाले रुचिरदृश्यं कविमनसि विभिन्नकल्पना उत्पादयति यथा—

'सान्ध्यप्रभा ताम्रवर्णा घनेभ्यो
लज्जाऽवगुण्ठागता तरुण्या ।

अद्रेर्मुखे भाति तेजोमये सा
भर्तुर्मुखे नु प्रतिबिम्बितेव ॥"

वर्षाकाले उड्डीयमाना मेघाः पर्वतस्य पृथिव्याश्च शोभां वर्धयन्ते।

"अद्रेः कदा मेखलीभूय पश्चात्
तस्यैव वक्षः प्रदेशे नद्रीव—
स्थित्वा पुनश्चापि उच्चैर्विशङ्कम्
शृङ्गे च भृङ्गं द्वितीयं विभाति।"

'हिमप्रसारः' इति शीर्षकेण चन्द्रकिरणद्युतीनां श्वेतहिमशिखराणां राजतानां किरीटैः समं वर्णनं विद्यते। हिमप्रसारस्यान्यादृशं वर्णनमनेनप्रकारेण करोति कविः—

'घनद्रुमैः श्यामभूते गिरौ सा
आकुञ्चिता यस्य रेखा विभाति।
प्रिये तव श्यामवेण्या कृतेव
सुकोमल – नूतना कुन्दमाला।"

'न जायते तृप्तिः' गीतौ कवेः प्रकृतिं प्रति एकात्मकता प्रतीयते। विशालं गगनं कलकलं कुर्वन्ति स्रोतांसि, विशालतरूणां सौम्यत्वं पुष्पिता धरणी च सुकुमारभावान् स्वतन्त्रविचारानुत्पादयन्ति। पथप्रदर्शको निष्यन्दो हृदये रागं प्रसूयते। हिमशिखराणि गृह-गवाक्षान्निरूपयतः कवेर्मनः कल्पनापूरितं जायते।

"प्रतिपल्लवमविज्ञात इव कश्चित्
प्रकृति—कामिन्याः सन्देश उद्घाटितो मे
सम्मोहित इव च तमवेक्ष्य
भिन्नानि रूपाणि द्रष्टुं प्रकृत्याः
गतवान् शिखराणि नदीतटानि, विततांश्च मार्गान्
परं किं करवाणि
तृप्तिर्न जायतेऽधुनापि।"

प्रकृतेरुपादानानि मनसो विविधस्थितिषु विभिन्नप्रतिक्रिया उत्पादयन्ति। सुखेषु जगत् हसन्नृत्यन्निव दृश्यते। यथा 'सर्वो मनसो व्यापारः' इति कवितायां कविः स्वमनसो भावं प्रकटयति।

परन्तु शुचमापन्ने मनसि
तान्येव पुष्पाणि भवन्ति शूलानि,
सरितो वहन्ति यथाश्रुधाराः,

धुन्वन्ति शीर्षं निर्झराः
शिलासु मर्माहता यथा–दुःखं महत् ।'

## देशभक्तिगीतिः

कविना देशभक्तिपूर्णा बहवो ओजःपूर्णा वीररसाश्रिता गीतयो रचिताः । कविर्देशे जन्ममरणलाभस्य वरं शारदां याचते, न तु किंचित् स्वर्गसुखं वांछति । काव्येऽस्मिन् देशभक्तिपूर्णकवितासु देशं प्रति पूज्यभावना प्रदर्शिता । अतीतवैभवं शूरवीरहुतात्मनश्च प्रति स सम्मानं प्रकटीकरोति । देशस्य कणे कणे सौन्दर्य-निरूपणं तस्य प्राकृतिकगरिम्णः विभूतेश्चोल्लेखः सुप्तदेशस्योद्बोधनगीत्या उत्थापनञ्च देशभक्तिपरक– कवितानां विषयाः सन्ति । 'उद्बोधनम्' इति कवितायां भारतमातुः वर्णनमित्थमेवास्ति ।

'यदीयरुण्डमुण्डशोणितास्थिपुञ्जतर्पिता
यदीयसिंहनादतुल्यकण्ठनादगुञ्जिता ।
यदीयतुङ्गबाहुदण्डधैर्यशौर्यगर्विता
यदीयस्नेहदीपिता विराजतेऽद्य मातृभूः ।'

राष्ट्रवीराणां देशभक्तानाञ्च वारंवारं स्मरणमुचितमेवास्ति । देशवासिनो बालगंगाधरतिलक शिवापटेलप्रतापसुभाषगान्धिपंजाबकेसरिभक्तसिंहचन्द्रशेखरांश्च स्मरेयुः । तेषां वलिदानानि देशसमृद्धेर्हेतोः प्रशंसति कविः यथा—

'तदुत्थिता वयं निजे हि कार्यभारवाहने
भवेम दत्तमानसाश्चलेम सत्पथे सदा ।
समृद्धिमेतु येन देश एष गौरवात्मको
मुदा च यत्समुल्लसन्तु, पूर्वजा युधि स्थिराः ।।'

केनचित् सम्यक्कथितं यत् स्वतन्त्रताप्राप्तिः सरला न तु तस्या रक्षा । अतएव स्वालम्बन–परिश्रमधैर्याणि देशरक्षायाः सर्वोत्कृष्ट–साधनाः सन्ति । जागरणस्य भावनायाः पोषणं सर्वेषां कवीनां कर्तव्यमस्ति । 'चल सुपुत्र' कवितायामित्थमेव भावः प्रदर्शितः । तद्यथा —

'इयं स्वतन्त्रता त्वया
पूर्वजश्रमार्जिता
दुःखे सुखेऽसुभिः सदा
रक्ष्यतां विपद् यदा ।

देशस्वातन्त्र्यहननोदयतो यदि कश्चिद्देश आक्रमणं करोति तदा कविरेवालसान् जनान् जागरयति । 'उद्बोधनम्' गीते यथा—

'अशेषमातृभूमिरक्षणव्रते स्थिरो भव
भव प्रबुद्धमानसो न शोभते हि विभ्रमः ।
यदा कृतघ्न-लम्पटः प्रवृद्धशक्तिराक्रमं
रिपुस्तनोति सीमसु प्रचण्डज्वालवह्निवत् ॥'

रोषपूर्णः कविराक्रमणकारिचीन-रिपूणां नाशाय प्रतिज्ञां कारयति । यद्यपि भारतीया उपनिषदादि-मतानुयायिनो विश्वबन्धुत्वभावनायाः पोषकाश्च सन्ति, परन्तु जनन्या अपमानं सोढुं न शक्ताः । उग्रतरं कविर्गर्जति—

यदि सगरलनेत्रः कश्चिदेतां विमूढो
गतनिजभवचिन्तः पश्यति प्राणभूताम् ।
सपदि समरभूमौ लब्धगीतोपदेशाः
कुपितरुधिरनेत्रास्तस्य नेत्रे खनामः ॥
पदमपि यदि कश्चिद्वर्धते तां जिघृक्षुर्-
युगपदखिलविश्वं कम्पयामः पदेन ।
शिरसि दुरभिवृत्तं तं प्रहृत्य क्षणेन
गहनमिव भुवोऽधश्चूर्णितं प्रापयामः ।" (५२ पृष्ठ)

## भावगीतिः

विवधाभिनव-विषयभावाश्रिता गीतयो भावगीतान्तर्गता वर्तन्ते । कविः प्रकृत्या उन्नतेः प्रेरणां स्वीकरोति । विजनवनप्रान्तस्य दिवानिशं झरझरं कुर्वन्निष्यन्दः कविं सम्बोधयति —

'रूपं चपलं धृत्वा धावन्
फेनैर्विशदं हासं कृत्वा ।
बोधयतीव कुरु त्वं कार्यं
सहस्व क्लेशमपीह ॥'

'परिवर्तनम्' कवितायां परिवर्तनस्य मानवीकरणं यथावत् सुष्ठु — प्रकारेण भवति । तस्य परिवर्तनस्य विश्वव्यापिनी शक्तिः हासयति रोदयति च विश्वम् । अन्यत्र 'परिवर्तनम्' स्वयं कथयति यथा—

'मामैतिहासाः परिवर्तनमाहुः

अहं शाश्वतोऽहं महाकाल एव
भवामि तावत् पुनः सृष्टि–हेतुर्
नवं प्रियं मे पुराणं न किञ्चित ॥'

सौंदर्य किम् ? सौन्दर्यमनुभवस्य वस्तवस्ति । कंकाले ऽपि सौंदर्यं वर्तते यथा कविः 'कंकालस्यः सौंदर्यम्' कवितायां वर्णयति —

'न गोपनीयं न चापि रक्ष्यं
न चास्य झंझावातैर्हानिः ।
आत्मनिश्ठो योगीव सिद्धः
परं नैश्चिन्त्यमहो समाधिः ।'

कस्यापि सौंदर्यं स्वकीयेनोपकारेण महदस्ति । कंकालतरुः तपस्वी रूपेण दृश्यते—

'प्रसार्य बाहूनहर्निशं यः
तप इवाचरत्युन्मुक्तः सन् ।'

समाहितः कविः कर्मगानं करोति । तस्य चेतना श्रमिकचेतनया सह विचरति । कविरद्य श्रमिकवर्गस्य चित्रणं करोति तस्योत्थानस्याकांक्षा करोति । "लोहघनस्य संगीतम्" कवितायां कवि लोहघनकारस्य कर्मकौशलं श्रमशीलतां श्रद्धधाति, यथा—

'अहो घनजातमिदं सङ्गीतम् ।
बद्धं येन मनो मनुजस्य
करोति लौहं सजीवमेव
सृजति यदिच्छति तदपि सकुशलम् ।

## शोकगीतिः

कविना श्रद्धाभाजं प्रातःस्मरणीयं विवेकानन्दं प्रति स्वकीया श्रद्धा इत्थं व्यक्तीकृता ।

'वयं प्रतिबोधिता येन स्वतन्त्रसुखहेतवे ।
ब्रह्मचर्यप्रकाशाय महते तेजसे नमः ॥'

तेन विवेकानन्देन भारतीयदर्शनविश्वशान्त्योः सम्यक् प्रचारः कृतः । तस्य महत्ता सर्वविदिता । मार्गदर्शिका तस्य वाणी ।

लालालाजपतरायो धर्मजातिगतभेदान्दूरीकर्त्तुं प्रयत्नमकरोत् । स्वातन्त्र्ययुद्धे राजपुरुषाणां दण्डैर्हतः स प्राणानत्यजत् किन्तु तस्य मरणं भारतस्वतंत्रताया उद्घोषोऽभवत्, यथा—

'यदीयमृत्युराङ्ग्लशासनस्य मृत्युरुच्यते
वचः प्रबुद्धभारतं हि यस्य प्राज्वलत्तदा ।
स्मृतिश्च यस्य जीवितान् करोति न पुनः पुनः
जयत्यहो जयत्यहो स पञ्चसिन्धुकेसरी ॥'

**कलात्मकभावाः**

मुक्तछन्दस्सु रचितासु रचनासु माधुर्यगुणस्य प्राधान्यं वर्तते । अभिव्यक्तेर्नवीनतास्मिन्काव्ये वर्तते, विविधमनोरमविषयाः सन्ति च । क्वचिद्देशवासिभ्यः स्फूर्तिप्रदोद्बोधनानि क्वचिद्राष्ट्रातीतस्य मधुस्मृत्या देशवन्दना क्वचिच्च कवेरात्माभिव्यक्तेर्हृदयग्राहिमधुरकल्पनाया रमणीयता च सन्ति । काव्ये भावात्मकसर्जना वर्तते । यथा—

'विजने वने तपस्विन इव तिष्ठथ
किमभीष्टं वो न जाने ।
सहध्वे क्लेशान् नैकविधान्
झंझावातम्
तुषारपातम् घोरवृष्टि
वितरथ - छाया सुरभिम् ।'

शिञ्जारवस्य शब्दाडम्बरहीनोदात्तभावोद्बोधिका काव्यभाषा सरला प्रवाहपूर्णा लघुसमासाश्रितास्ति । गीतौ लयस्य समुचितप्रवाहो दृश्यते । यद्यपि कविना मुक्तछंदांसि समाश्रितानि ।

प्रकृतेर्वर्णने कवेरत्यन्तोदारा दृष्टिरस्ति । तेन प्रकृतेः सुकोमलपक्षा वर्णिताः' मानवीकरणं प्रकृतेरपि सुष्ठु प्रकारेण सम्पादितम् । यथा 'कंकालस्य सौन्दर्यम्' 'देवदारवः इति गीतिद्वये ।

दिगम्बरस्य भो यत् सौन्दर्यं
तरुं पृच्छ तत् पत्रविहीनम् ।
प्रसार्य बाहूनहर्निशं यः
तप इवाचरत्युन्मुक्तः सः ।'

अलंकाराणां बाहुल्यमस्मिन् काव्ये न दृश्यते किन्तूदात्तभावस्य हृदयपक्षस्य च विशिष्टता वर्तते । देशभक्तिपूर्णकवितासु ओजःपूर्णोत्साहभावमुद्वेलयति । संपूर्णकाव्ये माधुर्यगुणः प्रसादश्च दृश्येते । स्वानुभूतिः, भावबहुलता, गेयता, मुक्तछन्दः नवीनविषयाश्च शृंगार-वीररसमयेऽस्मिन्काव्ये सविशेषं विराजन्ते

# सदाशिवकवेर्गीतिकाव्यानि

## कु० कृष्णा खरे

सदाशिवः कविः केरलप्रदेशान्तर्गतकोटिलिङ्गपुरे १८०० ई० वर्षे समजायत ।[1] अस्य महाकवेः पिता कुट्टीतम्पूरत्ती वेलङ्गनूरस्य इलक्कूऋषिकुलस्य नम्बूदीरी ब्राह्मण आसीत् ।[2]

श्रीवलप्पीलमहोदयेभ्यः सदाशिवः प्रारम्भिकीं शिक्षामलभत । अरूरमाधवन–अत्तिरी–श्रीपन्तूलम्–सुब्रह्मण्यशास्त्रिमहोदयस्तं व्याकरणज्योतिषहस्तिविधि-विद्यादीनामध्ययनमकारयत् । सम्यगधीत्य शास्त्राणि सदाशिवो बहून् ग्रन्थान् रचितवान 'कविसार्वभौम' इत्युपाधिना समलंकृतश्च ।

सदाशिवस्यापरनाम्नी गोदावर्म्मयुवराजः, 'इल्यातम्पूरं' चेत्यास्ताम् । गोदावर्म्मयुवराजो 'युवराजः' इति संक्षेपेण कथ्यते ।

डाक्टरकृष्णमाचार्य–मतानुसारं श्रीपादसप्तकस्तोत्र-मुररिपुस्तोत्र-सुधानन्दलहरीति गीतिकाव्यानां रससदनभाणस्य च कर्त्ता गोदावर्म्मयुवराजोऽस्ति ।[3] एल० डी० बार्नेटमहोदयः 'रससदनभाणस्य' रचियता 'युवराज' इति नाम्ना प्रख्यातं सदाशिवं मन्यते ।[4] परं तस्य मतं न स्पष्टम् यत् 'सदाशिव' इति नाम तेन कुतो गृहीतम् ।

पुण्यपत्तननगरस्य काव्येतिहाससङ्ग्रहे युवराजकवेः श्रीपादसप्तक-मुररिपुस्तोत्र - सुधानन्दलहरी - त्रिपुरदहनचरितकाव्यानि प्रकाशितानि ।[5] कविः

---

1 Kerala Contribution to Sanskrit Literature K. Raja, p. 247-49

2 आधुनिक संस्कृतसाहित्यानुशीलनम् सागरविश्वविद्यालयः सागरम् पृष्ठ ४८ वि० सं० २०२२

3 History of Classical Sanskrit Literature. Dr. Krishnamacharya page 664

4 Review of the 'रससदनभाण' Journal of Royal Asiatic Society. 1907. p. 722.

5 काव्येतिहाससंग्रह - भाग - १३ । १८८८ ई० प्रकाशनस्थल - पूना

'हेत्वाभासोदाहरण - श्लोका:' 'सादाशिवी चेति द्वौ ग्रन्थौ सदाशिव—नाम्ना लिखितवान् ।

डाक्टर के० के० राजमहोदयैः युवराजकृतानां ग्रन्थानामुल्लेखः कृतः ।[1] तेनोल्लेखेन ज्ञायते यत् सादाशिवीहेत्वाभासोदाहरणश्लोककाव्ययोः कर्त्ता तथा श्रीपादसप्तकस्तोत्र-मुररिपुस्तोत्र-देवदेवाष्टककाव्यानां रचयिता युवराजः कविरेवासीत् । अतो युवराजस्यैव द्वितीयं नाम 'सदाशिवः' सिद्धम् ।

युवराजेन स्वपरिचयः श्रीपादसप्तकस्तोत्रे दत्तः, तद्यथा—

कोटिलिङ्गपुरे वासी युवराजो महाकविः
श्रीपादसप्तकं काव्यमेतदरीरचत् । श्रीपाद० ८

तथाच —

कोटिलिङ्गपुरे वासी युवराजो महाकविः
हेत्वाभासानुदाजह्रे दशश्लोकैः सतां मुदे । हेत्वाभास० ११

आभ्यां श्लोकाभ्यां ज्ञायते यत् कविरात्मानं महाकविं मन्यते स्म । स आत्मश्लाघी कविरासीत् । सुधानन्दलहरीस्तोत्रे स स्वकाव्यालोचनं सावलेपं करोति —

शास्त्रेषु शाततमशस्त्रसमापिबुद्धिः
काव्येषु नव्यनलिनाधिकसौकुमारी
यस्यास्यतामरसलास्य-रसा च वाणी
हर्षं न कस्य कुरुते युवराज एषः । सुधानन्दलहरी ५४

स्वजीवनकाले कविः स्वकाव्यैः सम्यङ्न सम्मानितोः जनैरिति प्रतीयते । स्वकाव्यं मृणालमिति काव्यप्रशंसका राजहंसाश्चेति स्वकाव्यनिन्दकाः कूपमण्डूका इति चाकथयत् सः । तद्यथा —

अपि पुरस्कृतं रीढं पण्डितंमन्यमूढै-
र्मम तु सुकृतिरत्नं हन्त गृह्णन्ति सन्तः
अवगणितमवद्यैर्दर्दुरैरप्ययाप्याः
किमनणुकमृणालं राजहंसास्त्यजन्ति । सुधानन्दलहरी ५६

युवराजकविसदाशिवेन बालोद्भवम् वा महेन्द्रविजयं रामचरितञ्चेति द्वयोर्महाकाव्ययोः रससदनभाणस्य भास्करीयगोलाध्यायार्शचिदर्शक - गरुड-

---

1 Kerala Contribution to Sanskrit Literature. K. Raja.

च्छायाप्रमाणादीनां ग्रन्थानां रचना कृता । अस्मिन् प्रबन्धे केवलं गीति-काव्यानां विवेचनं प्रस्तूयते ।

## श्रीपादसप्तकस्तोत्रम्

एकादशश्लोकात्मकेऽस्मिन् काव्ये रमादेव्याः पादारविन्दयोर्वन्दना कविना कृता । रमादेवीं लोककल्याणकारिणीं मत्वा सर्वेषां जनानां हिताय प्रार्थयते कविः । तद्यथा —

कोटिलिङ्गपुरेवासा भवभालाक्षिसम्भवा
काली करोतु लोकानां सततं सकलं शिवम् । श्रीपाद ११

कवेर्धारणास्ति यद् यः कश्चिद् रमायाः शरणं गच्छति तस्मै प्रणत-जनाय वाञ्छितफलं ददाति सा । दीप्तनखवती रमादेवी दारिद्र्यं नाशयति । कवेर्भक्तिभावपूर्णा वाणी मननीया—

रेखाभिर्यादराभिः किसलयमिव कल्पद्रुमस्योपगूढं
लेखानां शेखरत्वं गतमतमिव यद्यच्च शोणप्रकाशः ।
पादद्वन्द्वं रमायाः प्रणतजनमनःकामितार्थप्रदं तद्-
दारिद्र्यं दारयेन्नः कुसुमरुचा भासमानं नखाल्या । श्रीपाद २

स्तुतिकाव्येऽस्मिन् सप्तपद्येषु स्रग्धरा छन्दसः चतुर्षु श्लोकेषु 'अनुष्टुप्' छन्दसः प्रयोगो वर्तते । उत्प्रेक्षारूपकानुप्रासोपमादीनामलङ्काराणां प्रयोगेऽपि निपुणः कविः । अनुप्रासालङ्कारस्तु क्वचित्क्वचिल्लयसौन्दर्यं जनयति । वर्ण-विन्यासेन रचिता रमायाः काल्पनिक - भाव - मूर्तिर्दर्शनीया —

एणीदृशा सुगमवेणीधरा सुघुषघोसीविभूषणवर-
श्रेणीमणिकिरणकाणीकृतप्रवणवाणीवरादिबुधा ।
शोणीभवत्कमलपाणीशिवा दिशतु वाणी विशेषमतुल-
श्रीणीशुकप्रवरवाणी गुणप्रतिमवाणी विलासिवदना ।

## देवदेवाष्टकम्

सदाशिवेन कृतं देवदेवाष्टकं काव्यमेकादशश्लोकात्मकमस्ति । शार्दूलविक्री-डितछन्दसि वर्णितं - शिवरूपमत्र । कविः शिवस्य प्रत्यङ्गं वर्णयित्वा शङ्करस्य रूपस्य परिचयं ददाति । पश्चात् कपर्दस्य स्तुतिं करोति । शिरसि मुग्ध-

बालचन्द्रं धारयतो जटाजूटसुवर्णवर्णभुजगश्रेणीभिर्युक्तस्य शम्भोः शोभा निदर्शिता यथा —

उत्तंसीकृतमुग्धचन्द्रमुपरि त्वंगतरङ्गोल्ललद्
गंगाविष्टकपालकन्दरझरीझत्कारवाचालितम् ।
नेद्धं देव सुवर्णवर्णभुजगाश्रेण्या तवात्युन्नते-
रभ्रान्तभ्रमदभ्रजालकलितामर्दं कपर्दं भजे ।। देवदेवाष्टकम् २

त्रिनेत्रस्य मुखसुषमाया वर्णनं सरलानुप्रासालङ्कारयुक्तसरसभाषया कृतम् । तद्यथा —

भालाक्षिज्वलदाशुशुक्षणिशिलालेलिह्यमानं वरं
चन्द्रार्कात्मकचारुलोचनयुगं चिल्लीलतोल्लासितं ।
चञ्चत् कुण्डलिकुण्डलद्वयलसद्गण्डं सुनासापुटं
विम्बोष्ठं मृदुहासभासुस्तरं वन्दे तवास्याम्बुजम् । ३

श्लोकोऽयं जयदेवस्य शैलीमनुकृत्याधोलिखितानुसारं विरचित इव प्रतिभाति —

चन्दनचर्चितनीलकलेवरपीतवसनवनमाली
केलिचलन्मणिकुण्डलमण्डितगण्डयुगस्मितशाली ।

## मुररिपुस्तोत्रम्

अस्मिन् स्तोत्रकाव्ये कविरष्टादशश्लोकेषु मुररिपोः स्तुतिं करोति । अस्य भाषा क्लिष्टा शब्दविन्यासश्च दुर्बोधः । शब्दालङ्काराणामतिशयप्रयोगेण जटिलतापि विद्यते तत्र । यमकालङ्काराय कवेर्विशिष्टा रुचिर्दृश्यते । यमकालङ्कारयुक्तस्य चित्रकाव्यस्य वैचित्र्यं द्रष्टव्यम् —

रमारमारमारमार्गणहर्ति सरागता
धराधराधराधरावहं विलोम्य यं पुरा ।
सवासवासवासवाशनावलिर्यमाश्रिता
दरोदरोदरोदरोदयद्वयः स पातु माम् । १२

## सुधानन्दलहरीस्तोत्रम्

पण्डितराजजगन्नाथविरचितगङ्गालहरीमवलम्ब्य काव्यमिदं रचितम् ।

पञ्चविंशच्छ्लोकेषु सशिखरिणीछन्दसि गङ्गां स्तौति । गङ्गाया सौंदर्यस्य लोकमङ्गलस्य च निरूपणं सविनयं समुपस्थापितम् । अत्र सरला भाषा प्रयुक्ता । यमकालङ्कारप्रयोगेणापि काव्यचारुत्वं वर्धितम् —

सितास्मि त्वं सोऽहं विकटभवपाशेन च सितः
जडात्मा जात्या त्वमपि जडमूर्तिजननि भो ।
अहो नो साधर्म्यं त्वमसि चपलाहं च चपल-
स्ततो नोपेक्ष्यः क्षणमपि तव प्रेमविषयः । ११

शोकरहिताः शुका यथा शुकवृक्षमधिरोहन्ति तथैव येषां प्रतिच्छविस्तव जले पतति पक्षिणोऽपि शिवत्वं प्राप्य स्वर्गं गच्छन्ति । गङ्गाजलस्य माहात्म्यं गायति कविः —

त्वदीये पानीये स्फटिकविकटानाविलतले
प्रतिच्छाया यावत् पतति खे निपतताम् ।
शिवाङ्कस्ते तावद्भवनमभिनवं गन्ति पवनं
दिवौकोभिः साकं शुक इव शुकं शोकरहिताः । २०

## हेत्वाभासोदाहरणश्लोकाः

संवादशैल्यां लिखिता एते श्लोकाः गेयतानुबद्धाः । राधाकृष्ण-सीताराम-लक्ष्मणादीनां परस्पर-संवादा हास्यविधिना प्रस्तुताः । उदाहरणं प्रस्तूयते —

भीतोऽहं विरही तुषारकिरणात् सोऽयं समुज्जृम्भते
विज्ञातः कथमेष ते मम यतस्तापं करोत्युच्चकैः
लिङ्गात् कोऽनुमिनोति साध्यविरह-व्याप्तादियं मुग्धता
मा भैषीरिति पातु वो रघुपतिः सौमित्रणा सान्त्वितः ॥ ४

## त्रिपुरदहनचरितम्

दशपद्येषु त्रिपुरदैत्यानामुपद्रवस्य तेषां संहारस्य कथा चारु वर्णितास्मिन् काव्ये । त्रिपुरदैत्यैस्तपस्या कृता । शिवः प्रसन्नोऽभवत्तेषां तपसा । शिवदयया शक्तिरर्जिता, शक्त्या जगज्जितं तैः । तेषामाधिपत्यं सर्वत्रैवाभवत् । स्वपदच्युता देवा धरण्याः शरणमागता । भोगीन्द्रा यत्र तत्र विचरितवन्तः । भीता देवा मुकुन्दमुपेताः । शिवभक्तानां दैत्यानां वधमसुकरं जानानोऽपि मुकुन्द-

स्तेषां वधाय वीणापाणिं मुनीन्द्रं नारदं जिनवरमतमशिक्षयत् । नारदेन जिनवरमतस्य शिक्षा दैत्येभ्यो दत्ता । चार्वाकमतमधीत्य दैत्याः शिवप्रतिमा अखण्डयन् । शिवविमुखानां दैत्यानां चेष्टितं श्रुत्वा स्वावहेलनया शिवः क्रुद्धोऽभवत् दैत्यान् प्रत्याक्रमणमकरोत् तान् भस्मीचकार च ।

वीररसस्य प्राधान्यमस्मिन् काव्ये दृश्यते । यदा शिवेन नारदमुखाद् दैत्यानां चेष्टा श्रुता तदा झटित्येव स स्ववाहनं वृषभमधिष्ठितः तेषां संहाराय गतः । महोक्षाधिष्ठितरूक्षाकृतिशिवस्याक्रमण - वर्णने वीररस-धारा स्यन्दते । तद्यथा —

मुनिवरमुखादाकर्ण्य त्वं पुरत्रयचेष्टितं
झटिति घटिताक्रोधादुच्चैस्तरामुदजृंभथाः ।
घणघणरणद्घंटोत्कंठं महोक्षमधिष्ठितः
सरभसमवारूक्षो रूक्षाकृतिः स्फटिकाचलात् । ७

पद्येऽस्मिन् लय-सौंदर्य - भावात्मकतासङ्गीतात्मकतादीनां काव्यगुणानां साधु सन्निवेशः । प्रस्तुतचरितकाव्यं तु मधुरगीतिकाव्य-कोटौ आपतति ।

## सादाशिवी प्रकरणम्

स्फुटश्लोकानां सङ्ग्रहोऽयं शृङ्गाररसात्मकः । विप्रलम्भशृङ्गारवर्णने कविः सविशेषं निपुणः । यानि वस्तूनि प्रियसमीपे सुखदानि सन्ति प्रियविरहे तान्येव विपरीतानि जायन्ते । चन्द्रोऽपि चन्द्रहासवद्भाति संवत्सरः कल्पमिव निमेषोऽपि मासमिव प्रतीयते विरहविदग्धेन । विरहातुरस्य चित्रणं दर्शनीयम् —

चन्द्रमुखीविरहे मे चन्द्रोऽयं चन्द्रहासवद्भाति
सर्पति सर्पसमाने पवमानश्चंदनाद्रिवलमानः । ७

तथाच —

उत्पलनयनाविरहे कल्पसमाना समा ममाभाति
मासति हंत निमेषः शिव शिव खेदं निवेदये कमहम् । ८

श्लेषयमकस्मरणालङ्कारैरलङ्कृत एष ग्रन्थः । यमकप्रयोगः सरलो हृद्यो वैचित्र्यसम्पादकश्च । तद्यथा —

विरामं यस्य हृदयं विरामं याति स ध्रुवं
राघवं यो न भजते भजत्येव स लाघवम् । २३

यथोचितशब्दविन्यासेन वर्णध्वन्या च निर्मिते वर्षाकालस्य शब्दचित्रे भाषा भावानुकूलास्ति । तथा हि—

गंभीराम्भोधिसंभावितघुमुघुमितध्वानबद्धालेप
श्यामाभ्रभ्रान्तविद्युत्पटलकटुतरोद्योतविद्योतते द्यौः ।
झञ्झानिर्घोषिवर्षिप्रबलमरुदुरुक्षोभितोर्वीसमुद्यद्
धूली-पाली-निगूढ-द्रुमपुरनिकरा भ्राजते वृष्टिरेषा । २०

सादाशिवीप्रकरणस्य कतिपयपंक्तयो बिल्हणस्य चौरपञ्चाशिका-काव्य-मनुकुर्वन्ति । तद्यथा—

अद्यापि हृद्यतरसारसलोचना सा
राकानिशाकरवयस्यमनोहरास्या .
कुन्दावलेपहरसुन्दरमंदहासा
हा हा मरालगमना मनसो न याति । ४५

सादाशिवीकाव्यस्य प्रस्तुते पद्ये चौरपञ्चाशिकाकाव्यस्याधोलिखितपद्यस्य स्पष्टः प्रभावः परिलक्ष्यते—

अद्यापि तां प्रणयिनीं मृगशावकाक्षीं
पीयूषपूर्णकुचकुम्भयुगं वहन्तीम्
पश्याम्यहं यदि पुनर्दिवसावसाने
स्वर्गापवर्गनरराज्यसुखं त्यजामि ।

सदाशिवस्य गीतिकाव्यानां सम्यगवलोकनेन ज्ञायते यत् तेन स्वकाव्यानि संभोग-विप्रलम्भश्रृंगारमयानि हास्यरसयुक्तानि भक्तिभावान्वितानि च समलंकृतानि । भाषायाः प्रसादगुणः सर्वत्रैव प्रीणयति चेतः । क्वचित्क्वचिद् यमकालंकारप्रयोगाधिक्येन काव्ये काठिन्यं संजातम् । मुररिपुस्तस्तोत्रे वर्णरचना किंचिद् दुर्बोधा । अल्पप्रयुक्तानां शब्दानां क्वचित् प्रयोगोऽपि काव्यरसास्वादने बाधको भवति । यथा—अग्न्यर्थे 'शोचिष्केशः' वराहार्थे 'किटिः सुवर्णकृते 'अष्टापद' इति शब्दा दुर्बोधतामापदयन्ति । समकालिकगीतिकाव्यकारेषु सदाशिवस्य स्थानं सुप्रतिष्ठतमेव ।

# गीतगोविन्दस्य वैशिष्ट्यम्

श्री गोपीकृष्ण द्विवेदी

प्रेमस्वरूपायां भक्तौ भगवत्स्वरूपादिचिन्तनमाहात्म्येन भगवत्कृपया चाभावभीतिभेदद्वेषकामचिन्तादिसमस्तविकाराणां सारल्येन विनाशो भवति । सा प्रेमस्वरूपा माधुर्याख्या वा भक्तिरेव गीतगोविन्दे साहित्यसङ्गीतयोगेन संसाधिता ।

## भक्तिवर्णनम्

गीतमये काव्येऽस्मिन् सम्भोगविप्रलम्भशृङ्गार-व्याजेन श्रीकृष्णस्य भवसारं स्मरणं ध्यानञ्च प्रमाणीकृतम् । कृष्णैकतानात्मना कविना काव्यस्यारम्भे मध्येऽन्ते च हरिस्मरणस्यैव महत्त्वं प्रकटितम् । तद्यथा —

श्री वासुदेवरतिकेलिकथासमेतमेतं करोति जयदेव कविः प्रबन्धम् । १.२

अत्र रतिकेलिः कथारूपेण वर्णिता । अनन्यचिन्तनमाहात्म्येन रतिवर्णनं कथामयमत्रनिरूपितमनेन कवेः भक्तिभावो व्यज्यते । अग्रेऽपि यथा —

यदि हरिस्मरणे सरसं मनो यदि विलासकलासु कुतूहलम् ।
मधुरकोमलकान्तपदावलीं शृणु तदा जयदेवसरस्वतीम् ।। १.३

अत्र हरिस्मरणं परमं प्रयोजनं, विलासकलाशिक्षावान्तरप्रयोजनम् । वस्तुतो विलासकलासु कुतूहलशीलानां जनानामपि कृते हरिस्मरणं कविना साधितमिति भक्तिप्रमुखवर्णनमहिम्नाभिव्यज्यते । काव्ये हरिचरणस्मरणमहिमापि बहुशः वर्णितः । यथा —

हरिचरणस्मृतिसारम् १.३

हरिचरणस्मरणं प्रति संप्रति पुण्यवतामनुरूपम् । १.२

इत्यादिवर्णनेन हरिस्मरणस्यैव परमं माहात्म्यं कविना प्रकाशितम् ।

## कविदृष्टिः

श्रीकृष्णविषये कविदृष्टिः भगवद्दर्शनपरा वर्तते । यथा —

दिनमणिमण्डलमण्डन भवखण्डन ए ।
मुनिजनमानसहंस जय जय देव हरे ॥ १.२
तव चरणे प्रणता वयमिति भावय ए ।
कुरु कुशलं प्रणतेषु जय जय देव हरे ॥ १.८

इत्यादिभक्तिमयवर्णनेनारम्भ एव दशावतारप्रतिपादनेन प्रतिगीतं कविप्रणति-रूपेण च कविहृदये भक्तिनिष्ठा सिद्ध्यति ।

## श्रीकृष्णविषये राधाया वृत्तिः

श्रीकृष्णविषये ध्यानमग्नाया राधाया अपि वृत्तिर्प्रायोऽभौतिकी वर्तते । यथा —

विपुलपुलकभुजपल्लववलयितवल्लवयुवतिसहस्रम् ।
पतिवसनमनुगतमुनिमनुजसुरासुरवरपरिवारम् ॥ २.१
कलिकलुषभयं शमयन्तम् ।
गणयति गुणग्रामं भ्रमादपि नेहते
वहति च परितोषं दोषं विमुञ्चति दूरतः ।
युवतिषु चलत्तृष्णे कृष्णे विहारिणि मां विना
पुनरपि मनो वामं कामं करोति किम् ॥ २.२२
गोविन्दं व्रजसुन्दरीगणवृतं पश्यामि हृष्यामि च ॥ २.३२

इत्यादिपद्येषु कृष्णविषये राधाया दिव्यभावनास्ति । अन्यथात्र घृणाद्वेषमान-शोकादिप्रकृतभावानां वर्णनं स्यात् ।

## प्रेमपरिपाकस्वरूपम्

गीतगोविन्दे राधाकृष्णयोर्वियोगावस्थायाः शृङ्गारितं वर्णनं सविशेषं वर्तते । प्रकरणेऽस्मिन् गुणगणगौरवमण्डितस्य, अखण्डशक्तिस्वरूपस्य भगवतो वियोगे दिव्यस्मृतिः, अनन्यचिन्तनम्, दर्शन-व्याकुलता, तदाकाररूपता, आत्म-विस्मृतिश्च निर्दशिताः । तद्यथा —

हरिरिति हरिरिति जपति सकामम् ।
विरहविहितमरणेव निकामम् ॥ ४.२
पश्यति दिशि दिशि रहसि भवन्तम ।

त्वदधरमधुरमधूनि पिबन्तम् ।। ६.१

श्रीकृष्णो देवरूप एव राधाया नायको वर्तते । तद्यथा —

नायातः सखि निर्दयो यदि शठस्त्वं दूति किं दूयसे
स्वच्छन्दं बहुवल्लभः स रमते कि तत्र ते दूषणम् ।
पश्याद्य प्रियसङ्गमाय दयितस्याकृष्यमाणं गुणै-
रुत्कण्ठार्तिभरादिव स्फुटमिदं चेतः स्वयं यास्यति ।। ७.३

निर्दयः, शठः, बहुवल्लभस्तत्रापि प्रियस्तथा तस्य गुणैराकृष्टा राधा जीवन-समर्पण - द्वारापि प्रियसङ्गमं वाञ्छति । अत्राभिधयावगुणा वर्णिताः किन्त्व-लौकिकगुणपरिपूर्णः श्रीकृष्ण इत्यभिव्यज्यते । तस्मात् कारणादेव प्रियसङ्ग-मायाद्य चेतः स्वयं यास्यतीति संघटते ।

## राधास्वरूपम्

अस्मिन् काव्ये राधा नायिकारूपेण तथा प्राधान्येन लक्ष्मीरूपेण निरूपिता । नायिकावर्णनप्रसंगे तस्या खण्डिता-कलहान्तरिता-माननीत्यादिरूपाणि प्राप्यन्ते । तस्या लक्ष्मीस्वरूपं यथा—

त्वामप्राप्य मदि स्वयंवरपरां क्षीरोदतीरोदरे
शङ्के सुन्दरि कालकूटमपिबन्मूढो मृडानीपतिः । १२.६२

गीतगोविन्द-काव्यस्यारम्भेऽन्ते च तन्मङ्गलाचरणं राधाकृष्णयोरखण्डसम्बन्धं प्रकटयति । तेन वर्णनेन राधाया लक्ष्म्यवतारो ध्वन्यते । यथा—

राधामाधवयोर्जयन्ति यमुनाकूले रहः केलयः ।। १.१२
पर्यङ्कीकृतनागनायकफणाश्रेणीमणीनां गणे
संक्रान्तप्रतिबिम्ब सङ्कुलनया बिभ्रद्वपुर्विक्रियाम् ।
पादाम्भोरुहधारिवारिधिसुतामक्ष्णां दिदृक्षुः शतैः
कायव्यूहमिवाचरन्नुपचिताकूतो हरिः पातु वः ।। १२.१०

## प्रेमस्वरूपम्

धनजीवनादिभौतिकमहत्त्वत्यागपूर्वकं श्रीकृष्णप्रेमस्वरूपमस्ति । राधाचिन्तने परमानन्दस्तथा श्रीकृष्णस्य तदाकारवृत्तिश्चाभिहिता । यथा—

किं जनेन धनेन किं मम जीवितेन गृहेण ।। ३.१

तामहं हृदि सङ्गतामनिशं भृशं रमयामि ।
किं वनेऽनुसरामि तामिह किं वृथा विलपामि ॥ ४

इत्यादिवियोग-संयोगवर्णने भगवतः श्रीकृष्णस्यासाधारणं पवित्रं प्रेमस्वरूपं प्रायशो दर्शितम् ।

## काव्यशैली

प्रायः सम्पूर्णे गीतगोविन्दे मधुरकोमलकान्तपदावलिः सुशोभते । पदानां योजना व्यवहारप्रवाहपरिशुद्धा, सुस्पष्टार्थविधायिनी, दूरान्वयादिदोषरहिता, समासालङ्कारपूर्णापि सरला, रसमयी सर्वथा च मनोहरा दृश्यते । वैदर्भी-रीतिरत्र निर्णीयते ।

## सङ्गीततत्त्वम्

काव्येऽस्मिन् मालव-गुर्जर-कर्णाटक-गोण्डवराडी-वसन्त–प्रभृतिप्रसिद्धत्रयोविंशतिरागरूपाणि तथा तत् सूक्ष्मप्रकारा उत्तमरीत्या प्राप्यन्ते । प्राचीनार्वाचीन-सङ्गीतानुसारेणैतेषां रागाणां वाद्ययन्त्रेण सह समग्रभारते प्रयोगो भवति । सङ्गीतमार्तण्डमण्डलीसु गीतगोविन्दस्य प्रसिद्धिस्तस्य गौरवं सफलतामुत्तमताञ्च प्रमाणयति । गीतगोविन्दमनुकृत्य गीतकाव्यपरम्परा सम्यक् प्रचलिताभवत् ।

## त्रिविधं वैशिष्ट्यम्

कविना रचनाया अन्ते काव्यस्य प्राधान्येन त्रिविधं वैशिष्ट्यं प्रमाणितम् । तथाहि—

यद्गान्धर्वकलासु कौशलमनुध्यानञ्च यद्वैष्णवं
यच्छृङ्गारविवेकतत्त्वरचनाकाव्येषु लीलायितम् ।
तत्सर्वं जयदेवपण्डितकवेः कृष्णैकतानात्मनः
सानन्दाः परिशोधयन्तु सुधियः श्रीगीतगोविन्दतः ॥ १२.११

## भक्तेषु समादरः

गीतगोविन्दे शृङ्गाररस एव न भक्तिरिति तत्तु परम्पराविरुद्धं प्रतिभाति । यतः गीतगोविन्दरचनयैव वैष्णवसमाजे जयदेवेन श्रीमद्वल्लभाचार्यसमो महिमा

प्राप्तः। यथा—

विष्णुस्वामिसमारम्भां जयदेवादिमध्यगाम्।
श्रीमद्वल्लभपर्यन्तां स्तुमो गुरुपरम्पराम्॥

अपि च तेन भक्तवरस्य जयदेवस्य माहात्म्यकीर्तनमपि भक्ति-वृद्धिसाधनं स्वीकृतम्। यथा—

इत्येतज्जयदेवस्य माहात्म्यं कथितम्मया।
यः पठेच्छृणुयादेतत्तस्य भक्तिर्दृढा भवेत्॥ भक्तमाला ४१.९५

तथा च भक्तमण्डलीषु प्रसिद्धा गीतगोविन्द - परीक्षा, भगवत्पद्यपूर्तिप्रभृतिबहु-चमत्कृतिपूर्णघटना गीतगोविन्दस्य भक्तिप्रवणतां प्रमाणयन्ति। सुप्रसिद्धस्तट्टीका-कारोऽपि तदेव साधयति। यथा—

अत्र जगदानन्दकन्दलीकन्दगोविन्दपदारविन्दमकरन्दामोदमधुरतरास्वादमधु-करमधुरचेता भागवत-प्रधानः परमकारुणिको जयदेवकविर्देवदेवे भगवत्याविष्ट-चित्तः कलिकलुषान्तःकरणत्वेनेतस्ततः परिविक्षिप्तान् सुखेन तदभिमुखीकरणाय कलावतीकेलिकुतूहलिनं हलिसोदरं निरूपयितुं.............................इमं प्रबन्धमुपनिबध्नाति।[1] अनेनापि भक्तसमाजे गीतगोविन्दस्य परमं माहात्म्यं प्रसाधितम्।

सामाजिकहृदयेषु गीतगोविन्दपठन-श्रवणादिमहिम्ना तथा भक्त्यावस्था-मूल्येन कविवद् भक्तिर्दृढा भवति। अपि च तया संघर्षनिवृत्तिः, चरित्रशुद्धिः परमानन्दश्च जायन्ते। तस्माद् द्वादशशतकादारभ्याद्यावधि भारतस्य प्रसिद्धेषु पवित्रमन्दिरेषु गीतगोविन्दस्य सङ्गीतं श्रोतॄणां हृदयानि पुनातिस्म।

---

१ मालवाम्भोधिनाथमहीधरेण महाराजाधिराजमहाराजश्रीकुम्भकर्णमहामहेन्द्रेण विरचितायां रसिकप्रियानाम्न्यां श्रीगीतगोविन्दस्य प्राचीनतमायां टीकायां प्रथमसर्ग-द्वितीयश्लोक सन्दर्भे टीकाकर्तुरेतन्मतम्।

## श्रीपण्डितराजराजेश्वरशास्त्रिणः

### श्री के० एस० सुन्दरेश्वरन्

काशीपुरी सदैव संस्कृत-पण्डित-मण्डितैव राराजते । तेषामृषिकल्पानां पण्डिताना मध्ये पण्डितराजराजेश्वरशास्त्रिणः स्वकीयेनाभिपद्मेन ज्ञानगुण-गरिम्णा विराजन्ते ।

### प्रादुर्भावो ज्ञानार्जनञ्च

शास्त्रिचरणानां जन्म श्रावणपूर्णिमायां १९५६ विक्रमसंवत्सरे काश्यामभवत् । अखिलभारतीयवर्णाश्रमस्वराज्यसंघसंस्थापका महावेदान्तिनो महामहोपाध्यायधर्मप्राणलक्ष्मणशास्त्रिद्राविडमहोदया एतेषां पितरो मीमांसका महामहोपाध्यायसुब्रह्मण्यशास्त्रिणश्च एतेषां मातामहा आसन् । पितामहा मद्रास-प्रान्तान्तर्गत - 'त्रिविशनूर' ग्रामतो मातामहाश्च 'मैसूर' देशादागत्य काश्यां न्यवसन् ।

### विद्याध्ययनं पाण्डित्यञ्च

एतेषां प्रारम्भिकी शिक्षा स्वीयमातामहस्य सविधे एव सम्पन्ना । अनन्तरं प्रथमं वैदिकवर-श्रीबालम्भट्ट-गोडबोले महोदयानां सविधे तैः कृष्णयजुर्वेदान्तर्गत तैत्तिरीयशाखायाः सस्वरमध्ययनं कृतम् । तदनन्तरं काश्यां नव्यन्यायशास्त्रे म० म० वामाचरण-भट्टाचार्यमहोदयानां सविधे तैः तर्कशास्त्रस्याध्ययनं कृतम् । एतेषां विद्वत्तया शास्त्रार्थेषु विलक्षणप्रतिभया च प्रभाविता ४७ वर्षेभ्यः पूर्वं काश्यां सम्पन्ने 'अखिल-भारतीय-ब्राह्मण-महासम्मेलने' विद्वद्वरेण्यैः 'पण्डित-राजे'ति सम्मानोपाधिः श्रीशास्त्रिचरणेभ्यः समर्पितः । दक्षिणभारतीयाः श्रीकामकोटिपीठाधीश १००८ श्रीशंकराचार्य - पुरस्कारं 'शास्त्ररत्नाकरं पदवीं च समर्पितवन्तस्तस्मै ।

## कार्यक्षेत्रम्

एतेषां पितृचरणैः स्व० श्रीलक्ष्मणशास्त्रिद्राविडमहोदयैः श्रुतिस्मृतिपुराणानुसारि - भारतीयसंस्कृतेः सभ्यतायाश्च संरक्षणार्थं अ० भा० वर्णाश्रम स्वराज्यसंघः स्थापितः। तैर्महोदयैः नवयुवकेभ्यो वेदशास्त्रानुसारि-भारतीय-शिक्षायाः प्रदानार्थं मेहता-महोदयानां सहयोगेन काश्यां रामघट्टे श्रीसांगवेदविद्यालयः स्थापितः। अन्यच्च वृत्तिदानार्थं शास्त्ररक्षा-समितिस्तैः स्थापिता। वेदविद्यालये वेदस्य विभिन्न-शाखानां शास्त्राणाञ्च शिक्षणं प्राचीनपद्धत्याधुनापि प्रचलति। एतेषु कार्येषु चरित्रनायक-श्रीशास्त्रिचरणानां साहचर्यं नाविदितम्। पितृचरणे दिवंगतेषु कार्यत्रयस्यापि संचालनमेभिः क्रियते।

खृष्टाब्दे १९४६ पुण्यपत्तने (पूना) सम्पन्नायां प्रख्यातविद्वत्परिषदि निर्णायकरूपेण उपस्थितौ बम्बई–उच्चन्यायालयीय–न्यायाधीशौ श्रीलोकुरस्तथा श्रीदिवेटिया मराठी–साहित्यसम्राट् श्री न० चिं० केलकर महोदयश्च श्रीशास्त्रिचरणैस्तत्सहयोगिभिश्च प्रदर्शितविचार-पद्धतेः समीचीनत्वेन प्रभाविताः।

एतमेव पूर्वोक्त - साङ्गवेदविद्यालये प्राचीनशिक्षापद्धत्या वेदशास्त्राणां शिक्षाप्रदानायाहर्निशं प्रयत्नशीला एते। सस्वरवेदाध्ययन-परम्पराया अक्षुण्णताया रक्षणार्थमेतेषां सहयोगेन विद्यालये प्रतिवर्षं विभिन्नवेदशाखानां सर्वोच्चपरीक्षा आयोज्यन्ते।

## विचारशैली, अध्ययनाध्यापन - पद्धतिश्च

संस्कृत-भाषायां निर्मितानां सर्वेषां शास्त्राणां अर्थात् वेदस्य दर्शनशास्त्रस्य साहित्यस्य यान्त्रिकविद्याया ललितकलाया वा लक्ष्यमेकमेवास्ति-धर्मादिपुरुषार्थाः। अतः शास्त्रेषु आपाततो दृश्यमानः परस्परविरोधो वस्तुतः केवलं विरोधाभास एव। विचाराणां पूर्णता सिद्धयर्थमेव हि शास्त्रेषु विभिन्नाः सिद्धान्ताः 'इदमित्थ'मिति स्वीकृता। ते च सिद्धान्ता वस्तुतः क्रमशो विचारविकासस्य सोपानभूता एव। अनयैव दृष्टया व्यास–वाल्मीकि–कौटिल्य–कालिदास शंकराचार्याभिनवगुप्त–सायणाचार्य–कुमारिलभट्टाप्ययदीक्षित–प्रभृतिभिरीशविभूतिर्भारतीय-शास्त्राणामालोडनं लेखनं प्रवचनं च कृतम्। चरित्रनायक-श्रीशास्त्रिमहोदयानामपि विचारशैली एवमेव सार्वत्रिकी समन्वयात्मिका च वर्तते। यदा तैर्भारतीयराजनीतिशास्त्रस्य प्रवचनं क्रियते तदा तेषां विचारधारायां

नानाशास्त्राणां समन्वय उपयोगिता व्यावहारिकता च श्रवणीयाश्चिन्तनीयाश्च भवन्ति। तेषां कथनानुसारं वेदादि-शास्त्रज्ञानाभावे तन्मूलकभारतीयराजनीति-शास्त्रस्य मूलतत्त्वज्ञान दुष्करम्।

भारतीयशास्त्राणां गूढरहस्यमवगन्तुं न्यायशास्त्रस्याध्ययनमत्यावश्यकम् तद्यथा कौटिल्यः

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता॥

स्वकीयया विश्लेषणात्मिकया विचारशैल्या तादृश्याऽध्ययनशैल्या च दूरूहां नव्यन्यायभाषां द्वाविंशति - पदार्थेषु विभज्य तेषां ज्ञापनपद्धतिर्नूतना-विष्कृताऽस्तितैः। ते च द्वाविंशतिपदार्था निम्नलिखिताः सन्तिः

प्रतियोगिता, अनुयोगिता, अवच्छेदकता, अवच्छेद्यता, निरूप्यता, निरूपकता, प्रतिबन्धकता, प्रतिबध्यता, प्रयोजकता, प्रयोज्यता, विषयता, विषयिता, संसर्गता, कार्यता, कारणता, द्रव्यगुण-कर्म-सामान्य-विशेषसमवायाभावाश्चेति। एतेषा पदार्थानां सम्यक् परिचयं कारयित्वा तेषां परस्पर - सम्बन्धश्च सोदाहरणं प्रकाश्य तैर्मासत्रयाभ्यन्तर एव जिज्ञासूनां कृते नव्यन्यायभाषापरिचयः कार्यते।

## कृतयः

शास्त्रिमहाभागानां न्याय-मीमांसा-धर्म-राजनीति - साहित्यविषयाणां लेखाः स्वीयव्याख्यानानां संकलनञ्च विद्यन्ते। तथाहि —

१ न्यायसिद्धान्तमुक्तावल्या अपूर्णाया रामरुद्रीटीकायाः पूरणम्।
२ सटिप्पणसांख्यतत्त्वकौमुद्याः सम्पादनम्।
३ जयमंगलोपाध्यायनिरपेक्षा - टीकाभ्यां सह कामन्दकीयनीतिसारस्य सम्पादनम्।
४ कालिदासनिरंकुशतानिवारणम्।
५ अवच्छेदकत्वादि - विमर्शः।
६ 'शान्ति का अग्रदूत' अपरनाम भारतीय - राजनीतेर्दिग्दर्शनम्।
७ वेदापौरुषेयत्व - विचारः।

एतद्व्यतिरिक्तानां बहुष्वभिनन्दन.ग्रन्थेषु प्रकाशितानां लेखानां संख्या बृहत्यस्ति। एवमेव गीर्वाणवाग्वर्धिन्याः सभाया नियोगे एतैः प्रदत्ता धर्म-

शास्त्रीय-विभिन्नप्रश्नानां शास्त्रीयव्यवस्थानिर्णयाः सहस्राधिकाः सन्ति, येऽद्याप्य-प्रकाशिता सन्ति ।

साम्प्रतमेतेषामायुः प्रायः सप्ततिवर्षात्मकमस्ति । अद्याप्येतैः सदाध्यय-नाध्यापन-लेखनादि कार्याणि सम्पाद्यन्ते । इदानीमेते वाराणसेय-संस्कृत-विश्व-विद्यालयीय-भारतीयराजनीत्यर्थशास्त्रविभागाध्यक्षाः काशिराजन्यासद्वारा प्रकाश्य-मानायाः 'पुराण'पत्रिकायाः सहसम्पादकाश्च सन्ति ।

उपर्युक्त-विशिष्टविद्वत्तया गीर्वाणवाणीगरिम्णा च प्रभावितेन भारतीयशासनेन 'पद्मभूषणो'पाधिः शास्त्रिवरेभ्यः समर्पितः ।

# "महाभारतानुसारं ब्रह्मचर्येण चरित्रनिर्माणम्"

श्रीमती दिनेश

महाभारतानुसारम् —

"ब्रह्मचारिकमेवाहुराश्रमं प्रथमं पदम्" आश्व ३५.३०

उपनयनसंस्कारेणाचार्यश्छात्राय नवजीवनं ददाति । छात्र आचार्यस्य पुत्ररूपेण द्वितीयं जन्म लभते । आचार्यात् लब्धमिदमेव जन्म श्रेष्ठं परं च मतम्, येन बालको द्विजो भवति । यथोक्तं महाभारते —

"आचार्यशास्ता या जातिः सा पुण्या साजरामरा" उद्योग । ४४.५

स्वाध्यायाय चरित्रविकासार्थमेवानुकूलवातावरणस्यावश्यकता वर्तते । अतएव सांसारिकप्रलोभनाद् दूर एकान्तस्थाने वनेऽथवा पर्वतस्योपरि महर्षिभिराश्रमपदानि स्थापितानि । महाभारते मुख्यरूपेण मूलकथायामीदृशानामाश्रमाणां परिचयः दुर्लभः, किन्तु प्रासंगिकोपाख्यानेषु कण्वभरद्वाजवसिष्ठपरशुरामागस्त्यादीनामाश्रमाणां तादृशं वर्णनं वर्तते ।

गुरुः पुत्रवत् शिष्येषु स्निह्यति स्म । अतएव तेषां चरित्रस्य निर्माणम्, व्यक्तित्वस्य विकासः, तेभ्यो धार्मिकशिक्षाया वितरणम्, सामाजिककर्त्तव्येषु मार्गदर्शनं च गुरोर्लक्ष्यमासीत् ।[1] आचार्याणां धारणासीत् यत् शमदमाभ्यां कस्यचित्पुरुषस्य चित्तवृत्तयः संयमिता एव ज्ञानं प्रति प्रचरन्ति । एवं आत्मसंयमो व्यक्तित्वस्य सुविकासायावश्यकः । कर्त्तव्यनिष्ठा, अभिवादनशीलता, समदर्शिता, गुर्वर्थं क्लेशसहिष्णुता च सर्वाङ्गीणविकासाय महत्त्वपूर्णाः सन्ति । तद्यथा महाभारते —

"सम्यग् यत्र शौच-संस्कार-नियम-व्रत-विनियतात्मा उभे सन्ध्ये भास्कराग्निदैवतान्युपस्थाय विहाय तन्द्रालस्ये गुरोरभिवादन - वेदाभ्यासश्रवणपवित्रीकृतान्तरात्मा त्रिषवणमुपस्पृश्य ब्रह्मचर्याग्निपरिचरणगुरुशुश्रूषानित्यभैक्ष्यादिसर्व-

---

१ Altekar - Annals of B. O. R. I. Poona, Vol. XV,XVI 1933-35, P. 138

निवेदितान्तरात्मा गुरुवचननिर्देशानुष्ठानाप्रतिकूलो गुरुप्रसादलब्धस्वाध्यायतत्परः स्यात् ।" शान्ति १८५.८

तादृशेन दैनन्दिनचर्येण छात्रस्याचरणं पवित्रं सरलं शुद्धं च जायते । प्रतिदिवसं व्रतपालनेन, सन्ध्यावन्दनेन, स्वाध्यायेन अभिवादनेन च विद्यार्थिनः जीवनं नैसर्गिकं गुणयुक्तं सानुक्रमं च भवति । स गुरुजनस्य श्रुतिवचनस्य च समादरं करोति । भिक्षाचर्येण उच्चावच-भावना अहंकारश्च विनश्यतः । अनेनैव पवित्रजीवनविधिना छात्रः "आत्मानं सर्वभूतेषु सर्वभूतानि चात्मनि" इति उदात्ततत्त्वनिष्ठो भवति । स्वपरभावना दुराचरणस्य मूलमस्ति किन्तु समदृष्टिः सदाचारस्य परमोत्कर्षाय कल्पते ।[1]

महाभारते ब्रह्मचारिणो दैनिकचर्यानिर्धारणे शिष्यस्याचारव्यवहाराणां चतुर्षु चरणेषु विभाजनं वर्तते । आचार्यस्य नित्याभिवादनमिति प्रथमंचरणम् । मनसा वाचा कर्मणा गुरोः प्रीतिसम्पादनं द्वितीयं चरणम् । गुरोः पत्नीपुत्रैः सह सश्रद्धव्यवहारः तृतीयं चरणम् ।[2] समावर्तनावसरे गुरवे दक्षिणादानं चतुर्थं चरणमस्ति । दक्षिणादाने शिष्यस्य इयं भावना न स्याद् यद् स दक्षिणादानेन गुरोरुपकारं करोति ।[3] किञ्चिदन्ये नित्यधर्मा अपि परिलक्ष्यन्ते महाभारते । गुरोर्भोजनान्तरमेव शिष्यो भोजनं कुर्यात् ।[4] शिष्यो गुरोरासनात् निम्नतरासनं अध्यासीत ।[5] प्रतिदिनं गुरोः चरणस्पर्शं कुर्यात् ।[6] दासकरणीयानि सर्वाणि सेवाकार्याणि स्वयं कुर्यात्[7] अन्तर्बहिश्च नित्यं शुचिः स्यात् ।[8] छात्रो रसगन्धादीनां सेवनं समावर्तनस्य प्राक् न कुर्यात् ।[9] कायेन वाचा मनसा च गुरोः पूजनं समादरः सेवा च शिष्यस्य धर्माः ।[10] शिष्यो बद्धाञ्जलिर्भूत्वा सविनयं गुरुं प्रश्नं पृच्छेत् ।[11] गुरोस्तोषेणैव स आत्मानं धन्यममन्यत ।[12]

---

१ Sampurnananda - The Journal of G. J. R. I. vol. V, Nov. 1947-8, P. 39

२ गौतम १-१.३०, आप० पृ० ५६

३ शान्ति० २३४.२१

४ शान्ति० २३४.१७., गौतमधर्म० १.२.४५, मनु० २.१८२,१८३

५ शान्ति २३४.२२; गौतम १.२.२६; मनु० २.११४

६, ७, ८ शान्ति २३४: १७, २०, २५

९ आश्व० ३५. ६. १०

१० शान्ति २६३. १३

११ शान्ति० १०९. २०

१२ शान्ति ३१४. १२

एवं महाभारते छात्राणामनुशासित-जीवनस्यादर्शा उपस्थापिताः। उक्त-गुणैर्युक्तो ब्रह्मचारी महर्षिनारदेन सम्पूजितः।[1] मनोवाक्कर्मसंयमश्रमस्वाध्याया एव मानवस्य चरित्रे दृढतां धर्मार्थकामानां सेवनशक्तिं चोत्पादयन्ति। महाभारते कथितानामाचारव्यवहाराणां चत्वारि चरणानि अनुसर्तव्यानि येन ब्रह्मचारिणो भाविजीवनस्य प्रकल्पनं दृढीभवेत्। ब्रह्मचर्यस्य निष्ठयानुष्ठानमेव मानवं पूर्णरूपेण स्वधर्मपालनाय प्रेरयति। छात्रो ब्रह्मचर्याश्रमे पूर्णतः पवित्रं आदर्शमयं जीवनं च व्यतीत्य गृहस्थाश्रमस्य योग्योऽभवत्[2] तथा समाजं राष्ट्रं प्रति च स्वकर्त्तव्यं समापयितुं शक्तिं प्राप्नोतिस्म।

एवं ब्रह्मचर्यस्य मूलादर्शमनुसरन् पुरुषः समाजस्य श्रद्धास्पदं भवति। तस्यैव जीवनं सत्यं शिवं सुन्दरमभिमतम्। महाभारतेऽस्मिन् विषये कतिचन निदर्शनान्युपलभ्यन्ते। योऽयं सेवाभावः, क्लेशसहिष्णुता, गुर्वाज्ञापालनं च ब्रह्म-चर्यस्याङ्गानि प्रमतानि तेषां चित्रणं धौम्यशिष्यस्यारुणेः कथायां सुचारु विद्यते। आरुणिः गुरोराज्ञां पालयितु क्षेत्रस्य केदारखण्डे स्वयमेव शयितवान्।[3] उपमन्युरपि गुरुवचनपालने तत्परोऽर्कपत्रमपि भक्षयित्वा नेत्रहीनोऽजायत।[4] एकलव्यो गुरुभक्तेः सर्वोच्चः स्थापकः। स हि गुरुदक्षिणार्थं सहर्षं स्वाङ्गुष्ठं प्रददौ।[5] गुरुसेवायामनन्यचेनसा संलग्न उत्तङ्कः समागतं वार्धक्यमपि नानुबोधि-तवान्[6] तथा च अकरणीय न कर्त्तव्यमिति गुर्वाज्ञानिष्ठोऽसौ गुरुपत्न्या प्रेरितोऽपि स्वसंयमं न जहौ।[7] गुरुवत्सलो विपुलो गुरुपत्नीं काममोहिताद् देवेन्द्राद् संरक्ष्य गुरुसमीपमानयत तथा "धर्मे स्थितिं" वरयन् स "स्थितिं च धर्मे जग्राह।"[8] सा हि खलु निष्ठा यया अर्जुनः एकलव्यश्च महान्तौ धर्नुधरौ अभवताम्।[9]

एतेषां चरित्रैर्महाभारते सत्यमिदं स्पष्टीकृतं यत् ब्रह्मचर्येण सुसंस्कृतं सुविकसितं च जीवनमेव समाजस्य पुरतो महान्तमादर्शमुपस्थापयति। ब्रह्म-चर्यस्य तत्त्वानि व्रतनियमस्वाध्यायादय आमरणं मानवस्य मार्गदर्शनं कुर्वन्ति महाभारतमेवं मानवजीवनस्याधारत्वेन ब्रह्मचर्यस्यादर्शानेव यावत् प्रस्तौति तावदेव

---

१ अनु० १२८. १३–१७
२ Vimlananda–Prabuddha Bharata, Vol. 70, 1965, P. 412
३ आदि० ३. १९–२४
४ आदि० ३. ३३–५९
५ आदि० १२३. ३४–३७
६ आश्व० ५५–१६
७ आदि० ३- ८८–९०
८ अनु० ४१. २९–३५
९ आदि० १२३. अध्याय

अस्योपेक्षणस्य कुपरिणामान् प्रदर्शयति। यो मानवः स्वजीवने इमानादर्शान् विस्मरति तस्य पतनमवश्यम्भावीति निश्चितम्। आयुषः प्रथमो भागो मानव-जीवने महत्त्वं धत्ते। स एव हि कालो यस्मिन् गृहीताः शिक्षा उत्तरकाले फलप्रदाः सिध्यन्ति। अस्मादेव सर्वत्र बालकालस्य शिक्षाविधिः प्रशस्यते। यस्मिन्नेव काले कठोरनियमैर्यदि जीवनं सुसंयतं क्रियते तर्हि तज्जीवनं स्वस्य समाजस्य राष्ट्रस्य च कल्याणाय सक्षमं भवति। एष एव संयमो ब्रह्मचर्येण साध्यत इति प्राचीनमहाभारतीयानां महिष्ठः सिद्धान्तः महाभारतादिष्वन्यत्र च मनोज्ञरूपेण वर्णितः। सार्वकालिकः सार्वकामिकः सार्वभौमश्च विधिरयं सर्वदैवानुसरणीय इति ऋषीणामुपदेशः सर्वैर्ग्राह्यः।

# ग्रन्थ-समीक्षा

## भारतीयन्यायशास्त्र--एक अध्ययन

**लेखक डा० ब्रह्ममित्र अवस्थी, एम. ए, पी एच. डी., इन्दुप्रकाशन ८/३ रूपनगर, दिल्ली-७, १९६७ मूल्यम्-१८ रूपकाः, पृष्ठ संख्या ४०३, हिन्दी भाषायाम्।**

ग्रन्थेऽस्मिन् न्याय-वैशेषिकयोः पदार्थ-द्रव्यगुण-बुद्धीनां प्रत्येकशो विमर्शो विविध-योरपीय-दर्शन प्रणालीमनुसमीक्ष्य सम्यक् प्रतिपादितः। पुस्तकस्योपयोगिता सन्दर्भग्रन्थानां प्रासङ्गिकपाठसङ्ग्रहेण, पारिभाषिक-शब्दावलीनामाङ्गल-पर्यायेण च संवर्धिता। अत्र विवेचन-शैली सुसरला, सर्वजनबोधकरी च वर्तते। स्वभावतः कर्कशा अपि न्याय-शास्त्रस्य सूक्ष्मातिसूक्ष्म-विषया व्याख्यामार्दवेन क्रमशः गाम्भीर्यानयनस्य पाटवेन च सुग्राह्याः समाहिताः। संस्कृतेतर-भाषाभिरपि निबद्धानां बहूनां समीक्षाकृतीनां प्रज्ञया संवलितमिदं पुस्तकं विशेषतरं सार्वकामिकं सञ्जातम्। न्यायशास्त्र-वैदग्ध्यार्थिनां संस्कृतज्ञानां कृतेऽस्मादुत्कृष्टतरं पुस्तकं निःसंशयमेव नास्ति। जिज्ञासूनां परितृप्तये दर्शनशास्त्रस्यापरशाखा अधिकृत्येदृशानां प्रौढपाण्डित्यनिर्भराणां समीक्षात्मकग्रन्थानामभावः परिपूरणीयः।

कतिपय शब्दानामपभ्रष्टरूपमेतादृशेषु भारतीयविद्यात्मकग्रन्थेष्वसमीचीनं प्रतिभाति। तद्यथा-महान (महान्), तत्व (तत्त्व), महत्व (महत्त्व)। पाद-टिप्पणीनामपर्याप्तत्वं वैरूप्यं च क्वचित् त्रुटिर्वर्तते। केवलं पुस्तकानां नामान्येवास्यां दिशि न परा गतिः।

## श्रीगुरुगोविन्दसिंहचरितम्

**लेखक डा० सत्यव्रतशास्त्री, एम. ए., पीएच. डी., श्रीगुरुगोविन्द-सिंह - प्रतिष्ठानम्, पटियाला १९६७ मूल्यम् १० रूपकाः, पृष्ठ संख्या ११२**

चतुस्सर्गात्मकमिदं लघुकाव्यं परम्परया बुद्धचरितमनुसरति । कृतिरियं श्रीगुरुगोविन्दसिंहचरित—वर्णनपरेषु संस्कृतकाव्येष्वनुत्तमैव । आख्यानप्रधानेऽस्मिन् काव्ये घटनाचक्रं सर्वत्र पाठकस्यौत्सुक्यं जागरयति । काव्यस्य लघुत्वात् स्वल्पं स्वल्पमपि वर्णनं रमणीयं सञ्जातम् । तथा हि—

कूले क्वचिद् भानुसुतापगायाः
क्रीडन्ति वृन्दानि सुखं पशूनाम् ।
क्वचिल्लतामण्डपमण्डितानि
रम्याणि सान्द्राणि च काननानि ।। २.१४
क्वचिच्च गुंजद्भ्रमरौघ - दृश्यं
क्वचिच्च कूजद्विहगौघदृश्यम् ।
पपौ मनोज्ञं प्रकृतिप्रियोऽसा—
वुपोषिताभ्यामिव लोचनाभ्याम् ।। २.१५

श्रीगुरुगोविन्दस्य चरितं प्रायश उदात्तमेव निदर्शितम् । महापुरुषाणां जीवन-विधिः साधारण्येन प्रबलविरोधैः संवलितो भवति । एतदेव सत्यं गुरु-गोविन्दस्य विषये प्रगीतम् । तस्य जीवनस्यायमेवांशो भारतीयचरित्रस्य निर्माणायालम् । विशेषत आधुनिकयुगे एतादृशानामुदात्तमनीषिणां चारुचर्या काव्यपुटेन समर्पिता चरित्र-क्लैव्यानां जनानां बहूपकरिष्यति ।

संस्कृतभाषायां किमपि तदसाधारणमेव तत्त्वं वर्तते यस्य प्रभावेणार्ष-संस्कृतेर्निर्झरिणी यथोचितमनया भाषया प्रवाहयितुं शक्यते । निःसंशयमेव काव्येऽस्मिन् विषयस्य गौरवानुरूपं सर्वाणि काव्यतत्त्वानि — रसालङ्कारध्वनि-गुणछन्द—आदीनि स्थाने समुन्मिषितानि । 'भविष्येऽपि कविर्भारतभारतीमभिनव-काव्यसर्जनेन समृद्धां कुर्यादिति कामनास्माकम् ।

# सागरिका

त्रैमासिकी
षष्ठवर्षम्, २०२४ वि० सं०

षष्ठवर्षे तृतीयाङ्कः

सम्पादकः
प्रो० रामजी उपाध्यायः एम० ए०, डी० लिट्०
संस्कृत-विभागाध्यक्षः

प्रकाशिका
संस्कृत-परिषद्
सागरिका-समितिः
सागर-विश्वविद्यालयः, सागरम् (म. प्र.)

देयम्

| | |
|---|---|
| प्रत्यङ्कम् | २ रूपकाः |
| वार्षिकम् | ६ रूपकाः |
| वस्त्रावरणसंहितवार्षिकचतुरङ्काणाम् | १० रूपकाः |
| आजीवनग्राहकस्य | १०० रूपकाः |
| अङ्कनिर्गमनम् | आषाढाश्विन–पौष–चैत्रमासेषु (जून-सितम्बर-दिसम्बर-मार्च) |

**चेकद्वारा सम्प्रदानार्थं देयेषु उपर्युक्तधनेषु अपरं रूप्यकमेकं संयोजनीयम् ।**

मुद्रकः
नरहरी गोविन्द बेडेकरः
सागर-विश्वविद्यालय-मुद्रणालयः
सागरम् (म. प्र.)

## सूचीपत्रम्

# अनूपसिंहस्तस्य संस्कृत-संवर्धनश्च


## रामजी उपाध्यायः


राजस्थानप्रदेशस्य पश्चिमोत्तर-दिग्विभागेऽधुना बीकानेर इति प्रख्यातं मंडल विद्यते। तत्र विक्रमपुरं (बीकानेर) राजधानीं निर्माय 'बीका' इति ख्यातः कश्चिद् राठौरवंशीयो विजेता युवा राजकुमारः स्वराज्य १५४५ विक्रमसंवत्सरे प्रतिष्ठापितवान्। तस्मिन् राजवंशे रायसिंहः, कर्णसिंहः, अनूपसिंहश्च उच्च-कोटिकाः प्रजाप्रतिपालका महाराजाधिराजमहाराजपदवीकाः संस्कृत-साहित्य-संवर्धकाश्च बभूवुः। तेषु अनूपसिंहोऽनुत्तम एव।

## अनूपसिंहस्य व्यक्तित्वम्

अनूपसिंहस्य जन्म १६९५ विक्रमसंवत्सरे (१६३८ ई० वर्षे) विक्रमपुरेऽभवत्। स महाराजकर्णसिंहस्य तृतीयपुत्र आसीत्। विद्या-विनयसम्पन्नः स स्वयमेव कविः, ज्योतिर्विद्, आयुर्वेदविशारदश्चेति प्रसिद्धिं गतः। तस्य राज्याभिषेकः १७२६ विक्रमसंवत्सरे (१६६९ ई० वर्षे) समापन्नोऽभवत्। शीघ्रमेव समग्रभारतस्याश्रयप्रणयिनो महाविद्वांसः तस्य सान्निध्यमापुः। अनूपसिंहेन बहुविधज्ञानाशाखाः स्वकृतिभिः प्रपञ्चिताः, आश्रिताः सम्पृक्ता वा विद्वांसो बहुविधान् ग्रन्थान् लेखिताश्च। तदा सर्वविधशान्ति-समृद्धि-सम्पन्ने शासनकालेऽपरेऽपि बहवो विद्वांसः संस्कृत-साहित्यनिधिं निर्भरं सम्पादितवन्तः।

अनूपसिंहो मुगलशासकेनावरङ्गजेबेन दक्षिणभारते बीजापुरस्य, औरङ्गाबादस्य च राज्यपालो नियुक्तः। स तु मुगलसम्राजः कृते युद्धेषु बहुषु विजयी बभूव।[1] अवरंगजेबोऽपि तस्योपकारं संबिभ्रदिव तस्मै अडोनी-मण्डलस्य राज्यं पुरस्कृतवान्।

---

१. अवल्लशाहश्च कुतुपशाहः कस्याप्यजेयौ क्षितिपौ महान्तौ।
अनूपसिंहस्तु विजित्य राज्यं दिल्लीश्वरायार्पितवान् यशस्वी॥

होसिमरामस्य- तमंजरी १३

**प्रशस्तयः**

अनूपसिंहमधिकृत्य समकालिकविद्वद्भिर्बहवः प्रशस्तयो विरचिताः। ताभिः प्रशस्तिभिस्तस्य व्यक्तित्वस्य प्रांशुता स्फुटीक्रियते। तथा हि

भूमा निर्मलिमा निजाधिकरणस्थेमा त्वयीमे गुणाः
वीर-श्रीमदनूपसिंह सुजयात् कीर्तेः स्वदेशस्थितेः
त्वं राजन्य-शिरोमणिः शुभकरश्चिन्तापि किं तावता
को वेत्ति द्युतिचाकचक्यमहिमा सोऽयं विराजते ।।

अनूपगुणावतार २–१२

तत्तेजो देशकालापरिमितविभवच्छिन्न-तेजस्विकीर्ति-
स्तद्घाटीखड्गकोटित्रुटित-रिपुघटापाटितभ्रान्तबिम्बः।
देवाशो राजविज्ञापनपर इव तत्सन्निधौ रक्तरक्तो
भानुः सर्वासु दिक्षु भ्रमति द्रुततरं सर्वदा तीव्रभानुः।।

पेरुशास्त्रिणोऽनूपयशोवर्णनात्

तस्य श्रीमदनूपसिंहनृपतेश्चित्रं प्रतापांशुमान्
अन्तः शीतलतां तनोति विदुषां तापं परं विद्विषाम्।
नानानवद्यविद्या - विद्योतितस्वान्तः
श्रीमाननूपसिंहः क्षितिपतिरित्थं समादिशत्।।

विद्यानाथस्य शान्तिसुधाकरात

श्रीसूर्यवंशावतंस-सदसत्यविवेचन - राजहंस - महाराजश्रीमदनूपसिंहदेवेनअथ मिथ्यातमःस्तोम-निकृन्तन-विकर्तनस्य यस्य प्रभोः प्रसादोदयाय पाण्डित्य-दर्पणं दर्शयितुमुल्लासो जातः स स्तूयते यथार्थगुणनामनिवेदकेन पद्यचतुष्टयेन—

अनूपभूपरूपोऽसौ भाति वै भास्करोऽद्भुतः।
सदा प्रोद्यत्प्रतापश्रीः सदोच्चस्थः सदोदयः।।
अनूपसिंहराजस्य प्रतापोऽग्निर्हिमं नु किम्।
दह्यन्ते दुर्जना येन वेपन्ते चानिशं भृशम्।।
वैरिवक्त्रस्थितं वारि त्वया सर्वमहारि यत्।
अतो हेतोरनूपोऽसि यथार्थो मरुमण्डले।।

उदयचन्द्रस्य पाण्डित्यदर्पणात्।

पुराणागमगीयमानराजगुणरत्नाकरः, क्षत्रकुलकमलदिवाकरः, सकलारि-कानन-प्रसर्पत्प्रतापानल-परिताप्यमानदुष्टजनमानसासह्यदर्शनः, यथाकामकृतभरणः,

पिशुनजनवचनानधिष्ठितान्तःकरणः सुमेरुरिव विबुधालयः, समस्तजगत्प्रसादशिरःशेखरीभूत-कान्तकीर्तिध्वजः, तर्जितशत्रुव्रजभुजविहिताभयप्रजः, साधुशेमुष्यादृष्टागमपारावारपारैर्निवारितानृतव्रतः, प्रचारैर्विशदीकृतविद्वज्जनविशदचरित्रैर्जडजनसहजामित्रैः पराकूतज्ञैः सत्यप्रतिज्ञैः कृतबहुज्ञैः, विश्वविख्यातसंज्ञैः, संस्तूयमानौदार्यगाम्भीर्यादिगुणग्रामो विद्वज्जनमनोऽभिरामो, विद्वन्मण्डलाखण्डलमहाराजश्रीकर्णसूनुः, श्रीमदनूपसिंहो नाम नरपतिः संगतसप्ताङ्गराज्यं नयेनालंकुर्वन् विराजते।

उदयचन्द्रस्य पाण्डित्यदर्पणात् ।

समस्तविद्वज्जनतोषपोषकरस्वभावो गुणसंग्रही च
दूरीकृतानेकखलप्रचारो विद्यानिधिः सुन्दरसन्निवेशः ।
संस्तूयमानः कविभिः सुधीरो दानैकशीलो नृपकर्णसूनुः
अनूपसिंहः क्षितिपालमौलिभूषामणिर्दीनदयापरो यः ।।

जनार्दनव्यासस्य कामप्रबोधात्

सशक्ति - शक्तित्रयषड्गुणालंकृत - सप्ताङ्गराज्य - राज्यैश्वर्यजितपुरन्दरेषु, सकलहिन्दुकराजमण्डलमौलिकोटीरेषु, महाराजाधिराजमहाराजश्रीमच्छ्री अनूपसिंहराजराजेश्वरेषु.........

जिनचन्द्रसूरिणः पत्रात्

स्वात्मविषयेऽनूपो निवेदयति—

निर्जलोऽपि स्वको देशो दानवारि-प्रवर्षणैः ।
विदुषा येन विहितः स्वनामसदृशः क्षितौ ।।

अनूपविवेकात्

## अनूपसिंहस्य कृतयः

अनूपसिंहो विशेषतः धर्मशास्त्रकार एव सुप्रथितः । तस्य धर्मशास्त्रग्रन्था लेखकस्यानुसन्धान प्रवृत्तिं गभीरानुशीलनं च प्रमाणयन्ति । तद्यथा तस्यानूपविवेकाख्यो ग्रन्थः शालग्रामविषये विदुषां विवादस्य शमनाय निबद्धः ।[1]

### अनूपविवेकः

एकस्मिन् दिवसे जातश्चक्रलक्षणहेतुकः ।

१ अप्रकाशितः । बीकानेर.... [illegible] संस्कृतपुस्तकालये रक्षितः ।

तेषां विवदमानानां ज्ञानाज्ञानसुशालिनाम् ।।
शालग्रामशिलामूर्तिलक्षणानां पृथक् पृथक् ।
आनन्त्यात् सन्दिहानानां बुद्धिवैशद्यहेतवे ।।
तेन राज्ञा मतिमता शालग्राम-परीक्षणे ।
ग्रन्थोऽनूपविवेकाख्यः कौतुकेन विरच्यते ।।

ग्रन्थस्यादौ गणेशविष्णू स्तौति कविः—

देयाद्वो मङ्गलानां ततिमनवरतं यस्य दृक्पात्रमात्र-
प्रादुर्भूतप्रभावाद्रचयति भुवनं विश्वयोनिः समग्रम् ।
क्षोणीभारं निधत्ते शिरसि फणिपतिः शम्भुरत्ति प्रपञ्चं
सोऽयं विष्णुः समस्तामरनिकरशिरोरत्ननीराजितांघ्रिः ।।

ब्रह्म-विष्णु-ब्रह्माण्ड-वराहपुराणादीनि सम्यगनुसन्धाय अनूपो विषयविवेचनं करोति । तथाहि वराहपुराणमनुसृत्य सालेन वृक्षविशेषेण गम्यते ज्ञायते पर्वत विशेषः । स सालग्रामगिरिस्तीर्थविशेषः ।

पञ्चोल्लासात्मके ग्रन्थे अन्त्योल्लासचतुष्टये शालग्राम-पूजनफलम्, मूर्ति-लक्षणम् पूजन-सामग्री, शालग्रामदुर्लक्षणम् शङ्कर-पूजनमित्यादयो विषयाः प्रपञ्चिताः । अनूपविवेकानुसारं मद्यपानविरहिताः शूद्रा अपि शालग्रामपूजाधिकारिणः सन्ति ।

ग्रन्थस्यास्यापरं नाम शालग्राम-विवेक इति ख्यातम । अस्य रचना १७४६ संवत्सरे संजाता ।

## प्रतिष्ठा-प्रयोग-चिन्तामणिः

ग्रन्थस्य भूमिकायामनूपो निवेदयति-अथ सर्वप्रतिष्ठाग्रन्थानालोक्यानूपसिंह-नृपतिः लोकोपकाराय प्रतिष्ठा-प्रयोग-चिन्तामणि-ग्रन्थमारभते ।[1]

ग्रन्थेऽस्मिन् प्रथमं वास्तु-मूर्ति-शिल्पादीनां सविस्तरं विवेचन सम्पादितम् । अत्र राज्याभिषेकप्रकरणे शासनाधिकारिणां कर्तव्यानि वर्णितानि । पश्चात् राष्ट्र-प्रकरणे कोश-बल-दुर्गादीनां सञ्चयस्योपायाः प्रतिपादिताः ।

चिन्तामणौ पूर्तप्रतिष्ठायां वैज्ञानिकं विवेचनं च वर्तते । पूर्तं तु
वापी-कूप-तडागादिदेवतायतनानि च ।

---

१ अप्रकाशितोऽयं ग्रन्थोऽनूपसंस्कृतपुस्तकालये बीकानेरनगरे वर्तते ।

अन्नप्रदानमारामः पूर्तमित्यभिधीयते ।। मनुस्मृति ४-२२६

तत्रोद्यानप्रकरणे **वृक्षवपनम्, वृक्षरक्षणम्, वृक्षजातिनिरूपणम्, वृक्षवर्धनोपायः, वृक्षायुर्वेदः** इत्यादयो विषयाः प्रपञ्चिताः । केनोपायेन फलेषु नानास्वादाः सम्भरणीया इति निर्दशितम् ।

पश्चाद्राष्ट्ररक्षोपायाः सन्दर्शिताः । ग्रन्थस्यान्तिमे भागे प्रजाया मनोरजनोपायाः समाकलिताः । ते हि—तप्ताङ्गारभक्षणम् तप्तघृतस्पर्शादयः कौतुकावहाः सन्ति ।

ग्रन्थेऽस्मिन् ८२० पृष्ठानि लिखितानि सन्ति । प्रायः अष्टशतविषयास्तत्र प्रपञ्चिता वर्तन्ते ।

## श्राद्धप्रयोगचिन्तामणिः

अनूपसिंहेन विरचितोऽयं श्राद्धप्रयोग-चिन्तामणिर्यथानाम गुणोपाधिर्वर्तते । पुस्तकेऽस्मिन् श्राद्धलक्षणम्, उपवेशन-विधिः, श्राद्धार्हब्राह्मणाः, मातृश्राद्धः इत्यादयो विषयाः स्पष्टीकृताः । पुस्तकमिदमनूपसंस्कृतपुस्तकालयेऽप्रकाशितं वर्तते ।

## अनूपरत्नावली

अस्या रत्नावल्या लेखक-परिचय-प्रकरणेऽनूपसिंहेन द्योतितम्—

राठौडाख्यान्वयेऽभून्नृपमुकुटमणिः शूरसिंहः प्रतापी
तत्सूनुः कर्णसिंहो वितरण-विषये कर्ण एवावतीर्णः ।
तस्यात्मजेन स्वकुलगुणभृतानूपसिंहेन बुद्ध्या
बद्धा काले विचित्रा विबुधमुखकरानूपरत्नावलीयम् ।।

पुस्तकेऽस्मिन् काल-निर्णयः, संवत्सरकृत्यम्, संस्काराः व्रतोपवासपर्वदिनानि, दानम्, प्रायश्चित्तमित्यादयो विषया वर्णिताः । विवेचनं तु सूत्र-स्मृति-सिद्धान्तग्रन्थानुसारि प्रामाणिकं प्रयोजितम् । पुस्तकमिदमनूप-संस्कृतपुस्तकालयेऽप्रकाशितं वर्तते ।

## जयाभिषेकपद्धतिः

जयाभिषेकपद्धतौ अनूपसिंहेन राज्ञां जयाभिषेकस्य लिङ्गपुराणानुसारि वर्णनं कृतम् । पुस्तकमिदमनूप-संस्कृत-पुस्तकालयेऽप्रकाशितं वर्तते ।

## कौतुकसारोद्धारः

ऐन्द्रजालिकसिद्धीनां प्रतिपत्तयेऽनूपसिंहेन पञ्चदशोल्लासात्मकः कौतुकसारोद्धार इति ग्रन्थो विरचितः ।[1]

ग्रन्थस्यादौ लेखकः प्रमाणयति—

येन श्रीमदनूपसिंहकृतिना कौतूहलोल्लासिना
स्वान्ते सौख्यकरं श्रुतौ रुचिकरं राज्ञां विनोदास्पदम ।
नानाकौतुक-चित्रितं यदखिलं नागार्जुनीयं मतम्
तद्विज्ञाय वितन्यते कुतुकिनां कौतूहलं मोहनम् ॥

अधोलिखितानि सन्ति प्रमुखकौतुकानि पुस्तकेऽस्मिन् निदर्शितानि—

तप्तलौहलेहनम्, तप्ताङ्गारराशिभ्रमणण्, अग्निचवर्णम्, जलोपरिचलनम्, मध्याह्ने तारादर्शनम्, कुञ्जरादिस्वरूपकरणम् जलपूरितपात्रकम्पनम्, पिशाचदर्शनम्, कुम्भजलपानम्, निद्राकरणम् जलस्य तक्रीकरणम्, कृत्रिममुक्तादिकरणम्, मृतसंजीवनी च ।

## संस्कृतपत्राणि

महाराजानूपसिंहो जैनाचार्यैः सह संस्कृतभाषायां पत्र-व्यवहारं कृतवान् । तस्य १७४७ विक्रमसंवत्सरे लिखिते द्वे पत्रे प्राप्येते । एतयोर्द्वयोः प्रथमं पत्रमुद्ध्रियते—

स्वस्ति श्रीमहाराजाधिराजमहाराजश्रीमदनूपसिंहप्रभुवर्याणां श्रीमज्जिनदेवभजनावाप्त-सकलजिनेन्द्रज्ञानवैभवेषु, तृणीकृतजगत्सु, सकलजैनाभिवन्दितचरणेषु, श्रीपूज्यजिनचन्द्रसूरेषु वन्दनाततिनिवेदकमदः पत्रम् । विशेषस्तु पूर्वं सर्वदैव भवदीयः कश्चिद्यतिवरोऽस्माकं सार्थे स्थितः । इदनीमत्र भवदीयः कोऽपि नास्ति । भवद्भिरपि तूष्णीं स्थितमस्ति । तत्किमिति । अतः परमेक उपाध्यायः पाञ्चाख्योऽथवा जयतसी एतयोर्मध्ये यः कश्चिदायाति स सत्वरं प्रेषणीयः । चातुर्मास्यमत्रागत्य करोति तथा विधेयम् । अस्मिन्नर्थे विलम्बो न विधेयः । किमधिकम् । मिती पौष शु० ८

एतस्य पत्रस्योत्तरमपि बीकानेरे संरक्षितं वर्तते ।

---

१ अनूप संस्कृतपुस्तकालयेऽप्रकाशितो वर्तते ।

## लेखिता ग्रन्थाः

अनूपसिंहस्य सत्प्रवृत्ति वैदुष्य-भक्ति च समाकर्ण्य भारतस्य विविधभागेभ्यो महाकवयो विद्वांसश्च समागत्य विक्रमपुरमाश्रितवन्तः। तस्य पूर्वजानां सुकृतिभिरभिप्रणीता बहवो विद्वांसः समागताः। फलतः तत् पुरं विद्वन्मण्डलमण्डितमासीदेव। एतैर्विद्वत्समाजैः तेषां नृपतीनां युगे विक्रमपुरं तु सकलभारतस्य प्रतिनिधीभूतमेवासीत्।

विक्रमपुरीया पण्डिता न केवलं वाचा शास्त्रार्थविवेचनं कुर्वाणा लोककल्याणं विदधतिस्म अपितु तत्तद्विषयकान् शास्त्रग्रन्थानधीत्य रुचिरां ज्ञानद्युति भृशं प्रकाशितवन्तः। एतेषां लेखकानां बहवः कृतयोऽद्यापि विक्रमपुरस्य बहुषु पुस्तकालयेषु संरक्षितास्तीर्थभूमयः संजाताः। तासां कृतीनां संक्षिप्तविवरणमधः प्रस्तूयते। प्रथमं तावत्काव्यरचनाः संगृह्यन्ते। अनूपसिंहस्यौदार्यगुणमनुस्मरन्तः कवयः स्वकृतीनां नामानि प्रायशोऽनूपोपाधिकानि कृतवन्तः। कतिपयकाव्यानि तस्य महाराजस्य गुणादर्शं प्रतिष्ठापयितुमेव रचितानि।

### अनूपसिंहगुणावतारः

अनूपसिंहगुणावतारस्य कर्ता विठ्ठलदीक्षितस्य विषये नाद्यापि किञ्चिद्विश्वसनीयं ज्ञायते। नाम्ना स दक्षिणभारतीयः प्रतिभाति। गुणावतारेऽस्मिन् महाराजस्य जीवनचरितस्य दशावतारा अधोलिखितक्रमेण प्रघट्टिता —

आशीर्वाद–, सौन्दर्य–, सम्पद्–, विजय–, प्रताप–, दान–, यशस्–, धर्म–, भक्ति–, अभयावतारश्च। एतेषु दशावतारेषु १०२ पद्यानि शार्दूलविक्रीडितस्रग्धरा-शिखरिणी-वसन्ततिलकादिषु छन्दःसु प्रवर्तितानि। यथानामैतेषु अवतारेषु विषया वर्णिताः सन्ति। पुराणेतिहासेषु विश्रुतानां देवादीनामपि अनूपेन सह तुलना नास्तीति कविर्विविधालङ्कारसंयोजनेन प्रतिपादयति। तथा हि कुबेरस्य तुल्ययोगितायाम्—

पद्मे ते नयने करे च मकरो जानुद्वये कच्छपः
शंखः कण्ठरुचौ मुकुन्दमहिमा चित्तेऽथ नीले कचे।
कुन्दश्रीः रदने स्मिते च रुचिरं खर्वत्वमेतावता
तुल्यो हन्त कथं नरेश धनदः स्यात् किन्नरेशस्त्वया॥

सूर्यौपम्यं विकल्पयति विठ्ठलः प्रतापावतारे

ये तावत् त्वत्प्रतापं दिनपतिवलयेनोपमिन्वन्ति धीराः
कीरास्ते पूर्वशैलीकुशलमतिभुवो नूत्नवाचंयमास्ते ।
चण्ड त्वन्मण्डलाग्रप्रचुररुचिभृता तेजसा ते हताङ्गा
भित्त्वा मार्तण्डबिम्बं यदपतनभयां वीरभूमिं भजन्ते ॥

अनूपस्य कृष्णभक्तिस्तु

अविकलितजपादि-ध्यानधाराधुरीणं
मधुविदलन-पूजादर्शनं ते महीन्द्र ।
अवतरति न भेदं नापि सन्देहखेदं
भ्रमरसविनिवेदं नाप्यभेदं न चैव ।

श्लेषपरेयं विट्ठलस्योक्तिरनूपमहाराजस्याभयत्वं प्रस्तौति—

अभया भवन्ति शरणं यदागता
यदनूपसिंह भवतीति नाद्भुतम् ।
अभयं तु हन्त सभयं विभाव्यते
न मनाग् विचित्रमिदमानशे मनः ॥

अनूपगुणावतारस्तु वस्तुतः गीतिकाव्यमेव सुप्रतिष्ठितम् ।

र्न चास्तगाम्येष विभाति नित्यम् ॥

अनूपस्याश्रयणीयत्वं प्रशसन् कवि· प्राह —

परविषयनियोज्यज्ञापितापूर्वमूर्त्तिः
फलकरणसमर्थः सर्वदा सश्रितानाम् ।
गुरुविभवविधेय. प्रार्थ्यमानो जनौघै-
र्जयति सुखमनूप-श्रीमहाराजमौलिः ॥

पुस्तकस्याप्रकाशिता प्रति· अनूपसस्कृतपुस्तकालये वर्तते ।

**अनूपरत्नाकरः**

संग्रहग्रन्थोऽयमनूपरत्नाकरो विद्यानाथसूरिणा विरचितो महाराजानूपस्याज्ञया ।[1] अत्र शालग्राम–सामुद्रिकशास्त्र–प्रतिमाविज्ञान–काव्यशास्त्र–राजधर्मादिविषयाणां पारम्परीणशास्त्रानुसारं विवेचनं वर्तते । अस्याप्रकाशिता प्रतिः अनूपसंस्कृत-पुस्तकालये वर्तते ।

**अनूप-विलासः**

अनूपविलासस्य लेखको मणिरामो ग्रन्थमिमं महाराजानूपस्य कीर्तिस्फीतये व्यरचयत् । तथाहि—

राज्ञः श्रीमदनूपपुण्यकृतिनः कीर्त्यै मया तन्यते ।
रत्नं संवत्सर-कृत्यनामरुचिरं प्रीत्यै सतां सर्वतः ॥

अत्राष्टरत्नानि—संवत्सराचार-समय-संस्कार-श्राद्ध-शुद्धि-दान - प्रकीर्णकाभिधानि प्रकरणानि सन्ति । एतेषु यथानाम धर्मविषयो वर्णिताः । तद्यथाचाररत्ने—श्मश्रुकर्मदन्तधावन-केशप्रसाधन-प्राणायामादयः सरहस्यं व्याख्याताः । अस्याप्रकाशिता प्रतिः अनूपसंस्कृतपुस्तकालये वर्तते ।

**तीर्थरत्नाकरः**

तीर्थरत्नाकरस्य रचयिता अनन्तभट्टो महाराजानूपस्याज्ञया ग्रन्थमिमं रचितवान् । तथाहि—

आज्ञयानूपसिंहस्य समाश्रितकृपानिधेः
अङ्गीकार्यः स विद्वद्भिः क्षाम्यद्भिर्मम कौतुकम् ॥

---

1. अनूपरत्नाकरस्य प्रथमकल्लोलस्य पुष्पिका—इति श्रीमहीमण्डलाखण्डलस्य श्री महाराजाधिराजश्रीमदनूपसिंहदेवस्याज्ञया श्रीविद्यानाथ-विरचितेऽनूपरत्नाकरे प्रथमः कल्लोलः ।

२

महानयमुपक्रम. यत्र ७९३ पृष्ठानि सन्ति । नानापुराणान्यनुशील्य ग्रन्थेऽस्मिन् प्रामाणिकता सम्पादिता अनन्तभट्टेन । तथाहि—

अष्टादशपुराणानि त्रिस्थलीसेतुमेव च ।
दृष्ट्वा यथामति मया रचितस्तीर्थसंग्रहः ॥

तीर्थरत्नाकरे भारतस्य प्रमुखतीर्थानां माहात्म्यं तत्र किं करणीयमिति च विस्तारशो वर्णितम् । पुस्तकस्याप्रकाशिता प्रतिः अनूपसंस्कृत-पुस्तकालये वर्तते ।

## व्यवहारनिर्णयः

व्यवहार-निर्णयः शिवानन्दगोस्वामिना विरचितः । ग्रन्थोऽयं विधिशास्त्रस्य सरलसरलतया व्याख्यार्थं प्रणीतः । शिवानन्दगोस्वामी अनूपसिंहस्य गुरुरासीत् । तेन प्रायः चत्वारिंशत् पुस्तकानि व्याकरण - साहित्य - धर्मशास्त्र-ज्योतिषादि-विषयानधिकृत्य सम्पादितानि

शिवानन्दस्य पितामहः श्रीनिवासदीक्षितः दक्षिणभारते पेण्णानदीतटे पाणंपट्ट-ग्रामस्य निवासी बभूव । स उत्तरभारतमागम्य काशीनगर्यां वसतिं चकार । तस्य पुत्रो जगन्निवासः काशीतः बुन्देलखण्डमागत्य राजाश्रयं जग्राह । तत्र देवीसिंहो राजा बभूव । देवीसिंहस्य समाश्रये स सिद्धान्तसिन्धुं विरचितवान् । पश्चादनूपसिंहस्य विद्वदादरं श्रुत्वा स विक्रमपुरमाजगाम । तत्रैव सोऽनूपसिंहस्य गुरुः सञ्जातः । अनूपसिंहः तस्मै गुरवे ग्रामद्वयं ददौ ।

व्यवहारनिर्णये मनुस्मृतिवद् व्यवहारनिर्णयस्य प्रकरणानि सुसंहतानि सन्ति । अस्य ग्रन्थस्य रचना १७३५ विक्रमसंवत्सरे बभूवेति प्रतिभाति ।

पुस्तकस्याप्रकाशिता प्रतिः अनप-संस्कृत-पुस्तकालये वर्तते ।

## दानरत्नाकरः

दानरत्नाकरस्य रचयिता विश्वनाथभट्टस्य पुत्रो मुद्गलभट्टस्य पौत्रश्च होसिंगरामभट्ट आसीत् । महाराजानूपसिंहेनाज्ञापित एव तेन ग्रन्थोऽयं रचितः । तथाहि—'स्वस्ति श्रीमत्सकलभूमण्डलाखण्डलदिङ्मण्डलीमण्डन-सकलसामन्तचूडा-मणि-किरण - रंजित - चरणारविन्द - महाराजानूपसिंहाज्ञया होसिंगोपनामकभट्ट-मुद्गलाङ्गज-भट्टविश्वनाथात्मज-भट्टराम-विरचिते दान रत्नाकरे'—इत्यादि ।

अत्र दानलक्षणं दानकालं च विविच्य बहुमूल्यवस्तूनां हिरण्य-रत्न-धेनु-रथाश्वादीनां वितरणस्य माहात्म्यं प्रदर्शितम् । सर्वातिशायि तु अन्नदानमेव स्मृतम् । विविधसूत्रस्मृतिपुराणादीनां सारं वैज्ञानिकविधिना निर्णीय व्यवस्था निर्णीता इत्यनेन लेखकस्यानुसन्धानसरणिः प्रतीयते ।

अप्रकाशितो दानरत्नाकरोऽनूपसंस्कृतपुस्तकालये वर्तते ।

## शान्तिसुधाकरः

शान्तिसुधाकरस्य रचनां विद्यानाथसूरिः महाराजानूपसिंहेनाज्ञापित एव १७५४ विक्रमसंवत्सरे कृतवान्[1] १०८८ पृष्ठात्मके ग्रन्थेऽस्मिन् ८६ कल्लोलाः सन्ति । अत्र न केवलं वैयक्तिकशान्तये, अपितु सामाजिकशान्तयेऽपि विधानानि प्रकल्पितानि । बहूनामुपजीव्यग्रन्थानामनुशीलनेनेदृशः प्रामाणिको महाग्रन्थो विरचितः सूरिणा ।

शान्तिसुधाकरोऽप्रकाशित एवानूपसंस्कृतपुस्तकालये सुरक्षितः ।

## अनूपमहोदधिः

अनूपमहोदधिः ज्योतिष-विषयस्य करण-ग्रन्थो वीरसिंहगणकेन विरचितः । विद्वानयं महाराष्ट्रदेशतो विक्रमपुरमाजगाम । तथा हि—

दक्षिणेषु मरहट्टदेशके सर्वलोकबहुसौख्यकारके
गौतमीतटविराजिखेटरे नाम्नि भूमिसुरधाम्नि सत्पुरे ।।

इति आर्यसिद्धान्ते कविना स्वजन्मभूमिविषये लिखितम् । वीरसिंहेन 'आर्य-सिद्धान्ततुल्यकरणम्' चमत्कार-सिद्धिः, अनूपमहोदधिः, खेटप्लवः, स्त्रीजातकम्, इति पञ्च ग्रन्था लिखिताः । अनूपमहोदधेः रचना १६७३–१६८१ ई० वर्षान्त-राले बभूव । अत्र स्वखरश्माः संज्ञा– सक्रान्ति– कालमान– ऋतुनिर्णय– सप्तर्षिनिर्णय-इति ख्याताः सन्ति

अप्रकाशितोऽनूपमहोदधिरनूपसंस्कृतपुस्तकालये संरक्षितः ।

## जनुपद्धतिकल्पवल्ली

जनुपद्धतिकल्पवल्लीति यथानाम जातक-ग्रन्थस्य प्रणेता त्र्यम्बकभट्टः आसीत् । त्र्यम्बकः स्वकुलमधोलिखित श्लोके वर्णितवान्—

गोदावरीसौम्यतटे वरिष्ठे नन्दीतटेऽभूदुपमन्युगोत्रः ।
भूयः सगोत्रोऽखिलपुण्यपात्रश्चिन्तामणिर्द्योतितवेदनेत्रः ।।
तस्यात्मजाः पंच बभूवुरेषां श्रीविश्वनाथो गणकाग्रणीर्यः ।
तदात्मजस्त्र्यम्बकनामधेयस्तेनोदिता पद्धतिकल्पवल्ली ।।

ग्रन्थस्यास्य रचना कृष्णातीरे १७४१ विक्रमसंवत्सरेऽनूपसिंहप्रभोराज्ञया समाप्ति-

---

1 ई० १९६८ वर्षे ।

मगात् । इति लेखकस्य विज्ञप्तिः । अप्रकाशिता कल्पवल्ली अनूपसंस्कृतपुस्तकालये सुरक्षिता ।

**अनूपविलासः**

महाराजानूपसिंहस्य राज्याभिषेकसमये १७२६ विक्रम-संवत्सरे गङ्गारामस्य पुत्रेण मधुसूदनपुरोहितेनानूपविलासो विरचितः । तथा हि लेखकस्योक्तिः

स्वस्ति-श्रीमदनूपसिंहनृपतेरेतद्विलासाभिधम् ।
गंगाराम-सुतेन सारगणितग्रन्थः समातन्यते ।।

अनूपविलासस्यापूर्णा अप्रकाशिता एव प्रतिः अनूप-संस्कृत-पुस्तकालये रक्षिता ।

**अनूपमेघमाला**

अनूपमेघमालेति ग्रन्थः होसिङ्ग-भट्टेन महाराजानूपसिंहस्याज्ञया विरचितोऽखिललोकोपकाराय । तद्यथा लिखितं भूमिकायां भट्टेन-स्वस्ति श्रीमन्महाराजाधिराजकलिकर्णात्मज-क्षितिपतितिलकानूपसिंहाज्ञया होसिङ्गोपनामकभट्ट-विश्वनाथात्मजरामो ब्रह्मादिस्तम्बान्ताखिलदेह्युपकारार्थमनूपमेघमालाख्यं नवीनंनिबन्धमारभते । पुस्तकस्य चतुष्प्रकरणेषु वृष्टिकामप्रयोगाः, वर्षाकारक-तान्त्रिकप्रयोगाः, अतिवृष्टिशान्तिः, अनावृष्टि-शान्तिः, दुर्भिक्ष-शान्तिः, वर्षायोगाः इत्येते विषया द्रष्टव्याः ।

अनूपमेघमालाद्यावधि न प्रकाशिता सती अनूपसंस्कृतपुस्तकालये वर्तते ।

**चिकित्सा-मालतीमाला, अमृतमंजरी, संतानकल्पलता च[1]**

प्रागेव सन्दर्भितो होसिंगरामः धर्मशास्त्रज्योतिषादिविषयाणां पण्डित आसीत् । स एव चिकित्सा-मालतीमालादि-पुस्तकानां रचयिता महाराजानूपसिंहस्याज्ञया आयुर्वेदग्रन्थानिमान् कृतवान् । चिकित्सा-मालायां गुच्छेषु त्रिभागाः सन्ति । तत्र शरीरस्थबहुरोगाणां निदानं वर्णितम् । अमृतमञ्जर्यां विविधप्रकाराणां विषाणां स्थावर—जङ्गम-मिश्र—प्रकीर्णादीनां सभेदं सरहस्यं च व्याख्यानं कृतं वर्तते तेषामुपचारा मन्त्राश्च तत्रैव प्रकल्पिताः । पुस्तकं पंचमंजरीषु विभक्तम् ।

सन्तानकल्पलतायां सन्तानोत्पत्ति-संरक्षण-निरोधादिविषयाणां विवेचनं सप्तस्कन्धात्मकं कृतम् ।

**सन्तानकल्पलता**

अपरेयं कल्पलता सप्तप्रकरणात्मिका त्र्यम्बकरायवैद्येन सम्पादिता महाराजानूपसिंहस्याज्ञया । तद्यथा लेखकोक्तिः —

१. इमानि पुस्तकानि अप्रकाशितान्येवानूप पुस्तकालये संरक्षितानि ।

इति श्रीमत्सकलदिग्जैनभूमिपालचूडामणि-सकला-नेकगुणपरिपूर्णा श्रीमन्महाराजानूपसिंह-कारितायां वैद्य-त्र्यम्बकरायकृतायां सन्तानकल्पलतायां……
त्र्यम्बकोऽयं होसिंगकृष्णस्य पुत्र आसीत्। पुस्तकेऽस्मिन् सन्तानबाधकरोगाणां हरणं, बालरक्षा, बालोत्पत्त्युपाया:, गर्भधारणोपायाश्च निर्दशितानि। सन्तानकल्पलताया अप्रकाशिता प्रतिः अनूपपुस्तकालये वर्तते।

## रसराज-संस्कारः

हंसराजेन रसराजसंस्कारोऽनूपस्याज्ञया विरचितः। तथाहि—

हंसराजो भिषक्श्रेष्ठोऽनूपसिंहनृपाज्ञया।
तनुते विंशतिरेतान् क्रमाल्लक्षण-संयुतान्॥

तत्र पारदस्य विंशति-संस्कारा निर्दशिता इति स्पष्टमेव।

पुस्तकस्याप्रकाशिता प्रतिः नोखानगरस्य महर्षिसदने संरक्षिता।

## कामप्रबोधः

'कामशास्त्रस्य ग्रन्थोऽयं महाराजानूपस्याज्ञया जनार्दनव्यासेन विरचितः[1] इति जनार्दनवचसा प्रमाणितम्—

अनूपसिंहः क्षितिपालमौलिभूषामणिर्दीनदयापरो यः।
तदाज्ञया व्यासजनार्दनाख्यः कामप्रबोधं तनुतेऽविद्वान्॥

कामप्रबोधे १० प्रकाशाः सन्ति। तेषु प्रथमाधिकरणे नागरकवृत्तं महत्त्वपूर्णमेव। चतुर्थप्रकाशे अङ्गराग-प्रसाधन-सुगन्धि-द्रव्य-मुखसुगन्धीनां वर्णनं कृतम्।

पुस्तकस्य दशमे प्रकाशे स्त्रीणां बन्ध्याकरणस्य सन्ततिनिरोधस्य चौषधय उपसंहृताः। तथा हि

त्रैहायनं गुडं याति मासार्धं च पलोन्मितम्
तस्या वन्ध्यत्वमाशु स्यात् नात्र कार्या विचारणा॥

## अनूपसंगीतरत्नाकरः, अनूपसंगीतविलासः, अनूपसंगीतांकुशः, अनूपरागसागरः; अनूप-संगीतवर्तमानम्, अनूपोद्देशः

एते संगीतग्रन्था महाराजानूपस्याश्रितेन सङ्गीताचार्येण भावभट्टेन विर-

1. कामप्रबोधस्याप्रकाशिता प्रतिः बीकानेरस्थानूप - संस्कृत - पुस्तकालये सुरक्षिता।

चिताः ।[1] कोऽयं भावभट्ट इति अनूपसङ्गीतविलासे कवेरुक्त्या विज्ञेयम् —

कृष्णात्रगोत्रसम्भूतं कुलमाभीरदेशजम् ।
पुरं धवलमित्याहुः प्रपिता तानभट्टकः ।।
पिता जनार्दनः साक्षाज्जनार्दन इवापरः ।
मातुः स्वप्नभवा नाम भावेत्युक्तं स्वपूर्वजैः ।।
तौर्यत्रिकं तु संगीतं संगीती तज्ज्ञ उच्यते ।
घनश्यामेन चानुष्टुप् चक्रवर्तीति कीर्तितम् ।।
श्रीमत्साहिजहां - भूपतिलकोद्भुतभानुना ।
श्रीमत्साहिसुजाभूपदत्तं रायपदं ततः ।।
श्रीभावभट्ट - संगीतीरायानुष्टुप्चक्रवर्ती ।
एवं नामेदं जातं श्रीमदनूपविभो मम ।।

अनूपसिंहस्य गुणग्राहकतां श्रुत्वैव भावभट्टः तं शरणं जग्राह । अनूपस्याग्रहादुपर्युक्त-ग्रन्था विरचिताः । सङ्गीतरत्नाकरे स्वर-राग-प्रबन्ध-वाद्य-ताल-नाटक-रस- नृत्यादीनां विषयाणां नवाध्यायेषु विवेचनं विद्यते । रागाणां विकासस्य परिचायकोऽयं ग्रन्थो बहुमूल्य एव ।

अनूपसंगीत-विलासस्य १६ अध्यायेषु स्वरराग-नाद-श्रुतीना सभेदं सरहस्यं च विवृतिर्विद्यते । रागाध्याये सप्ततिरागाः सन्दर्शिताः । रागाणां ध्यानं तु समाधिपूर्वकं कर्तव्यमिति भावभट्टस्य सम्मतिः । तथा हि शुद्धषाडवः

तरुमूले स्थिरचित्तः प्रियया सह संहसन् ।
वृतोत्तमाङ्गमुकुटः शुद्धषाडव ईरितः ।।

अनूपरागसागरे तु द्वादशाध्यायेषु रागाणामानन्त्यमेव प्रदर्शितम् । तथा हि यज्ञ-नामधारिणो रागा अग्निष्टोमः, वाजपेयः, अश्वमेधः, राजसूयः, महाव्रतम्, विश्व-जित्, ब्रह्मयज्ञः, प्राजापत्यम्, स्विष्टकृतम्, मनोहरा एव श्रूयन्ते । अपरे च रागाः त्रैलोक्यमोहनः, वीरः, गजच्छाया, रौद्रः, विष्णु-विक्रमः, कामोदः मोक्षद इति संज्ञिताः ।

अनूपसङ्गीतवर्तमाने तु रागवाद्यादिभिः सह रसनृत्यादीनां सम्यङ् निरूपणं कृतम् । नृत्यप्रकरणे शिवप्रिय-मायूर-दण्ड - चरचरीप्रभृतीनां रासकानां सभेदं वर्णनं विद्यते ।

---

१. अनूपसंगीतरत्नाकरस्य, अनूपसंगीतविलासस्य, अनूपसंगीताङ्कुशस्य च प्रकाशनमार्यभूषणप्रेस-पुण्यपत्तनात् संजातम् अनूपसागरः, अनूपसंगीतवर्तमानम्, अनूपोद्देशश्च बीकानेरस्थानूपसंस्कृतपुस्तकालयेऽप्रकाशितानि सन्ति ।

भावभट्टस्तु महान् लेखक आसीत् । तेन बहवोऽन्ये ग्रन्था अपि विरचिताः । तेषु अधोलिखिता. बीकानेरनगरेऽनूपसंस्कृत-पुस्तकालये विराजन्ते—

गमकमंजरी तस्याष्टीका च, कुतुपाध्यायः, भावमंजरी, नष्टोद्दिष्टप्रबोधः, रागविवेकः, मुरलीप्रकाशश्च । गमकमंजर्यां स्वर-कम्पस्य, कुतुपाध्याये १०६ वाद्यानां, भावमंजर्यां नृत्यस्य, नष्टोद्दिष्ट-प्रबोधे स्वरप्रस्तारस्य तथा मुरलीप्रकाशे मुरलीवाद्यस्य गतीनां जातीनां च विश्लेषण विद्यते ।

## पाण्डित्य-दर्पणः

पाण्डित्य-दर्पणस्य प्रणेता उदयचन्द्रो महाराजेनानूपसिंहेन परं प्रभावित आसीत् ।[1] स तु अनूपसिंहस्य महान् प्रशंसकोऽभवत । तेन महाराज-विषये लिखितम्

श्रीसूर्यवंशावतंस - सदसत्यविवेचन - राजहंस-महाराज - श्रीमदनूपसिंहदेवे-नाज्ञप्ते.........

उदयचन्द्रः श्वेताम्बरखरतरगच्छीयो जैनमुनिरासीत् । तस्य गुरुः भट्टारकः श्रीजिनचन्द्रः सूरी आसीत् उदयचन्द्रेण ग्रन्थोऽयं १७३१ विक्रमसंवत्सरे सम्पादितः ।

अपरञ्च हिन्दीभाषायामुदयचन्द्रेणानूपरसालः १७२८ विक्रमसंवत्सरे, बीकानेर-गजल-पुस्तकं च १७६५ विक्रमसंवत्सरे विरचिते ।

पाण्डित्यदर्पणे नवप्रकाशाः सन्ति । तेषु प्रकाशेषु क्रमशोऽधोलिखिता विनिर्णीताः सन्ति—

**प्रथमप्रकाशे**—गुरुभक्ति, सत्यभक्ति, विवेकभक्तिः, पण्डितभक्तिः, मूर्खनिन्दा, खलनिन्दा, पण्डितान् प्रति विज्ञप्तिः, विद्वद्वशीकरणोपायः, पुरवर्णनं, राजवर्णन च ।

**द्वितीयप्रकाशे**—राज्यनिर्णयः, सूर्यप्रभवः, उदयतीति पदस्य विचारः ।

**तृतीयप्रकाशे**—भट्टारकलेखः, असम्बद्ध-पद-निर्णयः, वाक्य-निर्णयः, सद सद्व्यक्तिहेतवे' इति विवेचनम्, गुणदोषपदविवेचनम्, चन्द्रहास इति पदं सूर्यवाचकं चन्द्रवाचकं वा ।

**चतुर्थप्रकाशे**—वासुदेव इति पदस्य कोऽर्थः ।

**पञ्चमप्रकाशे**—रामनवमी-निर्णयः ।

**षष्ठप्रकाशे**—श्राद्ध-निर्णयः ।

---

१ पुस्तकस्य [illegible] प्रतिः अनूपसंस्कृतपुस्तकालये वर्तते ।

**सप्तमप्रकाशे**–फिट्-सूत्रनिर्णयः ।
**अष्टमप्रकाशे**–त्रपुसी, मंगल्या तथा आर्याणीति पदानां निर्णयः ।
**नवमप्रकाशे**–प्रज्ञामुकुरमण्डनादर्शः ।

जैनोऽपि लेखक उदयचन्द्रो वेदवेदाङ्गादिषु परं प्रावीण्यं गतः प्रतिपक्षिपण्डितानां कृतिषु संशोधनं विधातुं पाण्डित्यदर्पणस्य रचनां चकार । पाण्डित्य-दर्पणे धर्मशास्त्रव्याकरणार्थशास्त्रकाव्यशास्त्रादीनां विषयाणां गम्भीर-विवेचनं सोत्कर्षं सम्पादितमुदयचन्द्रेण ।

पाण्डित्यदर्पण इति ग्रन्थः न केवलं महाराजानूपसिंहस्यापितु प्रतिपक्षिसहायस्य बालचन्द्रस्याप्यादरास्पदं संजातम् ।

महाराजानूपसिंहस्याज्ञया उदयचन्द्रः स्वगुरोर्जिनचन्द्रसूरिणः पादपद्मेषु विनिवेदयितुं विज्ञप्ति-पत्रमेव पाण्डित्यदर्पणं विरचितवान् । ग्रन्थेऽस्मिन् पत्र-शैली क्वचित् प्रस्फुटीभवति ।

## अनूपकालिका अपरे ग्रन्थाः

बहवो विद्वांसो विक्रमपुरे राजाश्रयं न स्वीकृतवन्तः । तेऽपि तस्मिन् युगे सारस्वतसाधनार्थं समीचीनां स्थितिमनुभूय साहित्यरचनायां कृतोत्साहा बभूवुः । एतादृशेषु कविषु हरिद्विजः सर्वोपरि राजते ।

### हरिद्विजः

अनूपयुगस्य सर्वोच्चः कविरासीद्धरिद्विज इति निःसंशयमेव । स महासत्त्व-सम्पन्न आसीत् । न कमपि शरणं प्राप्तुं समर्थो भवति स हरिः य एवं वदति—

व्रजनाथं परित्यज्य योऽन्यं नाथमुपाश्रयेत् ।
पिपासुः स्वर्धुनीं हित्वा याति मूढो मरीचिकाम् ॥

गोपालगीता १६

हरिद्विजो परं देवपरायण आसीत् । तेन प्रायः सर्वेषां लोकप्रियदेवानां स्तुतिः कृता । तस्य काव्यरचना भावप्रवणा गीतात्मिकाः सन्ति । तासु नृसिंहमायाशतकं प्रथममेव ।

हरिद्विजस्य कौटुम्बिकाः सर्वे विद्वांसः औरंगजेबस्योत्कर्षमसहमाना एव ये केचित्तस्मिन्काले हिन्दुत्व-रक्षका आसन्, तेषामेव पक्षग्रहणं कुर्वन्ति स्म । सम्भवत इदमेव कारणं वर्तते यत्ते अनूपसिंहस्य सामीप्यं न स्वीकृतवन्तः, यतः अनूपोऽपि अवरंगजेबस्य सहायक आसीत् । हरिद्विजस्तु अवरंगजेबस्य शत्रुं दुर्गादासमेव प्रशंसितवान् । तथा हि—

औरंगोरगभंगभ्रमणविधिपटुर्वैनतेयो विहंगः
शत्रूणा राज्यमम्भच्चलदलदमने दारुणो दिगतंगः
क्रूराणा मौरभेयीकुलकवलकृतां कण्ठरुक्कालपाशः
षट्त्रिंशन् क्षत्रियाणामयमवनितले दुर्गवद्दुर्गदासः ।।

दुर्गादासप्रशस्तेः ७

अस्यामेव दुर्गादासप्रशस्तौ हरिद्विजेन स्वकुलस्य वर्णनं कृतम् । तथा हि—

ज्येशाख्यस्तस्य सूनुर्जगति विपुलयन्नुज्ज्वलां स्वा समज्ञा—
मुर्वीमुर्वीशदत्तामपि विपुलतमां नैव योऽङ्गीचकार ।
तत्पुत्रौ द्वावभूतां विमलतरमती वेदवेदाङ्ग-विद्या—
विद्वांसौ ब्रह्मचर्यव्रतचरणपरौ मोहनः सुन्दरश्च ।।
स्वच्छस्वान्तः स्वीयवंशे विशिष्टः
शिष्टैरिष्टः शेवधिः सद्गुणानाम् ।
ज्योतिर्विद्वान् मोहनस्यात्मजन्मा
श्रीमान् गंगारामनामा द्विजेन्द्रः ।।

अयमेव गंगारामो हरिद्विजस्य पितासीत् । हरिद्विजस्य लघुभ्राता हरिदेव आसीत् । गंगारामो यदा मेड़ता नगर्यामवसत् तदा हरिद्विजस्य हरिदेवस्य च जन्माभवत् ।[1] पश्चात् गंगारामः विक्रमपुरमागत्य तत्रैव न्यवसत्, यदा हरिद्विजः पंचविंशतिवर्षीय आसीत् । स्वकौलीनं व्रतं कमपि राजानमभिसम्बोधयता तेन स्पष्टीकृतम्

त्वं लक्ष्मीवान् वयमपि सदा पूर्णविद्याधनाढ्या—
स्त्वां सेवन्ते धनलवपरा वस्तुजिज्ञासवोऽस्मान् ।
त्वं शूरश्चेद् वयमपि तदा वादिविक्षेपदक्षा—
स्त्वं निष्कामो वयमतितरां तिष्ठ राजन् व्रजामः ।।

हरिद्विजः धनिकान् राज्ञो वा प्रति स्वमनोवृत्तिं व्यंजयति स्वकीये धन्व-खलाष्टक - नामके काव्ये —

सत्यानृतं भवति यत्र धनाभिवृद्ध्यै
यत्रामृतं मधुरिमान्वितमुज्झितं स्यात् ।
प्रायो न यत्र कुधियां सदसद्विवेकः
धन्वस्थलेषु खलेषु च को विशेषः ।।

हरिद्विजस्य काव्यवैशिष्ट्यं, स्वभावचारुत्वं च तस्य भ्रातृव्येन शिवराम व्यासेन प्ररोचितम् । तद्यथा—

---

१ मेड़ता तु मीराबाई देव्या जन्मभूमिः सुप्रसिद्धैव ।

तन्नन्दनः सज्जनरंजनः कृती हरिर्बभूवाद्भुतवाग्बृहस्पतिः ।
महामतिः संसदि नन्दयन्मनः सदा नृणां सुन्दर-दुन्दुभिस्वनः ।।
विलोक्य यत्काव्यकलासुकौशलं मुदं दधे कम्प्रशिरा सरस्वती ।
स्वयं कविः स्वीयकवित्वहानितः सदाशना दीनमना मनागभूत् ।।

हरिद्विजो बहूनां साहित्यिकविधानां लेखक आसीत । तथापि प्रथमतः स गीतिकाव्यकार एव । गीतिषु तस्य नृसिंहमायाशतकं गोपालगीता च सर्वोत्तमे ।

## नृसिंहशतकम्

विक्रमपुरस्य भगवतो नृसिंहस्य मन्दिरं वर्तते । तस्य भगवतो भक्ताः सन्ति हरिद्विजस्य कौटुम्बिका अधुनापि । तमेवाधिकृत्य हरिद्विजेन नृसिंहशतकं विरचितम् । पुस्तकेऽस्मिन् सर्वेषु पद्येषु अन्तिमश्चरणो विद्यते —

हा हन्ताहं तव नरहरे मायया वञ्चितोऽस्मि ।

अत्र जन्मनः प्रभृति मरणपर्यन्तं मरणानन्तरं वा दुःखस्य छाया न त्यजति कमपि पुरुषमिति स्पष्टीकृतम् । ननु सुखमनुभूयते किन्तु प्रतिपदं सुखं तु दुःखाभिभूनमेव भवति । तथाहि गृहस्थाश्रमे

लास्यं पश्यन् परमललितं लोलदृग् – लासिकानां
हास्यं कुर्वन् सह सहचरैस्तासु मुंचन् कटाक्षान्
कामं कामज्वरजनितरुग्भेषजासक्त – चित्तः
हा हन्ताहं तव नरहरे मायया वञ्चितोऽस्मि ।।

नात्रैवेतिश्रीः । मरणकालोऽपि समायातः —

कासश्वासादिभिरनुदिनं घर्धरध्वान्तकण्ठोः
दृष्टया हीनः श्रवणविकलो यष्टिमादाय गच्छन् ।
कालक्रूर–ज्वर–बहुरुजा क्रान्तगात्रो नितान्तं
हा हन्ताहं तव नरहरे मायया वंचितोऽस्मि ।।

मरणानन्तरं यमलोके पीडाभिभूतिः नानायोनिषु परिभ्रान्तिर्वा कविना सविस्तरं चित्रिता। ननु स्वर्गोऽपि पुण्यकर्मणाधिगम्यते । तत्र तु

देवोद्याने दिवि सुरसरित्तीरवानीरकुंजे
पुण्योद्रेकादुपचितमनोवांछितव्योमयानाः ।।

शतकेऽस्मिन् कवेर्नैजिकी काल्पनिकी आत्मकथा जन्मान्तरव्यापिनी निगद्यते । तद्यथा स्पष्टीकृतं कविना शतकमिदमुपसंहरता —

उक्तानुक्तेष्वविरलतया कोटिकृत्वो जनुःषु
प्रादुर्भूय क्षितिमधिगतः साम्प्रतं विप्रवंशे ।

प्राप्तो विस्मयच्चरणशरणं श्रीनृसिंह त्वदीयं
नो चेत् त्रात स्तदिह शपथो लोकनाथस्त्वमेव ॥

लोकस्य पापाद्विनिवृत्तिरेव हरिद्विजस्य परमोद्देश्यमस्मिन्काव्ये । तथा हि —

हरिद्विजोदीरितमच्छमेतन्नृसिंहमायाशतकं निशम्य
न पापभावाद् विनिवर्तते यः स्थितोऽस्मि तूष्णीं तमहं प्रणम्य ।

**गोपालगीता**

हरिद्विजेन १०२ पद्यात्मिका गोपालगीता १७४२ विक्रमसंवत्सरे विरचिता । अत्र ब्रह्मेन्द्रपाण्डवधृतराष्ट्रदुर्योधनादिभि र्गोपालस्य स्तुतिः सगृहीता । एतासु स्तुतिषु पात्राणां व्यक्तित्वस्य छाया प्रतिफलिता । पात्रानुकूलं छन्दोऽपि प्रवर्तित सर्वत्र । अनुष्टुप्जातिवसन्ततिलका - भुजङ्गप्रयात - द्रुतविलम्बितादीनि छन्दांसि प्रयुक्तानि सन्ति । तथाहि अक्रूरस्योक्तिः —

अहं व्रजाधीश - पदारविन्द - परागपूरे विहिताभिषेकः ।
भवे भवे भाग्यवशाद् भवेयं मनो न कुर्यामपुनर्भवाय ॥

कर्णस्य स्तुतिः

नान्यं शृणोमि न वृणोमि न चिन्तयामि
नान्यं यजामि न भजामि न चाश्रयामि ।
त्वत्पादमकरन्द - कणैकदेश-
लेशेन मामनुगृहाण शिखण्डमौले ॥

शततमे पद्ये स्वयं हरिद्विजः स्तौति—

अपिजनः शरणं भवतो निजः
चरण - पंकजमेति हरिद्विजः
त्वमसि भक्तिमतां जगतां गुरु-
र्मदनमोहनमोहमपाकुरु ॥

अन्यतराणि च हरिद्विजस्य अष्टकानि सन्ति —

योगमाया–, रामचन्द्र–, पशुपतिकृपा–, अर्धनारीश्वर–, शिव–, नारायण–, हरिचरणशरण–, नन्दबाल–, नन्दकिशोर–, देवकीनन्दन–, निर्दन्तच्छदज–, बल्लवीवल्लभ–, रामकृष्ण–, माया-शारदा–, ध्रुव–, नन्दकिशोर–, परब्रह्म–, गङ्गा–, बुध–, शुक्र–, शनैश्चर–, राहु–, केतु–, आदीनि ।

अन्येषां देवादीनां स्तुतिः नवकदशकादिभिः कृता हरिद्विजेन । तथा हि दशकेन गरुडध्वजस्य, भगवतः दशावतारस्यच, तुलसीमणिस्तवे तु विंशतिः पद्यानि अनुष्टुप्छन्दसि सन्ति । नवकेन माललीलतायाः, नवनिकुञ्ज नागरस्य च स्तुतिः सम्पादिता ।

हरिद्विजो नैसर्गिकविभूतीनां रमणीयतायाः परमोपासक आसीत् । न केवलं देवानामपितु मालती–लतायाः स्तवस्तेन कृतः । तथा हि—

सुभगः सुमनस्तोमो गन्धश्च घ्राणतर्पणः कोऽपि ।
उच्चैः सुकुमारत्वं मालति किं किं तव स्तौमि ।।
मकरन्दं विकिरद्भिः परिमलवद्भिः शिलीमुखोद्घुष्टैः
भासि प्रसूनवृन्दैर्मालति किं किं तव स्तौमि ।।

जनार्दनस्तोत्रे हरिद्विजः प्रातः सुषमावर्णनेन जनार्दनस्तुतिं सम्मिश्रयति । तथा हि—

प्रतप्तपुरट - द्युतिर्दिगियमेति पौरन्दरी
अहो स्फुटदलाद् बहिर्भवति भृंगराजोऽम्बुजात् ।
तमः परिविलुप्यते सपदि सर्वतः शार्वरं
जनार्दन नमोऽस्तु ते जनमनन्यमानन्दय ।।

हरिद्विजः काव्य दृष्ट्या ज्योतिषशास्त्रमपि परिचितवान् । मुहूर्तमञ्जूषायां स काव्यशैलीं समाश्रित्यैव मुहूर्तानां वर्णनं कृतवान् ।

हरिद्विजस्य सर्वे ग्रन्था बीकानेरस्थ हरिद्विजपुस्तकालये सुरक्षिताः सन्ति ।

## हरिदेवः

उपरिचर्चितस्य हरिद्विजस्य लघुभ्रातासीत् हरिदेवः । स्तोत्रकाव्यनिधौ तेन प्रणीतं सावित्र्यष्टकं चमत्कारपूर्णमेव । अत्र सावित्री सरस्वतीरूपेण वन्दिता । तथाहि—

ब्रह्माणीं कमलासनस्य दयितां ब्रह्माग्नि–संवर्धिनीम्
ब्रह्मैकाक्षररूपिणीं भगवतीं भक्तिप्रियां भावुकाम्
सारासार - विवर्धिनीं समरसां सायुज्य – सिद्धिप्रदां
सावित्रीं सचराचरस्य जननीं वन्दे जगन्मोहिनीम् ।।

हरिदेवस्याजित–विलासस्तु संस्कृत–कवीनां परमोत्कर्षसूचकः । 'स कविः भारतीयसंस्कृतेः संरक्षणाय किं कर्तुं समर्थः' इति हरिदेवस्याजितविलासादर्शनं प्रतिफलति ।

### अजितविलासः

अजितविलासस्तु १७६२ विक्रमसंवत्सरे हरिदेवेन जोधपुरस्य राजकुमारमजितं प्रति प्रेषितं पत्रमेव । अजितकुमारस्य पिता जोधपुरस्य राजा महाराज-जसवन्त-सिंहः औरङ्गजेबस्य दुर्नीत्या पञ्चत्वं गतः । दुर्गादासस्तदा जसवन्तस्य पुत्रमजितकुमारमभिषेक्तुं प्रायतत ।

अजितविलासस्तु गद्य–पद्य–सम्मिश्रितं पत्रंवीररसोच्चित्रं वर्तते । तथाहि—

पटहनिस्वन - पूर्ण - दिगन्तरे
महति दिग्विजये विजयोपमः ।
प्रबलवैरिगणान् विकिरन्नर
वियति वारिधरानिव मारुतः ॥
यवन–वंचक– धूर्त - पटच्चरान्
प्रकृति - दुःखकरानुदरम्भरान् ।
प्रशमयन् प्रकटं विकटैर्भटै
रविरिवोग्रतमासि करव्रजैः ।
रथकुरंगमतगजपत्तिभिः
पृतनया घनया निजया युतः ।
मरुमनुष्यमनांसि विनोदयन्
निविडया घटयेव घनाघनः ॥
विविधशास्त्र-विचार-विशारदै-
र्बुधजनैरुपविश्य सहाधिकम् ।
सदसि भूपति–जन्मफलं सदा
ह्यनुभवन्निव भोजमहीपतिः ॥

हरिदेवोऽस्मिन्पत्रे आदर्शनृपतेः चरित्रस्य चित्रणं करोति । तस्य समक्ष भोजमहीपतिर्वर्तते ।

हरिदेवस्यापर पत्रं २१६ पद्यात्मक हरिद्विजं प्रति प्रेषितमासीत् । हरिदेव-हरिद्विजयोः पिता गंगाराम आसीत् ।[1] तस्य १७४६ विक्रम संवत्सरे लिखितं पत्रं भ्रातृव्यं हृषीकेष प्रति प्रेषितमासीत् । हरिदेवेन व्याकरणशास्त्रमधिकृत्य सारस्वत-मिताक्षरा-टीका गणगणना च लिखिते ।

हरिदेवस्य पुत्रः शिवराय–व्यासः गणेशाष्टकम् कुसुमस्तबकस्तवं च विरचितवान् । कुसुस्तबके गीतगोविन्दस्य संगीत-लहरी प्रोद्भाविता । तद्यथा—

अयि शिवनन्दन दैत्यनिकन्दन सहृदय-चन्दन सिद्धिपते
गुणगणनामिह कोऽर्हति कर्तुमलं स्वलम्बित–विश्वपते ।

---

१ गंगारामस्य वर्णनं तस्य पौत्रः शिवरायव्यासः एवं कृतवान्

गंगारामः सामगः सत्यभावः
स्वच्छस्वान्तः शान्तकान्तस्वभावः
ज्योतिर्विद्या – लब्धलोक – प्रशंसः
क्ष्मादेवोऽभूत् व्यासवंशावतंसः ॥

वरद नमोऽस्तु नमोऽस्तु वतेश्वर दीनजनानवते भवते
मसृणमदोदक मोदक–मोदक मोदक मोदक मोदवते ।।

पद्येऽस्मिन् गणेशस्य स्तुतिर्वर्तते ।

हरिदेवस्य कृतयः बीकानेरस्थ-हरिद्विज-पुस्तकालये संरक्षिताः सन्ति ।

## जनार्दनगोस्वामी

अनूपसिंहस्य राज्य–काले जनार्दनगोस्वामी शृंगारशतकं वैराग्यशतकं च विरचितवान् ।[1] स्पष्टत एव गोस्वामी भर्तृहरिणा प्रभावितो वर्तते ।

जनार्दनगोस्वामी अनूपसिंहस्य गुरोः शिवानन्दगोस्वामिनो लघुभ्राता-सीत् ।[2]

### शृंगारशतकम्

नायिका-नायकयोः सनातनरमणीय-व्यवहारमेव दर्शयन्ति शृंगारकवयः । तदेवास्मिन् शतकेऽपि कृतम् । केचित् चमत्कारपूर्णाः श्लोका अधोलिखिताः—

लोचनस्फुटसरोरुहरम्या गौरता विमलवारिभृता च ।
केशशैवलमनोरमकान्तिर्भाति तन्वि तटिनीव तनुस्ते ।।३३

श्रावं श्रावं गर्जितं वारिदानां स्मारं स्मारं प्रेयसीं कोऽपि पान्थः ।
ग्रामे चक्रे रोदनं वै तथासौ येनाशेषो ग्राम्यलोको रुरोद ।।४५

यद्भुक्तो न पयोनिधौ जलचरैर्दग्धो न चौर्वाग्निना
पीतः कुम्भभुवागतो न जठरे नाशं सहाम्भोधिना ।
गच्छन् व्योम्नि निराश्रयेण पतितो जानेऽहमेवं प्रिये
धात्रा हन्त वियोगि-दुःख - कृतये चन्द्रस्ततो रक्षितः ।।५४

### वैराग्यशतकम्

जनार्दनस्य वैराग्यशतकं नैराश्य-जनितं प्रतिभाति । पुनः पुनः कविर्धन-हीनतामाक्रोशति । अथ किं—

ये दुर्जनाः सन्ति हि ते धनाढ्या
ये सज्जनास्ते तु धनेन हीनाः ।

---

१ एतयोर्द्वयोः शतकयोः प्रकाशनं काव्यमालासीरीज ११, १३ भागयोर्वर्तते ।
२ शिवानन्दस्य परिचयः २२० पृष्ठे द्रष्टव्यः ।

तथापि कविः बाल्यं तारुण्यं च शोभाकरे न मन्यते। अतः स भावि कार्यक्रमं निर्धारयति--

बाल्यं गतं सकलमर्भकलीलयैव
तारुण्यमप्यथ गतं विविधैर्विलासैः।
गंगातरंगकलनैरहमेनदुच्चै—
र्वृद्धत्वमेव सकलं सफलं करिष्ये॥

## श्रीनिकेतनगोस्वामी

श्री निकेतनगोस्वामी अनूपसिंहस्य गुरोः उपर्युक्तशिवानन्दगोस्वामिनः पुत्र आसीत्। श्रीनिकेतनेन सभेदार्यासप्तशतीति काव्ये सप्तशतीनां सनातन-परम्परामनुसृत्य शृंगाररसात्मक—स्फुट—पद्यानां रचना कृता।[1] काव्येऽस्मिन्ना-नाच्छन्दःसु १०१० पद्यानि सन्ति। श्रीनिकेतनस्यास्या रचनायाः तस्मिन् प्रदेशे महानादरः समजायत। सूरतविलासे रामकविनार्यासप्तशत्याः प्रशस्ति कृतवान् —

आर्यासप्तशतीति नाम ललिता सार्या सहस्रात्मिका
आर्याणां कुतुकाय तेन रसिकानां प्रीतये स्वात्मनः।
तोषायोच्छलदुत्कटाच्छाविगलच्छृङ्गारपुष्पोत्करो
ग्रन्थः कोऽपि सुरद्रुरेष कलितो भूमौ रसोल्लासिना॥

विक्रमपुरस्यानूपकालिकी त्रिंशद्वर्षोद्भवा साहित्यिकाभ्युन्नतिरस्माभिः परामृष्टा। त्रिंशद्वर्षाभ्यन्तरे कस्मिंश्चिन्नगरे संस्कृतसाहित्यस्येदृशी अभिवृद्धिः क्वचिदेव कर्णगोचरीभवति। अस्मिन्नन्तराले काव्यस्य नैकविधानां शास्त्रस्य च विविधशाखानामभूतपूर्व एव प्ररोहः साहित्यक्षेत्रं समलङ्करोति। एषा सर्वङ्कषाभ्युन्नतिरनूपदेवस्योदारसंकल्पं महासत्त्वं संस्कृतसंवर्धनोत्साहं भृशं व्यनक्ति। आधुनिकसंस्कृतसाहित्याभिवृद्धेः स्वल्पमेव ज्ञानमस्माकं विद्यत इति दुर्भाग्यमेव। अर्वाचीनयुगेऽपि भारतस्य सर्वेषु भागेषु महात्मन आश्रित्य अन्यथा वा विद्वांसः

---

**१ अप्रकाशितैव सभेदार्या-सप्तशती बीकानेरनगरस्य फाल्गुनगोस्वामिनः सविधे सुरक्षिता।**

संस्कृतभाषायां काव्यशास्त्राणि विरचितवन्तः, विरचयन्ति वा। तेषां कृतित्व-मस्माकं समक्षं न समायाति तत्सम्बन्धिशोधाभावात्। यत् किञ्चिद्देववाण्यां लिखितं साहित्यं विद्यते, तत्सर्वं नैकदृष्टिभिर्बहुमूल्यमिति सत्यमवधार्याधुनिक-साहित्यस्य संरक्षणं, प्रकाशनं प्रचारं च भृशं कामयामहे।[1]

---

१ लेखस्य सामग्रीयं प्रायः सर्वशः विक्रमपुरस्य श्रीदिवाकरशर्मणः कृतिभ्यः परामर्शेभ्यश्च निरूपिता। एतादृशानां विदुषां प्रयत्नः श्लाघ्यः।

# कालिदास–भारती–६

## [ कालिदास-साहित्ये देववृक्षाः ]

डा० रेवाप्रसाद द्विवेदी

महाकवेः कालिदासस्य साहित्ये देववृक्षा देवा इवैव भूम्ना समादृताः। तदत्र तानेवाश्रित्य कालिदासभारतीमनुशीलयामहे। तत्र—

"पञ्चैते देवतरवो मन्दारः पारिजातकः।
सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ॥–"

इत्येवममरकोषे देववृक्षाणां पंच नामानि प्रस्तूयन्ते। कालिदास एतानि सर्वाण्यपि नामानि बहुशः प्रयुणक्ति। एतानीह सूचीकटाहन्यायेनैकैकश उपाददमहि। तत्र—

### हरिचन्दनम्

वृक्षस्यास्योल्लेखो देववृक्षरूपेण त्रिः पार्थिववृक्षरूपेण चैकवारं कालिदासे लभ्यते। तथाहि—

१- पर्वतराजपुत्र्या भगवत्याः पार्वत्या हरिचन्दनास्पदे स्तनद्वये कपालिना सह पाणिग्रहणाच् चिताभस्मरजः पदं करिष्यतीति ब्रह्मचारिवचसा कविर्ब्रूते—

"अयुक्तरूपं किमतः परं वद त्रिनेत्रवक्षः सुलभं तवापि यत्।
स्तनद्वयेऽस्मिन् हरिचन्दनास्पदे पदं चिताभस्मरजः करिष्यति ॥कुमा.५।६९॥

२- रघुवंशे महेन्द्रस्य प्रकोष्ठं

३- शाकुन्तले च वक्षःस्थलं हरिचन्दनांकितमेवं वर्ण्यते—

"ततः प्रकोष्ठे हरिचन्दनांकिते प्रमथ्यमानार्णवधीरनादिनीम्।
रघुः शशांकार्धमुखेन पत्रिणा शरासनज्यामलुनाद् विडौजसः ॥ रघु.३।५९॥
अन्तर्गतप्रार्थनमन्तिकस्थं जयन्तमुद्वीक्ष्य कृतस्मितेन।
आमृष्टवक्षोहरिचन्दनाङ्का मन्दारमाला हरिणा पिनद्धा ॥ शाकु.७।२॥

एतेषु स्थलेषु हरिचन्दनकाष्ठस्य घर्षणेन निष्पन्नाय तत्तदंगानुलेपनौपयिकाय रसाय प्रयुक्तो मन्तव्यः। अत्र च प्रमाणं शाकुन्तलपद्ये प्रयुक्तमामृष्टेति पदम्। आमर्षणमिदं नान्यत् अपितु तदेव यद् विलेपनपदेनोच्यते। विलेपनस्यास्य वर्णः पीतारुणः संभाव्यते, शुक्लत्वे गौरवर्णयोर्महेन्द्र- पार्वत्योः शोभासंपोषेऽनतिप्रयोजनकत्वात्, कल्पान्तरस्य चासंभवात्। अस्ति चात्रैतत् प्रमाणं यत् स्वयं कालिदास एव स्वयंवरप्रस्तावागतं पाण्ड्यनृपं रघुवंशस्य—

"पाण्ड्योयमंसार्पितलम्बहारः क्लृप्तांगरागो हरिचन्दनेन।
आभाति बालातपरक्तसानुः सनिर्झरोद्‌गार इवाद्रिराजः॥"

इत्यनेन पद्यरत्नेन हरिचन्दनेन रचितांगरागं ब्रवीति। अत्र रागपदं वर्णद्रव्यमात्रपरं रक्तपीतारुणान्यतमवर्णविशेषद्रव्यपरं वेति जिज्ञासायां बालातपौपम्यं साहाय्यं वितरति। अत्र पर्वतविशेषोपमानिकायाः पाण्ड्यराजोपमेयिकाया वाक्यार्थीभूतालंकारात्मिकाया उपमाया अन्यथानुपपत्त्या बिम्ब - प्रतिबिम्ब - भूतयोर्हरिचन्दनांगराग-बालातप-पदार्थयोर्यदैकात्म्यं सिसाधयिषितं तत्साधकस्य सादृश्याप्यन्यथासंभवाभावाद् बिम्ब-प्रतिबिम्बीभूतपदार्थनिष्ठतयारुणवर्णत्वरूपं साधर्म्यमवशमाक्षिप्यते। अथमत्रापरः प्रश्नो यद् यदिदमरुणत्वं तद्धि हरिचन्दने कीदृग्विधम्। सहजमेव, आहार्यं वा। अत्र समाधानं कालिदासप्रयोगान्नोपलभ्यते। शब्दकल्पद्रुमादिषु पुनरस्योभयविधत्वमपि दृश्यते। वयमत्रैवं चिन्तयामो यदरुणत्वमिदं देववृक्षत्वपक्षे सहजं पार्थिववृक्षत्वपक्षे चोभयविधमपि मन्तुं शक्यते। पार्थिवेषु हि वृक्षेषु रक्तचन्दनं लभ्यत एव, पीतत्वे च केशरादिद्रव्ययोगोऽपि तद्रसेषु क्रियतेतमाम्।

तदित्थं हरिचन्दनपदं कालिदासेन चतुर्वारं प्रयुज्यते। तेषु देववृक्षत्वं प्रयोगत्रयमात्रं यावदेव सीमितम्। पाण्ड्यनृपप्रसंगागते पुनरत्र पार्थिवत्वमेव केवलं न देवत्वम्।

## सन्तानः

अमरकोशकृता प्रयुक्तस्य सन्तानपदस्यार्थे कालिदासः संतानकपदं प्रयुंक्ते। तदपि च केवलं वारत्रयमेव। तथाहि—

४- १- भगवतो रामस्य मानुषशरीरपरिग्रहावसरे सन्मंगलोपचाराणामादिरचना संतानक-वृष्ट्यैव संपद्यते—

"सन्तानकमयी वृष्टिर्भवने तस्य पेतुषी ।
सन्मंगलोपचाराणां सैवादिरचनाभवत् ।। १०।७७रघु.।।

५- २- भगवत्याः पार्वत्या विवाहमांगल्याय तत्पितुर्नगरमोषधिप्रस्थं सन्तानकाकीर्णमहापथं जायते—

'सन्तानकाकीर्ण' - महापथं तच्चीनांशुकैः कल्पितकेतुमालम् ।
भासोज्ज्वलत्काञ्चनतोरणानां स्थानान्तरं स्वर्ग इवाबभासे ।।७। ३-कुमा० ।

६- ३- एतदेवौषधिप्रस्थं तेन गन्धमादननाम्नोद्यानेन गन्धवदस्ति यत्र विद्याधराध्वगाः सन्तानक-तरुच्छायासु मार्गखेदं विनुदन्ति—

'सन्तानक-तरु-च्छाया-सुप्त-विद्याधराध्वगम् ।
यस्य चोपवनं बाह्यं गन्धवद् गन्धमादनम् ।।६।४६-कुमा० ।।

एतस्मिन् प्रयोगत्रये विशेषद्वयमेव सन्तानगतं सिद्धयति १-सुगन्धि-पुष्पम २-छाया चेति ।

## ३ मन्दारः

मन्दारपदं कालिदासेन देववृक्षायैव दशवारं प्रयुज्यते । एतेषु वारमेकमस्य सामान्यतयैव प्रयोगो लभ्यते, अन्यत्र च पुष्पं छाया चेति वैशिष्ट्यप्रतिपादन-परतया । तथाहि—

१- शाकुन्तले मारीचाश्रमे रूढा मन्दारा महेन्द्रजनन्या अदित्यैव स्वहस्तेन परिवर्धिताः सन्ति—

"अदितिपरिवर्धित-मन्दारवृक्षं प्रजापतेराश्रमं प्रविष्टौ स्वः ।"
शाकु० ७।१२-गद्यम् ।।

२- अलकायाः कन्यका मन्दाकिन्यास्तटे रूढानां मन्दाराणां छायया वारितोष्णा भवन्ति—

मन्दाकिन्याः सलिलशिशिरैः सेव्यमाना मरुद्भि-
र्मन्दाराणामनुतटरुहां छायया वारितोष्णाः ।
अन्वेष्टव्यैः कनकसिकतामुष्टिनिक्षेपगूढैः
संक्रीडन्ते मणिभिरमरप्रार्थिता यत्र कन्याः ।।मेघ०२।६।।

३- न केवलं मन्दाकिन्या अपि तु व्योमगंगाया अपि तटे मन्दारा निरूढाः । तेषां निर्भरं पतन्ति पुष्पाणि गंगाया अस्या प्रवाहं वीचिषु शृंगारयन्ति । कविस्तत्र सप्तर्षीन् स्नपयति—

आप्लुतास्तीरमन्दार–कुसुमोत्करवीचिषु ।
व्योमगंगाप्रवाहेषु दिङ्नागमदगन्धिषु ।।कुमा०६।५।।

४- अलकायामभिसारिकाणां नैशो मार्गः सवितुरुदयकाले गत्युत्कम्पादलकपतितैर्मन्दारैरेव सूच्यते—

"गत्युत्कम्पादलकपतितैर्यत्र मन्दारपुष्पैः
पत्रच्छेदैः कनककमलैः कर्णविभ्रंशिभिश्च ।
मुक्ताजातैः स्तनपरिसरच्छिन्नसूत्रैश्च हारैर्नैशो
मार्गः सवितुरुदये सूच्यते कामिनीनाम् ।।"-मेघ०-२।११।।

५- विक्रमोर्वशीये विरहविह्वलः पुरूरवाः संगमनीय-मणिमनादित्सन् वक्ति—
मन्दारपुष्पैरधिवासितायां यस्याः शिखायामयमर्पणीयः ।
सैव प्रिया संप्रति दुर्लभा मे किमेनमस्त्रोपहतं करोमि ।।५।६५-विक्र०।।इति।।

६- स्वयंवरागतं मगधराजमुद्दिश्य सुनन्दा ब्रवीति—
क्रियाप्रबन्धादयमध्वराणामजस्रमाहूत - सहस्रनेत्रः ।
शच्याश्चिरं पाण्डुकपोललम्बान् मन्दारशून्यानलकांश्चकार ।।६।२३-रघु०।इति।।

७- मन्दारस्योपरिवर्णितानि मुक्तानि पुष्पाणि स्तबकरूपाण्यपि भवन्ति। मेघदूते यक्षगेहोपान्ते यक्षपत्न्या यो मन्दारो वर्धितः स हस्त–प्राप्य–स्तबक–नमितो वर्ण्यते—

तत्रागारं धनपतिगृहानुत्तरेणास्मदीयं
दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन ।
यस्योपान्ते कृतक-तनयः कान्तया वर्धितो मे
हस्तप्राप्यस्तबकनमितो बालमन्दारवृक्षः ।। मेघ० २।१५।।

८- मन्दारपुष्पाणां माला अपि निर्मीयन्ते। शाकुन्तले हरिचन्दनप्रस्तावे यत् ७।१ पद्यमुद्धृतं, तत्र देवराजस्य वक्षो मन्दारमालया शोभितं व्यज्यते ।

९- विक्रमोर्वशीये तन्नायिकाया उर्वश्या अपि हृदयं मन्दारकुसुमदाम्ना भूषितं वर्ण्यते—

मन्दार–कुसम–दाम्ना गुरुरस्याः सूच्यते हृदयकम्पः ।
मुहुरुच्छ्वसता हृदये परिणाहवतोः पयोधरयोः ।।१।७-विक्र०।।

१०- मन्दारपुष्पाणां रजांस्यरुणवर्णानि भवन्ति। देवराजः शिवस्य पादौ मन्दार-रजोभिररुणयंति—

असंपदस्तस्य वृषेण गच्छतः प्रभिन्नदिग्वारणवाहनो वृषा ।
करोति पादावुपगम्य मौलिना विनिद्रमन्दार रजोऽरुणांगुली ।।
कुमा०-५।८०।।

तदेव मन्दारपदं कालिदासेन दशवारं प्रायुंक्त । यद्यपि साहित्याकादमीतः प्रकाशिते कुमारसंभवसंस्करणे ३।२१-पद्यानन्तरं—

"ततः स्फुरत्केसर-लग्न-भृंगं सौरभ्यसंक्रान्त-दिगन्तरालम् ।
ददौ हरिः सादरमीक्षमाणो मन्दारमालां मकरध्वजाय ॥" इति पाठान्तरपद्ये मन्दारस्य पुष्पाणां मालाया वर्णनं लभ्यते तथापि पद्यस्यास्य मूलत्वाभावादत्र संग्रहो न क्रियते ।

## ४ पारिजातः

१- **पुष्पम्**– पुरूरवसो विरहिता नारायणोरुसंभवा दिव्यस्त्रीललामभूता उर्वशी पारिजातपुष्पशयनेपि सुखं न विन्दति । वेदनामिमामियमेव पत्रापितां करोति—

सामिअ संभाविआ जह अहं तए अमुणिआ
तह अणुरत्तस्स जइ णाम तुज्झ उवरि होमि ।
किं मे लुलिअ-पारिजाअ-सअणिज्जअमि सुहा
णंदणवादा अवि अच्चुण्हा सरीरए ॥२।१२-विक्र०॥
स्वामिन् संभाविता यथाहं त्वया-ज्ञाता तथानुरक्तस्य
यदि नाम तवोपरि भवामि ।
किं मे लुलितपारिजात-शयनीये सुखाः नन्दनवनवाता
अपि अत्युष्णाः शरीरके ॥

२- भगवान् शंकरः पुलोमतनयालकोचितैः पारिजातकुसुमैर्नवपरिणीतायाः भगवत्याः पार्वत्या अलकान् प्रसाधयति—

तां पुलोमतनयालकोचितैः पारिजातकुसुमैः प्रसाधयन् ।
नन्दने चिरमयुग्मलोचनः सस्पृहं सुरवधूभिरीक्षितः ॥कुमा०-८।२७॥

३- रघुवंशे कुशवधूः कुमुद्वती शचीसखीत्वमासाद्य पारिजातांशभागिनी भवति—

तयोर्दिवस्पतेरासीदेकः सिंहासनार्धभाक् ।
अपरापि सखी शच्याः पारिजातांशभागिनी ॥ १७।७-रघु० ॥

४- **वेदिका, भूषा, अलंकरणं, सातिशयं तेजः, समुद्रसंभवत्वं च ।** स्वयंवरार्थमागता नृपाः स्वयंवरसभायां महार्हनेपथ्यमण्डिता मञ्चमधितिष्ठन्ति । ते सर्वे कल्पवृक्षा इव राजन्ते । रघुसूनुरजः पुनः सातिशयेन तेजसा तेषां मध्ये पारिजात इव लक्ष्यते—

तेषां महार्हासनसंस्थितानामुदारनेपथ्यभृतां स मध्ये ।
रराज धाम्ना रघुसूनुरेव कल्पद्रुमाणामिव पारिजातः ॥ ६।६-रघु० ॥

अत्रासनपदेन मंच एवात्र विवक्षितः—

स तत्र मंचेषु मनोज्ञवेशान् सिंहासनस्थानुपचारवत्सु ।
वैमानिकानां मरुतामपश्यदाकृष्टलीलान् नरलोकपालान् ॥६।१-रघु०॥—एतेन पूर्वपद्येन सिंहासनानां मंचस्थितत्वस्य वर्णितत्वात् । एतेनोपमानपक्षेपि तादृशं वेदिकाकल्पं चत्वरमाक्षिप्यते । भूषालंकरणयोरपि नेपथ्यप्रतिबिम्बतयात्राावश्यक एवाक्षेपः । यच्चात्र सातिशयं तेजः तत्र कारणं दिव्यान्याभरणानि समुद्रसंभवत्वं च एतच्चोभयं कविरनेकधा वर्णयति । तथाहि—

५- क्षीरसागरे भोगिभोगासनासीनं भगवन्तं विष्णुं देवव्यूहः पश्यति । दिव्याभरणभूषितोयं क्षीरसागरे सर्वथा पारिजात इवैव लक्ष्यते--

बाहुभिर्विटपाकारैर्दिव्याभरणभूषितैः ।
आविर्भूतमपां मध्ये पारिजातमिवापरम् ॥ १०।११ रघु० ॥

अत्र दिव्याभरणानामुपमानभूते पारिजातेपि सत्त्वमौचित्यलभ्यम् । न हि तद् बिना उपमेयभूते भगवति प्रतिपादितस्य दिव्याभरणत्वविशेषणस्य कथमप्यन्यथा पोषः । समुद्रसंभवत्वं पुनरतिविशदतरमेव । निम्नोद्धृते पद्ये पुनस्तदतीव स्पष्टम्—

तस्मात् समुद्रादिव मथ्यमानादुद्वृत्तनक्रात् सहसोन्ममज्ज ।
लक्ष्म्येव सार्धं सुरराजवृक्षः कन्यां पुरस्कृत्य भुजंगराजः ॥१६।७९-रघु०॥

अत्र हि कुमुद्वतीमादाय सरयूप्रवाहादुद्भूतो नागराजः कुमुदः समुद्रसंभूतेन सुरराजवृक्षेणोपमीयते । सुरराजवृक्षपदेनात्र पारिजात एव लक्षितुं शक्यते, समुद्रनिष्पन्नेषु रत्नेषु वृक्षस्य सुरराजेनैव गृहीतचरत्वात् । आस्तां तावदेतत्, स्वयं पारिजातशब्द एव व्युत्पत्ताविव प्रवृत्तावपि समुद्रसंभूतत्वमेव निमित्तीकरोति । हेमाद्रि-राधाकान्ताभ्यां "पारिणि अब्धौ जात" इति तथैवास्य रघुवंशदर्पण-शब्दकल्पद्रुमयोर्व्याकृतत्वात् । अस्ति च समुद्रसमुद्भूतस्य वृक्षरत्नस्य "पारिजात-"पद-व्यपदेश्यता पुराणेषु प्रतीता । यथा चैतत् तदग्रे प्रतिपादयिष्यते ।

एवं हि कालिदाससाहित्ये पारिजातशब्दपूर्वकं पंचवारम्, वारमेकं च सुरराजवृक्षपदेन पारिजातस्य वर्णनं लभ्यते ।

## कल्पः

कालिदासः पारिजातं कल्पद्रुमेभ्यः सातिशयं प्रतिपद्यमानोपि वर्णयति सातिशयं कल्पद्रुमानेव । स हि कल्पपदेन वृक्ष–तरु–द्रुम–लता–शब्दान् योजयन्

विंशतिवार कल्पपादपं वर्णयति। तत्र चास्य विशेषानपि सविशेषमसावुल्लिखति। यथा चैतत् तद् अधोदत्तेन विवरणेन स्पष्टम्। तथाहि—

१- **पुष्पम्** - रघुवंशे मातंगर्षिशापान्मतंगयोनिमापन्नो गन्धर्वपतेः पुत्रः प्रियंवदो लोह--मुखबाणवेधद्वारा तत उद्धृतवन्तं रघुकुमारमज कल्पद्रुमोत्थैः पुष्पैरवकिरति —

"अथ प्रभावोपनतैः कुमारः कल्पद्रुमोत्थैरवकीर्य पुष्पैः।
उवाच वाग्मी दशनप्रभाभिः संवर्धितोरस्थलतारहारः ॥५।५२रघु.॥

२- **गन्धः**- कल्पद्रुमकुसुमेषु, तथा तीव्रो गन्धो भवति यथा हि मधुकरा उन्माद्यन्ते। विक्रमोर्वशीये कविः कथयति—

"गन्धुम्माइअ-महुअरगीएहिं वज्जतेहिं परहुअतूरेहिं।
पसरिअ-पवणुव्वेल्लिअ-पल्लव-णिअअरु सुललिअ-विविह-पआरेणच्चइ कप्पअरु॥

(गन्धोन्मादितमधुकरगीतैर्वाद्यमानः परभृततूर्यैः।
प्रसृतपवनोद्वेल्लितपल्लवनिकरः सुललितविविधप्रकारेण नृत्यति कल्पतरुः॥)

३- **फलम्**:- सुकृतिनो दशरथस्य काङ्क्षितं सद्य एव पच्यते, तेनेद कल्पवृक्ष-फल-धर्मीत्युच्यते—

"अन्विष्य सदृशीं स च स्नुषां प्राप चैनमनुकूलवाग् द्विजः।
सद्य एव सुकृतां हि पच्यते कल्पवृक्ष-फल-धर्मि काङ्क्षितम् ॥११।५०रघु.॥

४- **भूषाः**[1]- पारिजातप्रस्तावे २०।४-सदर्भीये रघुवंशस्य ६।६-पद्ये भूषिता राजानः कल्पवृक्षोपमा उच्यन्ते। ततोऽमीषामपि भूषितत्वमर्थत एवापद्यते। एवमेव तत्रैव

**वेदिकाः**- राजानो मंचस्थिता उच्यन्ते। ततश्च कल्पवृक्षाणामपि तले वेदिकावत्त्वमुन्नेतुमापद्येत।[2]

---

१ कल्पवृक्षस्य छायाफलादिमत्त्वं जिनसेनोऽप्यादिपुराण एवं वर्णयति—
'कल्पद्रुमाः समुत्तुङ्गाः सच्छायाः फलशालिनः।
नानास्रग्वस्त्रभूषाढ्या राजायन्ते स्म संपदा॥ पर्व-२२।२४५

२ राज्ञामेवंभूतायां स्थितौ कल्पतरूपमत्वं बाणोऽपि स्मरति यत्रासौ तारापीठं वर्णयन् कादम्बर्यां कथयति— 'येन चानेकरत्नांशुकपल्लविते व्यालम्बिमुक्ताफलजालके दिग्राजेनेव कल्पतरावाक्रान्ते सिंहासने नेमुः सर्वदिशः।' पृ० ९४ कालेसंस्करणम्।

**द्युतिः**- अत एव च कल्पवृक्षाणां सामान्या द्युतिरपि प्रतिपत्तुं शक्यते ।

५- **प्ररोहः**- कल्पवृक्षेषु नभःस्थिताभ्यः शाखाभ्यो न्यक् प्ररोहन्तो भाषायां वरोहपदवाच्याः प्ररोहा अपि भवन्ति । विक्रमोर्वशीये भगवन्तं नारदं वर्णयन् कविर्ब्रूते—

"गोरोचनानिकषपिंग-जटाकलापः संलक्ष्यते शशिकलामलवीतसूत्रः ।
मुक्तागुणातिशयसंभृतमण्डनश्रीर्हेमप्ररोह इव जंममकल्पवृक्षः ।।५।१९विक्र.।।

**अंशुकम्**- कल्पवृक्षवर्णने कविना अंशुकमप्यनेकश उपादीयते । तच्च तत्साहित्ये द्विधा विभज्यते । १- शाखांशुकं २- ध्वजांशुकं चेति । उभयविधमपीदं वर्णापेक्षया पुनरपि त्रिधा विभज्यते १- धवलवर्णं, २-सुवर्णवर्णं ३- एतदद्वयान्यवर्णं चेति । यथा चैतत तदधोदत्तेभ्यः कविवचोभ्यः एव स्पष्टम् । तथाहि—

६- रघुवंशे कुश-कुमुद्वती-तनयोऽतिथिः हंसचिह्नं दुकूलं परिधत्ते । हिरण्यादर्शप्रतिफलितः स तदानीं सूर्योदये सुमेरौ प्रतिफलितं कल्पतरुमनुहरति—

"आभुक्ताभरणः स्रग्वी हंसचिह्न-दुकूलवान् ।
आसीदतिशयप्रेक्ष्यः स राज्यश्रीवधूवरः ।।
नेपथ्यदर्शिनश्छाया तस्यादर्शे हिरण्मये ।
विरराजोदिते सूर्ये मेरौ कल्पतरोरिव ।। २७।२५,२६रघु.।।

७- शाकुन्तले दानवविजयिनो दुष्यन्तस्यावदानं सुरसुन्दरीणां विच्छित्तिशेषैर्वर्णैः कल्पलतांशुकेषु गीतिक्षममर्थबन्धं विचिन्त्य लिखन्ति—

"विच्छित्तिशेषैः सुरसुन्दरीणां वर्णैरमी कल्पलतांशुकेषु ।
विचिन्त्य गीतिक्षममर्थबन्धं दिवौकसस्त्वच्चरितं लिखन्ति ।। शाकु.७।५।।

अनयोः स्थलयोः पूर्वत्र दुकूलस्य स्कन्धप्रभृतिष्वेवांगेषु परिधीयमानत्वात् कल्पतरावपि तत्रैव संभवः अपरत्र च ध्वजपट्टस्य विखण्डनमनुचितमिति पारिशेष्याच्छाखांशुकत्वमेवावधारयितुं शक्यम् । वर्णः पुनरत्रोभयत्रापि धवल एव संभाव्यते, प्रथमे हंसचिह्नस्य धवल एव वस्त्रे शोभावहत्वात्, अपरत्र च विचित्रवर्णलेखसामग्रया अधवले लेखाधारे निर्गुणत्वात् परभागलाभाय कल्पलतांशुके धवलत्वेमेवौचित्यलभ्यम् । अनयोः स्थलयोरनुवीक्षयेदमप्युन्नेतुं शक्यते यत् कालिदाससमये कल्पवृक्षशाखांशुकेषु हंसादिचिह्नान्यपि वैकल्पिकान्यभूवन् ।

८- कुमारसंभवे सप्तर्षिमण्डलं हेमवल्कलं बिभर्त्ति, तेन च तत् कल्पवृक्षसादृश्यमासादयति—

"मुक्तायज्ञोपवीतानि बिभ्रतो हेमवल्कलाः ।
रत्नाक्षसूत्राः प्रव्रज्या कल्पवृक्षा इव श्रिताः ।। कुमा.६।६।।

अत्रोपमेयभूतसप्तर्षिगतत्वेन वर्ण्यमानस्य वाससो हेमवर्णत्वादुपमानभूतकल्पवृक्षगतत्वेन व्यज्यमानेपि वाससि तद्वर्णत्वमेव बलादानीयते ।

९- ओषधिप्रस्थनगरस्य गृहेषु कल्पद्रुमैरेव विलोलविटपांशुकैः सद्भिः पताकाश्रीर्निर्मीयते—

"यत्र कल्पद्रुमैरेव विलोलविटपांशुकैः ।
गृह-यन्त्र-पताकाश्रीरपौरादरनिर्मिता ।। कुमा.६।४१।।

नगरमण्डने प्रयुज्यमानानां पताकानां वर्णः शुक्ल-पीताऽतिरिक्तोपि भवतीत्यत्र विटपांशुक-पद-वाच्यानां शाखांशुकाना विविध-वर्णत्वमायाति ।

१० ध्वजांशुकं वर्णयता कालिदासेनोच्यते—

"स पुरं पुरुहूतश्रीः कल्पद्रुमनिभ-ध्वजाम् ।
क्रममाणश्चकार द्यां नागेनैरावतौजसा ।। १७।३२रघु.।।

अतिथिरयोध्या द्यां करोति कल्पद्रुमध्वज-सदृश-ध्वज-मण्डितायां यत्र पुरुहूतश्रीरसौ ऐरावतौजसा गजेन क्रामति । ध्वजांशुकमत्र श्वेतपीतारुणान्यतमवर्णमेव संभाव्यते । किन्तु—

११ कुमारसभवस्य निम्नलिखिते पद्ये तस्य श्वेतवर्णत्वमेव नियतम्—

"पश्य कल्पतरुलम्बि शुद्धया ज्योत्स्नया जनितरूपसंशयम् ।
मारुते चलति चण्डिके बलाद् व्यज्यते विपरिवृत्तमंशुकम् ।।८।७१।।

पार्वतीं प्रति भगवता शिवेन क्रियमाणेऽस्मिन् चन्द्रिकावर्णने जनितरूपसंशयत्वेनोल्लिख्यमानेंऽशुके शुद्धातिरिक्तः को नु वर्णः संभाव्येत् । लम्बि-पदेनात्रांशुके शाखांशुकत्वमप्युत्प्रेक्षितुं शक्यते यद्यपि पत्रावगुण्ठितानि शाखांशुकानि दूरतस्तथा द्रष्टुं न शक्येरन् यथा ध्वजांशुकानीति ध्वजांशुकत्व एव प्रबलत्वमानीयते । मेघदूतस्य निम्नोद्धृते पद्ये पुनः शाखांशुकत्वं ध्वजांशुकत्वं चेति द्वितयमपि संभाव्यते—

१२ 'हेमाम्भोजप्रसवि सलिलं मानसस्याददानः कुर्वन् कामं क्षणमुखपटप्रीतिमैरावतस्य ।
धुन्वन् कल्पद्रुमकिसलयान्यंशुकानीव वातैर्नानाचेष्टैर्जलद ललितैर्निर्विशेस्तं नगेन्द्रम् ।।१।६२।।

कालिदासः कल्पद्रुमेष्वाभरणानामपि सत्तां प्रतिपादयति । संरम्भं चात्रावलम्बते । तत्राभरणानां द्वैविध्यमुपलभ्यते हारत्वेन हारेतरत्वेन च । तत्र प्रथ-

मत्रापि द्वैतमाश्रीयते रत्नहारत्वं मौक्तिकहारत्वं चेति । तत्र रत्नहाराणामस्तित्वं कुमारसंभवस्य २९।८-संदर्भत्वेनोपरि उद्धृतेन सप्तर्षिवर्णनपद्येन प्रतिपद्यते यत्र सप्तर्षयो 'रत्नाक्षसूत्रा' इति विशेष्यन्ते। तेन हि तदुपमानभूतेषु कल्पवृक्षेष्वपि तदस्तित्वं बलादुन्नीयते । मौक्तिकहाराणामुल्लेखः सुकविनानेनानेकधा कृतः। तथाहि—कुमारसंभवस्यानुपदमेव चर्चिते ६।६ पद्ये सप्तर्षयो मुक्तायज्ञोपवीता उच्यन्ते । ततस्तत्सादृश्यलाभाय कल्पवृक्षेष्वपि मुक्ताहारवत्वमुत्प्रेक्ष्यते । २७।६–संदर्भत्वेनानुपदोद्धृते रघुवंशस्य अतिथिवर्णनपरे १७।२५–२६–पद्यद्वये स्रग्वीति विशेषणेनोपमेये हारवत्त्वं प्रतिपादयता सादृश्यशिल्पशिरोमणिना सुकविना उपमानेपि तत्सद्भावोभीष्ट एव । हारपदं च निर्विशेषं प्रयुज्यमानं संस्कृतवाङ्मये मौक्तिमात्रपरमेव प्रसिद्धम् । सप्तर्षिवद् देवर्षिर्नारदोपि शशिकलामलं वीतसूत्रं धारयन् मुक्तागुणातिशयसंभृतमण्डनश्रिया कल्पवृक्षेनोपमीयमानः २६।५--संदर्भत्वेन प्रागुपस्थापिते विक्रमोर्वशीयस्य ५।१९-पद्ये मुक्तागुणपदेन मौक्तिकं हारमेव कल्पवृक्षे प्रसाधयति । एवमेव---

१३ कुमारसंभवे चन्द्रः कल्पवृक्षशिखरेषु स्फुरद्भिः पादैः हारयष्टिमिव रिरचयिषन्नुत्प्रेक्ष्यते —

'कल्पवृक्ष-शिखरेषु संप्रति प्रस्फुरद्भिरिव पश्य सुन्दरि ?
हारयष्टिरचनामिवांशुभिः कर्त्तुमागतकुतूहलः शशी ।। ८।६८।।

अत्रायं विशेषो यद् मुक्तागुण-हारयष्टि-शब्दाभ्यां हाराणां स भेदो ग्रहीतुं सुशको यः कालिदासादिभिः उपहारपदेनोच्यते ।[1]

१४ हारेतराभरणास्तित्वं कुमारसंभवस्य तारकासुरं प्रति महेन्द्रचाटुवर्णनपरे—

'तत्कृतानुग्रहापेक्षी तं मुहूर्दूतहारितैः ।
अनुकूलयतीन्द्रोपि कल्पद्रुमविभूषणैः।।२।३९।।–इत्यस्मिन् पद्ये लभ्यते ।अत्र विभूषणानि कल्पद्रुमजनितान्यपि संभवन्ति । वस्तुतः कल्पद्रुमदारिद्र्यमत्र विवक्षितमिति तद्विभूषाभरणानामेवात्र दूतहारितत्त्वमौचितीसुभगम । २७।६-संदर्भत्वेनातिथिवर्णनस्योद्धृते पद्येप्युपमेयगताभरणप्रातिनिध्यायोपमानगततयाप्याभरणान्युत्प्रेक्ष्येरन्नेव । तत्र हारस्य पृथगुपादानादाभरणपदेन हारेतराभरणमात्रमेव गृह्येत ।

**मधुकार-परभृत**योरपि कल्पवृक्षेषु स्थितिः २३।२–संदर्भत्वेनाग्रोद्धृते विक्रमोर्वशीयस्य ४।२–पद्ये दृश्यते ।

१ उपहारपदस्यार्थाय द्रष्टव्या नः 'कालिदासभारती' सागरिका, वर्ष ५ अङ्क १

कल्प-पदवाच्योयं वृक्षः "कल्पयति[1] संपादयति मनोरथान्–"इति यं मनोरथपूरणात्मानं विशेषम् ऐकान्तिकत्वेन क्रोडीकरोति सोपि कालिदासेनासकृदुदीर्यते । तथाहि—

१५ अलकाया सर्वमपि प्रमदाजनरुचिनं मण्डनमेकः कल्पवृक्ष एवं निष्पादयति–
'वासश्चित्रं मधु नयनयोर्विभ्रमादेशदक्षं पुष्पं द्भेदं सहकिसलयान् भूषणाना विकल्पान् ।
लाक्षारागं चरणकमलन्यासयोग्यं च यस्यामेकः सूते सकलमबलामण्डनं कल्पवृक्षः ॥२।१२॥

१६ मारीचाश्रमतपस्विनः सत्कल्पवृक्षेपि वने वायुभक्षणेनैव प्राणवृत्ति रक्षन्ति–
'प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तीर्थे कांचन-पद्म-रेणु-कपिशे पुण्याभिषेकक्रिया ।
ध्यानं रत्नशिलागृहेषु विबुधस्त्रीसन्निधौ संयमो
यद् वाञ्छन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥ शाकु ७।१२॥

नूनमत्र कल्प-पदेनेच्छापूरकत्वमेवाभिप्रेतम्, तेनैव विस्मय-व्यतिरेकयोः साधयितुं शक्यत्वात ।

१७ श्रीरामो भगवत्यै जनकनन्दिन्यै कल्पवृक्ष आसीद्, यतोहि स तस्याः सर्वानपि दोहदान् अचिरेणैव पूरयति स्म । यदासौ वनदिदृक्षां तद्व्याजेन सीतां तितिक्षुः सन् पूरयति तदा लक्ष्मणेन रथमारोप्य नीयमानासौ श्रीरामं कल्पद्रुमतां विहाय तां प्रत्यसिपत्रवृक्षतां गतं न वेद—
'सा नीयमाना रुचिरान् प्रदेशान् प्रियंकरो मे प्रिय इत्यनन्दत् ।
नाबुद्ध कल्पद्रुमता विहाय जातं तमात्मन्यसिपत्रवृक्षम् ॥ १४।४८रघु.॥

---

१ कल्पपदनिरुक्तौ ७००-शकीयो जिनसेनस्वामी तत्कृतावादिपुराणे वक्ति—
"मनोभिरुचितान् भोगान् यस्मात् पुण्यकृतां नृणाम् ।
कल्पयन्ति ततस्तज्ज्ञैर्निरुक्ताः कल्पपादपाः ॥ पर्व-३।३८॥
महिमाचार्योऽपि व्यक्तिविवेकेऽवाच्यवचनावसरे–"क्षुण्णं यदन्तःकरणेन वृक्षाः फलन्ति कल्पोपपदास्तदेवे–"त्युद्धरति ।
अत्रेदमपि ध्येयं यद् देवीभागवतस्य 'कल्पवाटिका-पदेन पञ्चस्वन्यतमस्य देववृक्षस्य 'कल्प'–इत्येव पूर्णं नाम । ततश्च व्यक्तिविवेककृद्वृत्तौ बोधोत्रापहस्तितो जायते । द्र० अस्मट्टीकोपेतो व्यक्तिविवेकः, पृ० ४४१।

१८ गन्धमादने पार्वत्या सह क्रियमाणविहारं भगवन्तं पशुपतिं गन्धमादनवनाधिदेवता लोहितार्कमणिपात्रस्थितं कल्पवृक्षप्रसूतं मधु समर्पयति—

'लोहितार्कमणिभाजनार्पितं कल्पवृक्षमधु बिभ्रती स्वयम् ।
त्वामियं स्थितिमतीमुपस्थिता गन्धमादनवनाधिदेवता ।। ८।७५कुमा.।।

१९ अलकायां यक्षाः पानोत्सवान् कल्पवृक्षमधुभिरेव निर्वर्तयन्ति—

'यस्यां यक्षाः सितमणिमयान्येत्य हर्म्यस्थलानि ज्योतिश्छायाकुसुमरचितान्युत्तमस्त्रीसहायाः ।
आसेवन्ते मधु रतिफलं कल्पवृक्षप्रसूतं त्वद्गम्भीरध्वनिषु शनकैः पुष्करेष्वाहतेषु ।। मेघ.२।५।।

३६।१५—संदर्भत्वेन पुरोपस्थापिते मेघपद्येऽपि कल्पवृक्षजनितस्य मधुनः स्मरणं कविना क्रियत एव । विक्रमोर्वशीयस्य यत् ५।१९—पद्यमिह २६।५—संदर्भत्वेनोपास्थापि तत्रापि नारदः पुरूरवसो मनोरथसंपत्तिं श्रावयितुमेव पुरूरवसः पार्श्वमुपेतः । अत एव स कल्पवृक्षेणैवोपमीयते शिल्पपटिष्ठेन कविना ततस्तत्रापि कल्पवृक्षपदं मनोरथपूरणव्यंजकतयैवागतं दृश्यते । स्वयंवरे राज्ञां १७—सर्गे चातिथेर्यत् कल्पपादपेनौपम्यं दृश्यते तत्रापि व्यंजनेयं न न क्षमा ।

२० ईदृग्विधस्य कल्पवृक्षस्य छायायां कामधेनुर्विश्राम्यति—

'पुरा शक्रमुपस्थाय तवोर्वीं प्रति यास्यतः ।
आसीत् कल्पतरुच्छायामाश्रिता सुरभिः पथि ।। रघु.१।७५।।

२१।५—संदर्भे रघुवंशस्य यत् सुरराजवृक्ष-पद-घटितं पद्यमुद्धृतं यच्च ३।३—संदर्भे तस्यैव काव्यस्य ६।६० तमं हरिचन्दनघटितं पद्यमुद्धृतं तदुभयमादाय त्रयश्चत्वारिंशति कालिदासप्रयोगेषु देववृक्षाणाममीषां यत्र ये विशेषा उल्लिखितास्तत्र तेषामवगमस्तालिकयानया कर्तुं शक्यते—

| विशेषाः | देववृक्षनामानि | | | | |
|---|---|---|---|---|---|
| | १ | २ | ३ | ४ | ५ |
| | हरिचन्दनम् | सन्तानः | मन्दारः | पारिजातः | कल्पः |
| १-अंगरागौपयिकोरुणो रसः | ००० | ... | ... | ... | ... |
| २-सुरभिपुष्पम्[1] | ... | ००० | ००० | ००० | ००० |
| ३-फलम् | ... | ... | ... | ... | .... |
| ४-छाया | ... | ००० | ००० | ... | ००० |

१ सुरपुष्पाणामुल्लेखः कालिदासेन वृक्षविशेषनामानुल्लेखेनापि क्रियते, यथा—अपार्थिवपुष्पम्- र० ८।३४, अमरस्रक् र० ८।३६, सुरपुष्पम् र० ८।८१

| | | | | | |
|---|---|---|---|---|---|
| ५-अरुण: पराग: | .. | ... | ००० | ... | ... |
| ६-शाखासु मुक्ताहार: | ... | ... | ... | ००० | ००० |
| ७-शाखासु स्वर्णाभरणम् | ... | ... | ... | ... | ००० |
| ८-शाखासु रत्नाभरणम् | ... | ... | ... | ... | ००० |
| ९-शाखास्वाभरणमात्रम् | ... | .. | ... | ००० | ००० |
| १०-प्ररोह: | ... | ... | ... | ... | ००० |
| ११-शाखांशुकम् | ... | ... | ... | ... | ००० |
| १२-ध्वजांशुकम् | ... | ... | .. | .... | ००० |
| १३-भ्रमरा: | ... | .... | ... | ... | ००० |
| १४-कोकिला: | .. | ... | .. | ... | ००० |
| १५-कान्त्यतिशय: | ... | ... | ... | ००० | ... |
| १६-कान्तिसामान्यम् | ... | ... | ... | ... | ००० |
| १७-इच्छापूरकत्वम् | ... | ... | ... | ... | ००० |
| १८-समुद्रप्रभवत्वम् | ... | ... | .. | ००० | ... |
| १९-वेदिका | ... | ... | ... | ००० | ००० |

अत्रायं प्रश्न उत्तिष्ठति यद् हरिचन्दन[1] - मन्दार - पारिजात-कल्पवृक्षेषु क्रमेणैकैकवृत्तितया यानि अंगरागारुणपरागसमुद्रप्रभवत्वमनोरथसंपादकत्वानि कविना दर्शितानि तानि तत्तदेकनिष्ठतया तस्य स्वालक्षण्यरूपेण विवक्षितानि सामान्यधर्मरूपेण वा । अयमाशयो यद् ये हि विशेषा: वृक्षविशेषनिष्ठतया प्रतिपाद्य तद्भिन्नवृक्षानिष्ठतया कविना प्रतिपादिता: तेषां सद्भावोपि तत्तद्-वृक्षे कवेर्विवक्षित:, यदिवा केवल: अभाव एव तत्र प्रतिपिपादयिषित: । प्रश्नस्य तात्पर्यमिदं यदमी देववृक्षा: कवे: परस्परं भिन्नतया वा । अत्र २०।४–संदर्भत्वेनोद्धृताद् रघुवंशस्य ६।६–पद्यादिदमवगम्यते यत् सर्वेषामेतेषां भिन्नत्वमेव कवेरभिप्रेतम् । वस्तुत: भिन्नत्वमेव परम्परयाप्यनुमोद्यते । परम्परेयममरकोशस्यैतल्लेखारम्भ उद्धृतेन 'पञ्चैते देवतरव:' इत्यनेन वचनेन स्पष्टतामासादयति । अत्र हि देवतरुषु पंचत्वं सिसाधयिषितं न तु देवतरुनामसु । तथा सति 'उच्यते देववृक्षश्च मन्दार:० 'इत्येवमुच्येत । अस्ति च पुराणेष्वप्येतेषां भिन्नत्वमेव प्रपञ्चितम् । अत्र च मत्स्यपुराणं देवीभागवतं च प्रमाणम् ।

---

१ एतेषांमेव वृक्षाणां सामान्यतोऽपि निर्देश: कालिदाससाहित्ये लभ्यते, यथा– नन्दनद्रुमा: कु० २।४१; देवारण्यम् [र०१०।८०] इति पदमपि प्रसंगेऽस्मिन् संग्राह्यम् ।

मत्स्यपुराणे कल्पपादपदानप्रस्तावे मध्ये कल्पवृक्षं निर्माय तत्पार्श्वेषु पारिजातादीनां पृथक् निर्माणं प्रतिपाद्यते । तथाहि—

'अर्धक्लृप्तसुवर्णस्य कारयेत् कल्पपादपम् ।
सन्तानं पूर्वतस्तद्वत् तुरीयांशेन कारयेत् ।।
मन्दारं दक्षिणे पार्श्वे श्रिया सार्धं घृतोपरि ।
पश्चिमे पारिजातं तु सावित्र्या सह जीरके ।।
सुरभीसंयुतं तद्वत् तिलेषु हरिचन्दनम् ।
तुरीयांशेन कुर्वीत सौम्येन फलसंयुतम् ।। २७६।३—८।।

देवीभागवते पुनर्मणिद्वीपवर्णनावसरे तत्तत्सालेषु वृक्षाणामेषां वनानि पार्थक्येनैव वर्ण्यन्ते । तथाहि—

'कांस्य-सालादुत्तरे तु ताम्रसालः प्रकीर्तितः ।
द्वयोस्तु सालयोर्मध्ये संप्रोक्ता कल्प-वाटिका ।
ताम्रसालादुत्तरत्र सीससालः प्रकीर्तितः ।
सन्तानवाटिका मध्ये सालयोस्तु द्वयोर्नृप ।
सीससालादुत्तरत्राप्यारकूटमयः शुभः ।
हरिचन्दनवृक्षाणां वाटी मध्ये तयोः स्मृता ।
आरकूटमयादग्रे सप्तयोजनदैर्घ्यवान् ।
पंचलोहात्मकः सालो मध्ये मन्दारवाटिका ।
पंचलौहमयादग्रे वर्त्तते रौप्यसालकः ।
पारिजाताटवी मध्ये प्रसूनस्तबकान्विता ।। १२।१०।३५-६२

भागवतेस्मिन् सालेष्वेतेषु ऋतुभेदोपि वर्ण्यते । तत्र कल्पवाटिका वसन्तेन, सन्तानवाटिका ग्रीष्मेण, हरिचन्दनवाटिका वर्षर्तुना, मन्दारवाटिका शरदा, पारिजातवाटिका च हेमन्तेनाधिष्ठिता वर्ण्यन्ते । यद्यपि सर्वेपि ऋतवस्तत्र सहयुध्वानः तथापि स्थाननियमदर्शनात् तेषां तदधिष्ठित-देववृक्ष-भेदकत्वमेव नियतम् । अयमत्रापरो भेदहेतुर्यद् विष्णुपुराण एतेषामुत्पत्तावयौगपद्यमुपपाद्यते । तत्र हि पारिजातोत्पत्तेः प्रागपि संतानकनाम्नो देववृक्षस्यास्तित्वमुपदर्श्यते । पुराणस्यास्य प्रथमे अंशे यो नवमोध्यायस्तत्र समुद्रमन्थनात् श्री—देव्या उत्पत्तौ दुर्वासः-प्रदत्तायाः सन्तानक-स्रजो विमाननैव महेन्द्रकर्तृका मूलम् । इदमत्रापरं भेदकं प्रमाणं यत् समुद्राद् उत्पन्नं वृक्षरत्नं सर्वत्र पारिजातनाम्नैव व्यपदिश्यते । तद् यथा—

महाभारते— 'पारिजातश्च तत्रैव सुरभिश्च महामुने ।
जज्ञाते तौ तदा ब्रह्मन् सर्वकामफलप्रदौ ।।

—आदिपर्व । १८।३६—क्षेपकः ।।

विष्णुपुराणे— 'कृतावर्त्तात् ततस्तस्मात् क्षीरोदाद् वासयञ्जगत् ।
गन्धेन पारिजातोभूद् देवस्त्रीनन्दनस्तरु. ।। १।९।९५ ।।

पद्मपुराणे— 'मन्थने पारिजातोभूद् देवस्त्रीनन्दनो द्रुम. ।
रूपौदार्यगुणोपेतास्ततश्चाप्सरसा गण' ।। सृष्टिखण्डे ४।५० ।।

एवमेव-'ऐरावतस्ततो जज्ञे तथैवोच्चैःश्रवा हय ।
धन्वन्तरि. पारिजातः सुरभिश्चाप्सरोगणः ।। ब्रह्मखण्डे १०।१।।

मत्स्यपुराणे— 'कौस्तुभश्च मणिर्दिव्यश्चोत्पन्नोऽमृतसंभव ।
पारिजातश्च विकच-कुसुम-स्तवकाञ्चितः ।। २४९।५ ।।

श्रीभागवतेपि— 'ततोभवत् पारिजातः सुरलोकविभूषणम् ।
पूरयत्यर्थिनो योर्थैः शश्वद भुवि यथा भवान् ।। ८।८।६ ।।

शुकनासोपदेशे कादम्बरीकविना श्रीबाणेनापि श्रियां विगर्हणे 'इय हि पारिजातपल्लवेभ्यो रागम्.- इत्यादिना महाश्वेतावृत्तान्ते च 'इयं च सुरासुरैर्मथ्यमानात् क्षीरसागराद् उद्गति पारिजातनामा पादप, तस्य मञ्जरी'-ति च लक्ष्मी-सहभुवो वृक्षरत्नस्योल्लेखः 'पारिजात-'पदेनैव विधीयते । ततश्च—

'एषा गिरे. सकलरत्नफलस्तरुः स
प्राग् दुग्धभूमिसुरभैः खलु पञ्चशाखः ।
मुक्ताफल फलन-सान्वय-नाम तत्व-
न्नाभाति बिन्दुभिरिविच्छुरितः पयोधे' ।। नैषधीयच.–११।१० ।। इति

कवयन्नैषधीयचरितकवि श्रीहर्षोपि नून पारिजातमेव लक्षीकरोति । असति भेदे समुद्रसंभूतस्तरुः कदाचित् कल्पादिभिः पदैरप्यभिधीयेत । इदमत्र प्रबलतमं भेदकं यदिदानीं लोकेपीमे वृक्षाः तत्तन्नामभिर्व्यपदिश्यमाना लभ्यन्ते । तत्र शेफाली पारिजातपदेन, श्वेतचन्दन रक्तचन्दनं वा हरिचन्दनपदेन, अर्की मन्दार-पदेन, कृतवेदिको ध्वजशाखांशुकवान् कश्चनापि ग्रामवृक्ष कल्पवृक्षपदेनाभिधीयते । अभिप्रायोय -भारतीये मूर्तिशिल्पेपि न न प्रसिद्धः । भरहुत-सांची-प्रभृतिषु शिल्पशिरोमणिभूतेषु स्थानेषु कल्पवृक्षस्यास्योत्कीर्णनं विद्वत्सु नितान्त प्रथितमेव[1] । अस्माकं निवासग्रामे **नादनेरे**ऽपि[2] प्रस्तरखण्डमेकमजयपालदेवनाम्ना प्लक्षपादपस्यावस्तात् प्रतिष्ठापितं यत्र कल्पतरोरस्य प्रत्यंगं प्रस्फुटमुत्कीर्णनमिदं तद्विदां चेतांसीदानीमपि नितान्तमेवावर्जयति । मुक्तादामभिराभूषितस्यास्य तले

———

**१ डॉ० वासुदेवशरणाग्रवालस्य 'हर्षचरितः एक सांस्कृतिक अध्ययन' इति ग्रन्थे वत्तात् १५ पृष्ठस्थादुल्लेखात् तथ्यमिदं प्रमाण्यते ।**

**२ सीहोरमण्डले भोपालस्य पार्श्वं एव विद्यत एष ग्रामो नर्मदातटे ।**

रतिकामौ राजदम्पती कौचिदत्यन्तमेव भूषितवपुषावुत्कीर्णौ, शाखाग्रे च वर्धमानस्वामी। ततश्च लोकवृक्षन्यायेन देववृक्षेष्वपि समाननामभाक्षु भेदोपपत्तिरपेतानौचित्येव। कालिदाससाहित्यादुद्धृतेष्वपि स्थलेषु देववृक्षाणां सोयं भेद एव यत्सत्यं पृष्ठभू-भूत इति पुराणपरम्परागानया सुखेनैवोन्नेतुं शक्यते ततश्च रघु.–६।३–पद्यव्याख्यायां—

'(कल्पद्रुमाणामिव पारिजातः) अत्र' कल्पद्रुम-' शब्दः पञ्चान्यतमविशेषवचनोपि कल्पयन्ति मनोरथानिति व्युत्पत्या सुरद्रुमात्रोपलक्षकतया प्रयुक्त इत्यनुसंधेयम्। कल्पा इति द्रुमा कल्पद्रुमा इति विग्रहः।-'इति 'कृपू सामर्थ्ये, कल्पयति मनोरथं कल्पः स चासौ द्रुमश्च, तेषां मध्ये पारमस्यास्तीति पारो, पारिण्यब्धौ जातः पारिजात इव। पंचानां मध्ये एकस्य कल्पद्रुम-शब्दवाच्यत्वं यद्यपि प्रतीयते तथापि प्रवृत्तिनिमित्तस्य संकल्पार्थ-कल्प-पदार्थस्य पूरणे पंचानामपि साधारण्यात् कल्पद्रुमाणामिति बहुवचनम् तथा माघः 'कल्पद्रुमैः सह विचित्रफलैर्विरेजुः-' ।५।१६। तेषु पारिजात उत्कृष्ट इति पारिजातहरणात् सिद्धम्-'। –इति च यत् क्रमेण मल्लिनाथ-हेमाद्रिभ्यां संजीविनी-दर्पणयोः पंचानामपि देववृक्षाणां कल्पवृक्षपदवाच्यत्वमुपकल्पितं तत् स्वमनीषिकयैव। 'कल्पद्रुमाणा-'मिति' कल्पद्रुमै-'रिति च रघुवंश-शिशुपालवध-कविभ्यां कल्पद्रुम-पदे यद् बहुत्वं योजितं तत्रान्यदेव बीजमुत्प्रेक्षामहे। वेदिका-वस्त्राभरण-मुक्तादाम-प्रभृतीनां हरिचन्दन-सन्तानक-मन्दारान् विहाय केवलं कल्पद्रुम-पारिजातयोरेव सद्भावं प्रतिपादयता कालिदासेन उदारनेपथ्यवतां मञ्चे विराजमानानां च राज्ञामुपमानतया कल्पद्रुमनाम्ना व्यपदिष्ट एव देववृक्षः स्मर्तुं शक्यः। उपमेयबहुत्वाच्च तत्र बहुत्वमपि योजयितुं शक्यम्। न हि तेन सन्तानादीनामपि कल्पत्वमुचितं कविमस्तके रोपयितुम्। माघस्थलेपि वनस्पतीनां शाखावसक्तवसनाभरणाभिरामत्व-जनक्लान्तिच्छित्त्वमेव समानो धर्मः, यो हि देववृक्षेषु कल्प-पदवाच्य एव द्रुमे प्रसिद्धः, न मन्दारादिषु। तेन हि सत्यपि बहुत्वे कल्पद्रुमपदस्य देववृक्षसामान्यपरत्वमत्र कालिदाससाहित्ये विमान्यमेव, उपमेयबाहुल्यं हि तत्र बहुत्वस्य मूलम्। एवं हि पञ्चानामपि देवतरूणां परस्परभिन्नत्वमेवात्र कालिदाससंमतं सिद्धयति।

जैन-पुराणेषु कल्पवृक्षाणां दश प्रकारा मन्यन्ते। जिनसेनस्वामिकृते आदिपुराणे तेषां वर्णनमेवं क्रियते—

मद्य–भूर्य–विभूषा–स्रग्–ज्योति–दीप–गृहांगकाः।
भोजनामत्र-वस्त्रांगा दशधा कल्पशाखिनः॥ पर्व-३ श्लो० ३९

अत्र 'अंग'–शब्दः वामनप्रयुक्त-'काव्यांग'-शब्दघटकीभूतांगशब्द इवैव जनकत्वपरः।

तश्च जैनमते कल्पवृक्षाणामिमानि दश नामानि भवन्ति-१-मद्यजनकः २-तूर्यजनकः ३-विभूषाजनकः ४-हारजनकः ५-ज्योतिर्जनकः ६-दीपजनकः ७-भोजनजनकः ८-गृहजनकः ९-भाजनजनकः १०-वस्त्रजनकश्च ।

एतत्संकेतोऽपि कालिदाससाहित्ये तत्र तत्र लब्धुं शक्यते यत्र कालिदासेन मानवाय वनस्पतिसेवा वर्ण्यते । तत्रापि शाकुन्तलस्य शकुन्तलापतिगृहगमनावसरे

क्षौमं केनचिदिन्दुपाण्डु तरुणा मांगल्यमाविष्कृतं
निष्ठ्यूतश्चरणोपभोगसुलभो लाक्षारसः केनचित् ।
अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-
र्दत्तान्याभरणानि तत्किसलयोद्भेदप्रतिद्वन्द्विभिः । ४।४

इत्येवमुच्यमानायां तस्यामेतत्संकेतो नितान्तमेव स्फुटः । यद्यपि लोकोत्तराभिरेवंविधघटनाभिरनुत्तमा राज्यश्रीः सूच्यते सूचिता चैतत्पद्यसमनन्तरीये प्रियंवदायाः 'अनयाऽभ्युपपत्त्या सूचिता ते भर्तुर्गेहेऽनुभवितव्या राजलक्ष्मीरिति वचनेन । जातककथासु च घटना इमा भृशं विप्रकीर्णाः । कालिदासेनापि "प्रभावस्तम्भितच्छायम्" इत्यादिभिः (रघु० १२।२१) वचनैरेता न नोल्लिख्यन्ते । अथापि घटनाभिराभिर्वनस्पतीनां कल्पत्वं न निषेध्यते ।[1] वस्तुतो 'नास्ति मूलमनौषधम्"–इत्युक्त्या यत्किञ्चिन्मनोरथपूरकत्वं सर्वेष्वेव वनस्पतिषु संभाव्यत एव ।

यदिदं कालिदाससाहित्ये कल्पादिदेववृक्षविवरणमस्माभिरनुशीलितम्, अत्र पुराणसाहित्यस्योपजीव्यत्वं सुखेनैवोपगन्तुं शक्यते । देववृक्षाणां परस्परमैक्यानैक्यविमर्शावसर इदं दृष्टमेव, मेघदूते अलकायाः कुमारसंभवे च सप्तर्षीणां यद् वर्णन तत्रोपीदमाक्षिप्यते । तथाहि मेघदूते यक्षकन्यका यत्र वर्ण्यन्ते तत्र मन्दाकिन्यास्तटेषु मन्दारवृक्षाणामस्तित्वं स्मर्यते—"मन्दाराणामनुतटरुहां छायया वारितोष्णा"–इति । मत्स्यपुराणेपि हिमवत्खण्डे यत्र कैलासान्मन्दाकिन्या उद्गमो वर्ण्यते तत्रोच्यते—

कैलासपादसंभूतं रम्यं शीतजलं शुभम् ।
मन्दारपुष्परजसा पूरितं देवसन्निभम् ।
तस्मात् प्रवहते दिव्या नदी मन्दाकिनी शुभा ॥

मत्स्यपु० अध्या० १२०।३-४

---

१ वाल्मीकिरामायणस्य किष्किन्धाकाण्डीये ४३ सर्गे ४५-५० श्लोकेषु कल्पद्रुमादिनामानुल्लेखपूर्वकं वृक्षाणामेकैकाभिलाषपूरकत्वमिदं जैनसाहित्योपवर्णिततथाविधवर्णनस्य मूलमिव प्रतिभाति

कुमारसंभवे सप्तर्षीणां वर्णने यद्--

आप्लुतास्तीरमन्दारकुसुमोत्करवीचिषु ।
व्योमगंगाप्रवाहेषु दिङ्नागमदगन्धिषु ।। ६।५

अत्र व्योमगंगाप्रवाहस्यापि मन्दारकुसुमोत्करवीचित्वमीक्ष्यते तत्रापि नूनं मत्स्यपुरोणमन्दाकिनोवर्णनमेव मूलम् । अलकायां वर्ण्यमानानां कल्पवृक्षाणां मूलं मत्स्यपुराणस्य कैलासवर्णनमेव प्रतीयते यत्र "नानारत्नमयैः शृंगैः कल्पद्रमसमन्वितैः मध्ये हिमवतः पृष्ठे कैलासी नाम पर्वत"–इत्येवं कल्पवृक्षा वर्ण्यंते ।

कल्पवृक्षस्य साम्प्रतमेकमाध्यात्मिकमपि रूपं तान्त्रिकीषु साधनासु प्रचलितं दृश्यते । देवीभागवते मणिद्वीपस्य यद् रूपं कल्प्यते तत्र कांस्य-ताम्र-सीस-रौप्यनिर्मितानां प्राचीराणां मध्ये कल्पवृक्षादिवाटिका अपि वर्ण्यते । यथा चैतत् तत् पूर्वं भेदाभेदविचारप्रस्तावे प्रस्तुतैरुद्धरणैः स्पष्टमेव । ततः परं सुवर्ण-पुष्पराग-पद्मराग-गोमेद-हीरक-वैदूर्येन्द्रनील-मुक्ता-मरकत-प्रवाल-नवरत्न-माला वर्ण्यन्ते । अन्तिमे च नवरत्नसाले चिन्तामणिगृहं कल्प्यते । तत्र स सहस्रस्तम्भसंयुक्ताः शृंगार-मुक्ति-ज्ञानैकान्तनामानश्चत्वारो मण्डपाः कल्पयन्ते । चिन्तामणिगृह एव पराशक्तिरूपैर्दशभिः सोपानैः ब्रह्मविष्णुरुद्रेश्वररूपैर्मञ्चखुरैः सदाशिवरूपेण च फलकेन विराजमान एकस्मिन् दिव्य-दिव्ये मञ्चरत्ने श्रीभुवनेशेन भगवता महादेवेन सह तदर्द्धांगभूता भगवती भुवनेश्वरी जगदम्बा विराजमाना वर्ण्यते । लिंगपुराणस्यानाहतनादरूपाजपाजपदानवद् रत्नमयमहाकल्पपादपदानमपि रत्नकल्पपादपयोराध्यात्मिकं सामंजस्यमुपस्थापयति यत्र—

"अथान्यत् संप्रवक्ष्यामि कल्पपादमुत्तमम् ।
शतनिष्केण कृत्वैवं सर्वशाखासमन्वितम् ।
शाखानां विविधं कृत्वा मुक्तादामाद्यलम्बनम् ।
दिव्यैर्मरकतैश्चैव चांकुराग्रं प्रविन्यसेत् ।।
प्रवालं कारयेद् विद्वान् प्रवालेन द्रुमस्य तु ।
फलानि पद्मरागैश्च परितोस्य सुशोभयेत् ।।
मूलं च नीलरत्नेन वज्रेण स्कन्धमुत्तमम ।
वैदूर्येण द्रुमाग्रं च पुष्परागेण मस्तकम् ।।
गोमेदकेन वै कन्दं सूर्यकान्तेन सुव्रत ।
चन्द्रकान्तेन वा वेदिं द्रुमस्य स्फटिकेन वा ।।
निवेद्येमं द्रुमं शम्भोर्योगिनां वाथवा नृप ।
भस्माङ्गिभ्योऽथवा राजा सार्वभौमो भविष्यति ।।"

इत्येवं रत्नकल्पितस्य कल्पपादपस्य दानं योगीश्वराय शम्भवे योग्यन्तराय वा

योगाभ्यासाभावेपि योगिवेषधारिणे वाव्यवस्थाप्यते। रत्न-कल्पपादपयोरिदमाध्यात्मिकं संयोजनं[1] भावनोपनिषदि रूपकभाषया नितान्तं स्फुटमुपजायते यत्र श्रीचक्रध्यानावसर उच्यते—

"देहो नवरत्नद्वीपः ।६।

त्वगादिसप्तधातुरोमसंयुक्तः ।७।

संकल्पाः कल्पतरवः, तेजः कल्पकोद्यानम् ।८।

रसनया भाव्यमाना मधुराम्लतिक्तकटुकषायलवणरसाः षड् ऋतवः ।९।

यदेव च[2] तन्त्रराजे—

"रत्नद्वीपो भवेद् देहो नवत्वं धातुरोमभिः ।

संकल्पाः कल्पतरवः स्वाधारा ऋतवः स्मृताः ॥"

इत्येवं कारिकया संगृह्यते।

कालिदास एवंविधं रूपकं कामधेनु-नन्दिनी-वसिष्ठ-देवदार्वादिघटिते रघुवंशद्वितीयसर्गस्य गोचारणाख्याने निपुणमुपनिबध्नाति[3] किन्तु कल्पवृक्षोल्लेखावसरे स प्रायेणापेतसंरंभ एव लक्ष्यते। यद्यपि "आसीत् कल्पतरुच्छायामाश्रिता सुरभिः पथि"–इति पूर्वोद्धृते रघुवंशस्य प्रथमसर्गीये स्थले "प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वन" इति तादृश एव शाकुन्तलस्य सप्तमांकीये स्थले कल्प-पादपविषय एवंविधा भावनोपनिषत्कल्पा कल्पना स्वप्रसराय प्रकाममवसरमधिकरोति।

एवं देववृक्षानधिकृत्य प्रसृता विविधपक्षमयी या भारतीया परम्परा कालिदाससाहित्यं तां सर्वाङ्गीणतयेव स्पृशति, तस्याः प्रायेण सर्वानपि प्रमुखान् मार्गान् प्रशस्तयति।

---

१ तान्त्रिक–टेक्स्ट्स ११–भागः।

२ भावनोपनिषदि भास्कररायकृता टीका।

३ एतदर्थमस्माकं 'नन्दिनी-विद्वे'–ति नाम्ना रायपुरसंस्कृतमहाविद्यालयशोधपत्रिकाया मेधायाः १९६५–वर्षीयेऽङ्के प्रकाशितो लेखो द्रष्टव्यः।

# उद्दण्डकवेर्मल्लिकामारुतम्

## (डॉ० वा० वि० मिराशी)

मल्लिकामारुतमित्येतत् प्रकरण उद्दंडिरथवा दडि-नाम्ना कविना विरचितं कलिकातानगरे स्वर्गीयजीवानन्द विद्यासागरेण मुद्रयित्वा ख्रिस्ताब्दे १८७८ तमे प्रकाशितम् । तदधुनात्यन्तं दुष्प्रापम् । किन्तु तत संस्कृतनाट्यवाङ्मयाभ्यासकानां कृतेऽतीव महत्त्वपूर्णम् । अतस्तस्याल्पः परिचय इह प्रस्तूयते ।

अस्य प्रकरणस्य प्रस्तावनायां सूत्रधारः कवेरभिजनादिकं एवं निर्दिशति— दक्षिणापथे कामाक्षीकटाक्षताण्डवितकविशिखण्ड-मण्डलेषु तुण्डीरेषु लाटपुरनामाग्रहारः । तत्र आपस्तम्बशाखाध्यायिनो वाधूलकुलोत्पन्नस्य उपाध्याय-गोकुलनाथपौत्रस्य श्रीकृष्णसूनोः भट्टरंगनाथस्य प्रियनन्दन इरुगुपनाथापरपर्यायो दण्डिकविर्नामा सोऽधिगतसकलविद्यो दिदृक्षुर्दिगन्तराणि आन्ध्रकर्णाटकलिङ्गचोलकेरलानवतीर्णः मज्जन् महानदीषु, पश्यन् देवतास्थानानि, ताम्रचांडनगरं (अधुना 'कालिकत' इत्याख्यया प्रसिद्धनगरं) आढौकत । तत्र च राजसभां गत्वा राजानमेवमस्तौत्—

प्रत्यर्थिभूमिपालप्रतापधर्मोत्थपुष्कलावर्त ।
विश्वम्भराकुटुम्बिन् विक्रमविश्वैकवीर विजयस्व ।।

अयं विक्रमनृपतिः झामोरिनवंश्यो मानविक्रम इति मन्यते । तस्य समयः प्रायः ख्रैस्तपञ्चदशशताब्द्या मध्यकालो मन्यते ।

कविस्तुत्या सन्तुष्टो नृपतिस्तमादिशत्

श्रीमन्नुद्दण्डविद्वन् निशमय वचनं मामकं कामदोग्ध्री
वाणी नाणीयन्ती ते ननु वरकविताभूषिता वाग्विलासे ।
तस्मादह्नाय सम्यक् प्रकरणमतुल मल्लिकामारुताख्यं
किञ्चिद्व्यंजद्रसार्द्रं विरचय विधिना सत्कवे सत्क्रियां मे ।

एवमादिष्टः स कविस्तत्प्रकरणं राजसभायां प्रयोजितवान् ।

सन्त्यस्य प्रकरणस्य दशांकाः । प्रस्तावनायां सूत्रधारो नटीं संगीतकं

---

1 K. K. Raja : The contribution of Keral to Sanskrit Literature p. 70

प्रवर्तयितुमादिशति तथा तथा कृते स वदति । अधुना मम देशाद्देशान्तरगमनप्रयासो महते सन्तोषाय सम्पन्नः ।

वस्तुनि चिराभिलषिते कथमपि दैवात्प्रसक्तसंघटने ।
प्राक् प्राप्तान्यपि बहुशो दुःखानि परं सुखानि जायन्ते ।।

सूत्रधारोक्तिमेव पुनरुच्चार्य प्रथमाङ्कारंभि कुसुमपुरोपकण्ठे आश्रमनिवासिनी महायोगेश्वरी मन्दाकिनी आत्मनः सारसिकानाम्न्या शिष्यया सह प्रविशति । सा पुरा हिमालये योगाभ्यासमये विद्याधरमन्त्रिणो विश्वावसोः सतीर्थ्यासीत् । तदनन्तरं सा कुसुमपुरमागता तत्र जातायां विश्वावसोः मल्लिकानाम्न्यां कन्यायामतीव स्निह्यति । कुन्तलेश्वरामात्यसूनुजा चतुर्दशविद्यापारदृश्वना मारुतनाम्ना कुमारेण सह तस्या विवाहो भवेदित्यभिलषति । तस्मिन्नेव दिने तदाश्रमे तयोरितरेतरदर्शने गाढकठोरस्मरविकारोऽजनीति हृष्यति तस्याश्चेतः। सा तयोः पाणिपीडनार्थं सर्वथैव प्रयतितुं निश्चिनोति । किन्तु पश्यति तस्मिन्नेकमन्तरायम् । आरट्टेश्वरस्य अमात्यः शम्बरको नाम तां कुसुमपुरराजमुखेन प्रार्थयते । किन्तु सोऽत्यन्तं तिरस्कार्यः । तदन्तरायदूरीकरणेऽपि प्रयत्नो विधेयः ।

तदनन्तरं कामयमानावस्थे मारुतः प्रविशति मल्लिकादर्शनोत्पन्नां स्वमदनबाधां वर्णयति च । मदनमुद्दिश्य स ब्रूते—

बाणाग्निमस्तकरुणो विकिरन् यमाङ्गे
प्रायो न वेत्सि विषमास्त्रवर स्वपीडाम् ।
सन्ताप एष भवता किमु नान्वभावि
चण्डीपतेरलिकलोचनगोचरेण ।।

तदनन्तरं तस्य परमसुहृत् कलकण्ठः प्रविशति वर्णयति च स्वीयामवस्थां अमात्यविष्णुरातस्य कन्यकाया रमयन्तिकाया दर्शनेन । तयोः संभाषमाणयोः कालिन्दी नाम मल्लिकासखी प्रविश्य मल्लिकाया मदनबाधां वर्णयति तत्प्रेषितां दिव्यपुष्पमालां मारुतायोपहरति । तन्मुखात्ताभ्यां ज्ञायते मल्लिकाजन्मवृत्तान्तः । सा किल जन्मनोऽनन्तरं तत्पित्रोद्याने मल्लिकामूले आसादिता । अत एव मल्लिकेति कृतनामधेया । तदनन्तरं मारुतोऽपि आत्मनः सहजं मौक्तिकं हारं तद्धस्तेन मल्लिकायै प्रत्युपायनत्वेन प्रेषयति । तदनन्तर सिंहलद्वीपागतैर्नाविकैः कुन्तलेश्वराय प्राभृतीकृतं तेन च प्रेषितं चित्रफलकमादाय कुसुमपुरमागतो भ्रमरको नाम सेवकस्तं चित्रफलकं मारुतायार्पयति ।

द्वितीयाङ्के कालिन्द्या सह सम्भाषमाणा मल्लिका मारुतप्रेषितेन मुक्ताहारेणात्मनो मदन-बाधा स्थगितेति वर्णयति

तानालीकरदत्तशीतल विधीनारभ्य तद्दर्शनात्
या मन्ये वडवानलानिव वपुर्दाहेन मोहाकुला ।
सा जाता नु तदङ्गसंगसुभगे हारेऽधिरूढस्तने
सर्वाङ्गे स्थगितेव साम्प्रतमहो मौधाकरैर्मण्डलैः ।।

कालिन्दी मल्लिका कथयति यत्त्वद्दर्शनेन मारुतोऽपि त्वत्सदृशी मदन-पीडामनुभवति ।

तस्यापि वाष्पकलमक्षि वपुर्विवर्णं
म्लानं मुख परिसरे प्रियमित्रमेव ।
किञ्च ह्रिया तव गुणानभिशृण्वतश्च
प्रत्यक्षरं पुलकशालि कपोलमूलम् ।।

तस्मिन्नवसरे भगवतीमन्दाकिनीद्वारा प्रेपितं चित्रफलकमादाय काचिद्दास्या-गच्छत्यर्पयति च तं मल्लिकायै । तं दृष्ट्वा मल्लिका तत्र चित्रितं मारुतं वर्णयति ।

तद्वक्त्रं श्रवणान्तचुम्बिनयनं सा बन्धुरा कन्धरा
तावाजानुविलम्बिनौ मरकतस्तम्भाभिरामौ भुजौ ।
तद्वक्षो विपुलं स एष सहजो हारोऽप्यमुष्मिन्नहो
तावूरू करिराजहस्तरुचिरौ ते एव ताम्रे पदे ।।

तदैव मारुतानुचरो भ्रमरकः तत्प्रेपितं सीमन्त-मणि मल्लिकायै अर्पयति । तं दृष्ट्वा कालिन्दी भणति—

तदिदं हाटकसूत्रस्यूतं सखि पाटलं रत्नम् ।
प्रेषितमनुरागधरं मन इव स्मरेषुणा विद्धम् ।।

तृतीयाङ्के मन्दाकिनी सारसिकयोः संभाषणाज्ज्ञायते यत् राजादेश-मनुसृत्य मल्लिकापिता विश्वावसुर्गौरीमंदिरं गत्वा तां मल्लिकावरज्ञानार्थं प्रार्थयामास—

मातर्नमोऽस्तु तुभ्यं प्रसीद कल्याणि देवि शर्वाणि ।
ब्रूया वरं वरेण्यं वत्सायास्त्वत्प्रसाद लब्धायाः ।।

तदा समीपस्थतमालवृक्षषण्डशृंगस्थितः तत्पत्रच्छन्नः शम्बरको गौरीवाच-मिवोवाच । 'वत्से विश्वावसो, ज्ञायतां शम्बरको मल्लिकाया वर इति' ।

मन्दाकिनी शम्बरकस्यैतत्कपटं जानाति, किन्तु वञ्चनस्य वञ्चनमेव प्रतिक्रियां मनुते, वदति च—

कुमन्त्रिणं कूटविधानचुञ्चुंकूटैः सुगूढैरतिसन्दधामि ।
यत्कण्टकानां चरणक्षतानां निष्कासनं कण्टकतो लघीयः ।।

तदनन्तरं भ्रमरेण सह मारुतः, पुष्पावचयार्थं कालिन्द्या सह मल्लिका च प्रविशतः। मल्लिकां दृष्ट्वा विवृद्धया मदनबाधया मारुतो मोहं गच्छति किन्तु मल्लिका तं स्पर्शेन प्रबोधयति। प्रबुध्यमानो मारुतः सरोमाञ्चो वदति–

स्पर्श एष हृदयङ्गमः सुधावर्षवद्वपुषि को विभाव्यते।
चन्द्रचन्द्रमणिहार मालतीगन्धसारघनसारशीतलः॥

तदैव द्वाभ्यां मत्तहस्तिभ्यां कृतो जनसंप्लवः नेपथ्ये श्रूयते।

एतौ द्वाववितर्कितावतिमदौ विद्राविताधोरणौ
धावं धावमितस्ततः पथि जनान्व्यापादयन्तौ रुषा।
वेतण्डौ पृथुदन्तदण्डविकटावुच्छुङ्खलावेनयो-
रेकः सोमसरः परस्त्विह वसन्तोद्यानमाढौकते॥

किन्तु निर्भयो मारुतस्तमाक्रम्य वशमानयति। सोमसरोगतं तत्र स्नानं कुर्वतीं रमयन्तिकामास्कन्दमानमपर मत्तहस्तिनं मारुतमुहृत्कलकण्ठस्तन्मस्तके सिंहवन्निपत्य नियमयति।

चतुर्थाङ्के द्वयोर्हस्तिपकयोः संभाषणाद् ज्ञायते यत्तौ मत्तहस्तिनौ शम्बरकप्रेरणयैव तत्प्रदेशमास्कन्दितवन्तौ। शम्बरकशिष्यः कलपिङ्गः पथिकवेषं धारयित्वा मारुतं 'कलकण्ठो मत्तहस्तिना व्यापादितः' इति मृषोदन्तं कथयति। तच्छ्रुत्वा मारुतो भृगुपतनेन स्वजीवितं त्यक्तुं निश्चिनुते। तदनन्तरं स कुटिलः कलपिङ्गः मल्लिकां मारुतनिधनवार्तां श्रावयति। ततः सा मोहमुपगच्छति। किन्तु अचिरादुपस्थितेन कलकण्ठेन मारुतस्तेन च मल्लिकाश्वास्यते। तदैव विश्वावसुना गौरीवचनान्मल्लिका शम्बरकाय दत्तेति वार्ता श्रूयते तैः। ततः मारुतो मल्लिकाप्राप्तौ सन्दिहानो वदति–

प्रणतजनपारिजातवल्लीं भवानीं प्रसादयामि
गत्वा गौरिगृहानेको मोक्ष्ये वा निष्फलानसून्॥

पञ्चमाङ्कस्य विष्कम्भे कश्चन विप्रवेषधारी राक्षसः प्रविशति वर्णयति च राक्षसजन्म

निर्वर्त्यन्ते नृमांसैर्निगरणविधयः पीयते रक्तसीधुः
स्वेच्छासम्भोगसौख्यं भवति हठहृतैरन्यदारैरुदारैः।
वैतानीनां क्रियाणां विमथनमधिकं जायते दृष्टिवृद्ध्यै।
केन स्वच्छन्दहृद्यं न भवति तदिदं राक्षसं जन्म तुष्ट्यै॥

स वदति—'आदिष्टोऽस्मि प्रियसखेन विकटग्रीवेण। सन्ति मे त्रीणि विशिष्टानि वस्तूनि। एकं सकलमूर्छाहरं रत्नम्, अपरं चित्रमयं कन्यारत्नं, अन्यद्दिव्याम्बरञ्चेति। पतितानि प्रमादेन लङ्कापुरगमनसम्भ्रमाकुलेन मया मन्निवास

एव वटमूले। कथितञ्च लङ्कापुरवास्तव्यैर्दैवज्ञैर्यदेतद्वस्तुत्रयनाशादर्वागल्पीय एव ममायुरिति'। 'तानित्रीण्यपि वस्तूनि अत्रैव वर्तन्ते' इति विकटग्रीवाय कथयितुं गच्छति स राक्षसः।

तदनन्तरं मल्लिकाप्राप्तौ निराशो मारुतो निशीथे गौरीदेवालये अहंपूर्विकया प्रणामार्थमागतानां सुगणा संघ पश्यति वर्णयति च तेषु कांश्चित तथाहि प्रथमं तावन्महिषाधिरूढो यमः—

प्रादुर्भाद्दुरितहतात्मनां जनानां
प्रायश्चित्त्युपकृतये प्रयुक्तदण्डः।
देवस्य प्रियतनयः सरोजबन्धो.
केन स्यात्पितृपतिरेष नो नमस्यः॥

ततोऽन्येषां तत्र समुपस्थितानां वरुणवायुकुबेरादीनां वर्णनानन्तरं मारुतस्तत्रागतं भगवन्तं शिव वर्णयति—

देवोऽप्येष पुरान्तको नयनयोरध्वानमाढौकते
दूरादेव सरैर्विमुक्तसरणिर्दुग्धेन्दुकुन्दच्छविः।
उच्चैरुल्लसदौपवाह्यवृषभस्कन्धानुवृत्तिस्खल-
च्चूडावल्गितसिद्धसिन्धुलहरीझाङ्कारकोलाहलम्॥

सम्पति हि

नाथे समेयुषि समीपमुपोढहर्षं
उत्थाय देव्यपि कुचस्खलितोत्तरीया।
प्रायः ससम्भ्रमतया करदत्तहस्ता
प्रत्युद्गमिष्यति शनैः कतिचित्पदानि॥

देवीप्रणामानन्तरं विनष्टाः सर्वे सुरादयः। पुनरपि अवशिष्टं भीषणं तिमिरम्। ततो देवीपुरतो गत्वा मारुतः स्वखड्गं कण्ठे न्यस्य तां वदति—

पश्याम्बिके प्रणतकामितकल्पवल्लि
सा मल्लिका प्रियतमा यदि दुर्लभा स्यात्।
अस्तु स्वहस्तकरवालविदूनकण्ठं
वक्त्रं ममाद्य पदयोस्तव रक्तपद्मम्॥

तस्मिन्नेव क्षणे स आकाशे मल्लिकाया राक्षसहस्तात्स्वरक्षणार्थमार्तमालापं शृणोति। यावत्स ऊर्ध्वं पश्यति तावद्राक्षसहस्तान्निःसृष्टामधः पतन्तीं मल्लिकामवलोकयति। प्रसारितकरश्च तां गृह्णाति। ततः स तं दुष्टराक्षसं यावत्स्वखड्गेन निहन्ति तावत्तच्छरीरात्कश्चन दिव्यपुरुष उत्पतति प्रणमति च मारुतम्। अत्रान्तरे मल्लिकाया अन्वेषणार्थमितस्ततः परिभ्रमन्तः वीरपुरुषा

मन्दाकिनी विश्वावसुप्रभृतिसम्बन्धिनश्च तत्रायान्ति मारुतं च सम्भावयन्ति।

मन्दाकिनीविरचितेन प्रबन्धेन षष्ठाङ्के मल्लिकाया माधवस्य च विश्वावसुभवनसन्निधे लतामण्डपे भवति गान्धर्वविवाहः। मन्दाकिनी तत्रागत्य तौ स्वाशीर्भिरभिनन्दति। उभावपि चोपदिशति। मल्लिकां हस्ते गृहीत्वा सा वदति मारुतम्।

एकापत्यं हि सेयं जनयितुरसवो बान्धवानां तदस्याम्
मा स्यात्कालान्तरे ते स्वयमयमुदितः स्नेहबन्धो द्रसीयान्॥

मल्लिकामपि सैवमुपदिशति—

शुश्रूषामनुरुन्धती गुरुजने वाक्ये ननान्दुः स्थिता
दाक्षिण्यैकपरायणा परिजने स्निग्धा सपत्नीष्वपि।
सन्नद्धातिथिसत्कृतौ गृहभरे नैस्तन्द्यूनमाबिभ्रती
वत्से किम्बहुना भजस्व कुशलं भर्तुः प्रिये जाग्रती॥

अयमुपदेशो ननु कालिदासस्य 'शुश्रूषस्व गुरून्'इति श्लोकमनुकरोति किन्त्वत्र सोऽत्यन्तमनुचितः 'स्निग्धा सपत्नीष्वपि' इत्यस्मिन्नंशे। यतस्तदा न मारुतस्यान्याः पत्न्य आसन्।

तदनन्तरं मारुतः स्वहृतराक्षसोत्थं माकन्दनामानं दिव्यपुरुषं ध्यानेन सन्निधापयति। स च माकन्दो मल्लिकावेषं धारयित्वा शम्बरकवञ्चनाय विवाहस्थलमुपयाति। कलकण्ठश्च कौषायवस्त्राणि परिधाय मन्दाकिनीवेशं धारयति। सर्वे ते विवाहस्थलं गच्छन्ति।

सप्तमाङ्कारम्भे प्रवेशकद्वयेन जानीमो यत् मल्लिकावेशधारिणा तेन दिव्यपुरुषेण सह निर्वृत्तः शम्बरकस्य शिष्यः कलापिङ्गोऽपि रमयन्तिकावेशधारिणा भ्रमरकेण सह विवाहविधिमनुष्ठितवान्। तावपि शयनगृहं प्रस्थितौ।

तदनन्तरं रमयन्तिका कालिन्दी - पुरतः - कलकण्ठ विषयं स्वानुरागस्वप्नसंभोगं च वर्णयति तत्प्राप्तौ निराशीभूय वाक्यं विसृजति। तस्मिन्नेव क्षणे कलकण्ठः मन्दाकिनीवेशार्थं धारितानि कौषायवस्त्राण्यपि अवक्षिप्य तस्या हस्तमवलम्बते तां वदति च—

चरणकमलदासस्त्वेष संकल्पसङ्गे
सुमुखि यमाभिधत्से त्वं बलात्कारधूर्तम्।
प्रसभविधृततर्षः पीडयत्यात्मनैव
द्विरद इव सरोजं पाणिमापाटलं ते॥

तस्मिन्नेव क्षणे नेपथ्ये शम्बरकस्यार्तः स्वरः श्रूयते। 'स हतोऽस्मि

मन्दभागः। हन्त मुधाकामुकेन मया मल्लिकेति कश्चन भूत एव परिणीतः। तदनन्तरं नेपथ्ये जनोक्तिः श्रूयते।

व्रीडात्केलिगृहं कथञ्चन वधूर्यातात्र या सा पतिं
खट्वाश्रृङ्खलया निबध्य पदयोः कृष्ट्वा नभस्युत्थिता।
कष्टं कष्टममुं तमालविटपे बद्ध्वा तिरोऽभूत्क्षणात
जामाता यमधोमुखो बत रुदन् वेतालमालम्बते॥

रमयन्तिकावेषधरो भ्रमरकोऽपि शम्बरकशिष्यकलापिञ्जस्य मुखं मष्यालिप्तं कृत्वा तं शय्यागृहान्निष्कासयति।

अष्टमाङ्कारम्भे मन्दाकिनी-भाषणाज्ज्ञायते यत् मल्लिकाया मूर्छाहरः सीमन्तमणिः राक्षसाहरणप्रसङ्गे भ्रष्ट आसीत् स केनचित् राक्षसेनापवाहितः। किन्तु द्रविडेषु काञ्चीपुर-सविधेन धावन् स राक्षसो भगवत्याः कामाक्षीदेव्याः किंकरेण निहत आच्छिन्नश्च स मणिः। तन्मणिप्राप्त्यर्थं मन्दाकिनी मल्लिकां स्वयोगप्रभावेण काञ्चीपुरं नेतुं निश्चिनोति।

तदनन्तरं मारुतः प्रवेशयति मल्लिकागमनं चातीवोत्कण्ठयोत्पश्यन् इतस्तत. परिक्रामति। इन्दुमुद्दिश्य स वदति—

अभिलषसि यदीन्दो वक्त्रलक्ष्मा मृगाक्ष्याः
पुनरपि सकृदब्धौ मज्ज संक्षालयाङ्कम्।
सुविमलमथ बिम्बं पारिजातस्य गन्धैः
सुरभय वद नो चेत्त्वं क्व तस्या मुखं क्व॥

पश्चादागच्छन्तीं मल्लिकां स वर्णयति—

इयमभिसरत्यारादङ्गैरनङ्गहृतैः प्रिया
चकितचकितां विन्यस्यन्तीं दृशं शशलाञ्छने।
अलघु विपुलश्रोणीभारालसालसचंक्रम-
श्रमसमुदितस्वेदच्छेदाभिराममुखाम्बुजा॥

ततः स पर्यन्तभाजो लतायाः पल्लवैस्तल्पं कल्पयित्वा तां तत्र नीत्वा तदधरपानं कर्तुं यावत् प्रक्रमते तावत् सा मूर्च्छां प्राप्नोति। ततश्च परतो वृत्तं वर्णयति मारुतः—

तां पेतुषीं लुलितविह्वलगात्रमङ्के
हा हा किमेतदिति यावदहं बिभर्मि।
तावद्विमोहकरणं मम नैव जाने
भूतेन केनचिदपह्रियते स्म बाला॥

तद्वार्तया सर्वे दुःखिता भवन्ति गच्छन्ति च भगवत्यै मन्दाकिन्यै तन्निवेदयितुम् ।

नवमाङ्के मल्लिकादर्शनेन शोकाविष्टौ मारुतकलकण्ठौ इतस्तत आहिण्डतः । मारुत आत्मनो विकलामवस्थां वर्णयति—

किमपि करणद्वाराण्यन्धं तमः पिदधाति मे
भ्रमति हृदयं मोहाविष्टं विषीदति जीवितम् ।
अहह सहसा सर्वाङ्गीणः प्रसर्पति कश्चन
प्रलयशिखिना तुल्यस्तापः सखे करवाणि किम् ।।

अस्मिन् श्लोके भवभूतेः 'हा हा देवि स्फुटति हृदयम्' इत्यादिश्लोकस्यानुकृतिः स्पष्टैव । मारुत उपवनस्थान् मृगपक्षिणो लतादींश्च स्वप्रियोदन्तं पृच्छन् परिक्रामति—

करिपते कथय क्व मम प्रिया
यदि दृशोत्सव मार्गमुपागता ।
गिरितटीषु झरीषु वनीषु वा
कुररिकेव बतार्तविलापिनी ।।

मल्लिकां स्वर्गतां संभाव्य स आदिशति—

विपुलजघने मन्दं याहि क्षणं त्रिदशालये
त्रिदशसरितः कूले यावन्मयाप्यनु धाव्यते ।
पदनलिनयोः केलीयानप्रकारमधीयतां
विमललहरीलोला वेधोरथा द्विजजातयः ।।

नवमालिका रमयन्तिका कालिन्दी च तत्रागत्य शोकालापं कुर्वन्ति । मारुतो मूर्छां गच्छति कृतेष्वपि विविधप्रयत्नेषु न संज्ञां लभते । ततः कलकण्ठो भृगुपतनेन स्वजीवितत्यागे उद्युक्तो भवति । तस्मिन्नेव क्षणे शिखामणिना भूषिता मल्लिका प्रविश्य सर्वानानन्दमग्नान् करोति । मन्दाकिनी सर्वैः सह विश्वावसुप्रभृतीनामाश्वासनाय कुसुमपुरं प्रयाति ।

दशमाङ्कारम्भे वैतालिक-घोषणाद्वयेन जानीमो यद्विविधकूटकर्मकर्ता कतिपयक्षणारोपितजामातृशब्दस्तमालविटपावलम्बी शम्बरको प्रतिनिकृत्तमन्दाकिनीशब्देन वृक्षाग्रात् त्रोटितबन्धनो द्राक मगधेभ्यः पलायितः । तच्छिष्यः कलापिङ्गोऽपि भ्रमरेण चरणेन भृशं ताडितः ।

ततः सर्वान् पटमण्डपे संमील्य मन्दाकिनी मल्लिकामारुतयोः पूर्वजन्मकथां श्रावयति । अस्ति दक्षिणस्यां दिशि अगस्त्यमुनेराश्रमोपेतो मलयगिरिः । तस्मिन एकदा मातरिश्वातीवरमणीयं वपुर्दधौ । तं दृष्टवा मन्मथशरैः पीड्य-

मानैका नागकन्या गर्भं दधौ। सद्य एवैकं बालकं सुषुवे सा। यत एक एव समयो देवतागर्भाणां धारणप्रसवयोः। सा नागकन्या पितुर्बिभ्यती लतापल्लवेषु तं बालकं निधाय तत्पालनार्थं वनदेवताः पार्श्वं च स्वधाम जगाम। समिदाहरणायागतैर्मुनिदारकैः स बाल उद्धृत्य नीतोऽगस्त्यमुनये समर्पितश्च। क्रमेण स बालो वर्द्धमानः

क्रमलोलमुग्धकरपल्लवः क्षितौ
अलिकान्तचञ्चदलिकान्तकुन्तलः।
मृदुजानुसञ्चलनमञ्जुलक्वण-
न्मणिकिङ्किणीगणमरिङ्गदङ्गणे॥

ततश्च क्रमात्—

मुहुरिभकलभानां कर्णमामोटयन्तं मृगपतिपृथुकानां पाटयन्तं सटान्तम्।
अविनय बत मा मा सत्त्वहिंसां कुरूच्चैरिति मुनिजन एनं स्नेहगर्भं व्यरौत्सीत्॥

यौवनं प्राप्तः स वायुपुत्र एकदा स्वप्ने कामपि कामनीयकनिधिं कन्यां समालोकत। प्रबुद्धः स मनसिजविशिखानां शरव्यभूतः सवयोभ्यां सखिभ्यां पृष्टः तामेवं वर्णयामास—

चूडापदे स्फुरति कोऽपि मणिर्यदंशुः
सौदामिनी भवति कैशिकनीरदस्य।
हारावली च कुचयोरिभकुम्भभासो-
र्लावण्यसिन्धुचलफेनततिद्युतिर्या॥

ततो दिने दिने परिक्षीयमाणशरीरः स एकदा आकाशे हंसान् ददर्श।

तत्रैककेन बिसकाण्डधिया खगेन
चञ्च्वा विदश्य कथमप्यपनीयमानः।
वेगाच्च्युतोऽस्य तलिमे निपपात कोऽपि
हारः शरद्विशदचन्द्रमरीचिगौरः॥

ततस्तं हारं स्वप्नदृष्टकन्यकयैव धारितं प्रत्यभिजानन् तत्कन्यान्वेषणाय स वायुपुत्रः सह सखिभ्यामम्बरपथेन कौबेरीं दिशं प्रातिष्ठत। नन्दनवने प्राप्ते तद्देवता तस्य मनोभवमोहनं रूपं दृष्ट्वा तदीयकण्ठेऽम्लानां मधुच्युतं मालां बबन्ध। ततः स गौरीगुरुं गगनचुम्बितटं प्रपेदे। तत्राम्बिकायाश्चरणं प्रणम्य स मण्डपैकदेशे स्फाटिकीं वितर्दिमध्यासीनां कामपि सिद्धयोगां संन्यासिनीं ददर्श। सा तमकथयत्। अस्त्यत्र विद्याधरामात्यस्य विश्वावसोर्लावण्यमयी कन्या यस्या हंसोऽपहृतममुं

हारं भवानुरसा संभावयति। साधुना पर्यन्तभाजि लताभवने देवीं भवानीं कन्दुकक्रीडितेनाराधयति। तया सह तत्र गतः स तां स्वप्ने दृष्टपूर्वेयमिति प्रत्यभिज्ञाय द्विगुणितमन्मथः स्वसखायाववादीत्—

झलंझलितकङ्कणं चलिततुङ्गपीनस्तनं
चलत्कुटिलकुन्तलं चपलनीलनेत्रोत्पलम्।
श्रमाम्बुलुलिताननं श्रवणपातितोत्तंसकं
निहन्ति मम मानसं न हि न हि ध्रुवं कन्दुकम्॥

सा बालाऽपि तं वायुपुत्रं दृष्ट्वा मदन-शरशरव्यतामयात्। तस्य गात्रे च मन्मथविलासजुषः कटाक्षानमुचत्। ततस्तस्यान्यतरेण सख्या हारोऽयमत्रभवत्याः हंसमुखात्पतितो गृहीतोऽस्माभिः, ऊरीक्रियतां भूयोऽपीत्युक्ते तस्याः सखी प्रत्यवदत्—हारावलीयं विराजतु महाभागस्यैव दोरन्तरे, दीयतां पुनरियं दिव्यपरिमला मालेति।

तदनन्तरं विरहानलेन दह्यमानः स चित्रफलके

तं शैलं तां सरितं तद् वल्लीसद्म तां चकोराक्षीम्।
कन्दुकखेलन-खिन्नामालिखत्कण्ठे च तां मालाम्॥

दुःसहविरहानलदह्यमानः सखिभ्यां कल्पिते मृणालतल्पे पतिताङ्गस्तामेव विद्याधरकन्यामनुस्मरन् असंजातनिद्रः कथमपि क्षपार्द्धमनयत्। तदनन्तरं समीपवर्ति क्रीडापर्वतशिखरे कस्याऽपि करुणालापमश्रृणोत्—

देवि प्रसूतभुवने भगवति भक्तानुकम्पिनि भवानि।
अन्यस्मिन् जन्मनि मे भर्ता भूयात्स मारुतकुमारः॥

ततश्च क्रीडापर्वतमारुह्य स ददर्श तां लता-वलयवेष्टितकण्ठनालाम्। तां च लतावलयं छित्वाऽमुचत्। तत्सम्भ्रमे तस्य कराच्चुतश्चित्रफलकोऽधस्तात्तरुमूले काकतालन्यायेनागतस्य सुलभमन्युनाम्नो महर्षेः शिरसि न्यपतत्। तत आबद्धभ्रुकुटीकरालवदन स मुनि आः दुरात्मन् कन्याकामुक पत मानुषीं योनिमियमपि कुलटा मानुषीभावमुपेत्य जन्मान्तरेऽपि प्रथम एव त्वत्सङ्गमे मूर्च्छात्वति शापमसृजत्। तच्छापद-रधाभ्यां ताभ्यां तत्क्षण एव विलिल्ये। तस्य सुहृदोरेकतरः तत्केलिपर्वतस्यभृगौ निपत्य सुहृद्गतां गतिमयासीत्। अन्यस्तु तं सुलभमन्युं मुनिं निर्भर्त्संयामास। तेन प्रकुपितः स मुनिः यतः सुहृत्स्नेहेन राक्षस इव व्याहरसि तेन राक्षस एव भव। अयमेव ते सुहृत् शत्रुर्भवतु' इति तं शशाप।

ततः हाहेति सम्भ्रान्तायां तस्यां वर्णिन्यां गौर्या मधुरा गीर्गगनेऽजृम्भत।

'पुत्रीयतोरपत्ये स्यातां मद्भक्तयोरिमौ भूमौ ।
तावितरेतरदत्तौ मालहारौ च महज्जौ स्ताम् ॥'

अनयोर्भविता वर्द्धमानरागः रमणीयः समागमः सा पुनर्मुनिशापप्रयुक्ता प्रथमसङ्गमे मूर्च्छा मूर्च्छाहरस्यास्य चूडामणेः स्पर्शमात्रेण शाम्यत्विति ।

तस्मिन्नेवावसरे विमानेन तत्रागतो विश्वावसुर्मार्कन्दसहितः तौ सम्भावयामास । तदैव कुसुमपुरमहाराजस्यैतन् पत्रं मारुतेन प्राप्तम् ।

विश्वानन्दमृगाङ्क वत्स भवता व्यूढाभवन्मालिका
यत् तं शम्बरकं निबध्य विटपे तत् केन न स्मर्यते ।
यच्चोवाह स विष्णुराततनयां मन्दाकिनीवेषवान्
मित्रं ते कलकण्ठ ऊर्जितमतिस्तच्चानुमोदामहे ॥

अन्ते भरतवाक्येनैतत्प्रकरणं समाप्तिमायाति—

भद्रं भजन्तु विश्वे भक्तिर्विष्णौ नृणां शिवे वास्तु
धर्मे रमन्तु भूपाः श्रीमन्तः सन्तु विद्वांसः ॥

उद्धृतेभ्य उपरितनेभ्यः श्लोकेभ्य इद मुस्पष्टमेव स्यात् यदस्य उद्दंडिकवेः संस्कृतभाषायां वृत्तप्रयोगे चासामान्यं प्रभुत्वमभवत् । किन्तु तस्य संविधानके न मौलिकत्वं दृग्गोचरीभवति । तेन काचित्कल्पनाः कालिदासाद्गृहीताः । क्वचित्तास्वनौचित्यमपि दृश्यते यथोपरि प्रदर्शितमस्माभिः । नायकनायिकयोः पूर्वजन्मवर्णनेऽनुहरत्यसौ भट्टवाणस्य । किन्तु ततोऽभ्यधिकं तस्य भवभूतेर्मालतीमाधवानुकरणं दरीदृश्यते । मालतीमाधववदस्मिन्नपि प्रकरणे वर्तते प्रेमियुगलम् । तेन च स्वेप्सितसाधने प्रयुक्ता उपाया बहुशो मालतीमाधवे प्रयुक्तैरुपायैः समाना एव । तत्प्रेमियुगलस्य साहाय्यं कुर्वती योगेश्वरी मन्दाकिनी मालतीमाधव-वर्तिकामन्दक्याः प्रतिकृतिः । अस्मिन्प्रकरणे बहवो घटनाः- -यथा मालाया अर्पणम्, चित्रफलकप्रेषणम्, हिंस्र-पशोरास्कन्दनम्, नायकोपनायकाभ्यां स्वप्रेयस्योर्जीवितसंकटादुन्मोचनं, नायकेन नायिकाप्राप्त्यर्थं चण्डिकायतने श्मशाने वा गमनं तत्र च काकतालीयन्यायेन तत्कृतं नायिकासंरक्षणम्, विवाह-प्रसंगे नायकसखेन स्त्रीवेषं गृहीत्वा प्रतिनायकस्य वञ्चनम्, नायिकायाः सहसादर्शनेन नायकसहितानां सर्वेषां शोकः, दूरस्थलाद्योगप्रभावेण नायिकायाः प्रत्यागमनमिति बहवः प्रसंगा मालतीमाधवे तथास्मिन् मल्लिकामारुते समानाः । ततश्चोद्दंडिकवेर्भवभूतेरनुकारित्वं सुस्पष्टं भवति ।

भवभूतिना रामचरितविषयके द्वे नाटके—महावीरचरितं, उत्तररामचरितं चेत्येते विरचिते । तयोरनुकरणं बहुभिः कविभिः कृतम् । तस्य तृतीयं रूपकं

प्रकरणसंज्ञं मालतीमाधवम् । तस्य संविधानकं सामाजिकम् । सन्ति नाम संस्कृत-साहित्ये बहूनि 'प्रकरणानि । किन्तु तेषां संविधानकं प्रायो मौलिकं दृश्यते । परमस्मिन् मल्लिकामारुतप्रकरणे भवभूतिरचित-मालतीमाधवस्य प्रभावः सुस्पष्टं दृश्यते । अतोऽस्य वैशिष्ट्यं संस्कृतवाङ्मयेतिहासेऽसामान्यम् ।

# काव्यगौरवे कालिदास-काव्यम्

विश्वनाथभट्टाचार्यः

काव्यं हि नाम मानवसभ्यतायाः फलमिव वृक्षस्य परमं सार्थक्यमावहति। पत्रसंभारैश्छन्नदिगन्तरालोऽपि वृक्षो यदि नामरूपसौरभ्यमधुरैः फलैर्वञ्चितः स्यान्न तर्ह्यसौ सर्वात्मना मनुजैः सादरं समाद्रियते। छायादानमात्रेण तापक्लिष्टानां पथिकानां कामं तापापनोदनं कृतवतोऽप्यस्य बन्ध्यत्वेन निराक्रियते पूर्णः परितोषोऽन्तःकरणस्य। एवमेव मानवसभ्यतापि दर्शनविज्ञान-धानुर्वेद्यादिभिर्लब्धप्रचुरोत्कर्षा कृतदिग्विजयापि काव्यलक्ष्मी प्रसादवञ्चिता न शक्ता तत्त्वतो रञ्जयितुं हृदयम्। समग्रस्य विश्वस्येतिहास एव तथ्यमेतत्प्रमाणीकुरुते। न कापि प्राचीना वार्वाचीना वा सभ्यता जगत्यस्मिन् कृतपदा संलक्ष्यते यस्याः काव्योत्कर्षो न स्यात्। ईजिप्टग्रीस–रोम–चीनादिदेशेषु सभ्यताया य उत्कर्षो दृष्टपूर्वस्तत्र कविप्रतिभावैशारद्यमेव मुख्यो हेतुः। तदेव तत्तत्सभ्यताया हृतेष्वपि तदाधारभूतेषु साम्राज्येषु, अद्यत्वेऽपि संस्मरणीयता साधकम्। न खलु भारतीया महापराक्रमस्य दिग्विजयिनोऽलिकसुन्दरस्य न वा देवकुलविध्वंसिनो महमूदस्य, न नु पुनः शाठ्यपण्डितानां निर्घृणानामांगलशासकानां स्मरन्ति परं न कोऽपि ग्रीककलाविधि परमवैष्णवं हेलिओदोरमहाशयम्, महम्मदीयं कलाविधि मुघलकालिकान् कवीन्, शेक्सपीरमिल्टन-शेली-प्रभृतींश्च कविधुरन्धरान् विस्मर्तुमीशः।

अद्य कोऽयं हेतुः कवीनां कालजयित्वस्येति निपुणं विचारणीयः प्रश्नः। कवीनामाश्रयदातारो विस्मर्यन्ते न पुनः कविपुंगवा इति तु सर्वजनविदितमेव वाल्मीकिव्यासाश्वघोषकालिदासादि-कविपरम्परा-वाहिनि भारतवर्षे। विस्मयावहमपि तथ्यमेतद् यद् यानवलम्ब्य कवीनां काव्यं स्फुरित तेऽपि रामकृष्णयुधिष्ठिरादयः काव्यप्रसादादेव मनुजानां हृदये निहितदृढपदा राजन्ते। वाल्मीकिं विना रामचन्द्रोऽपि ध्रुवं विस्मरणीयतामगमिष्यदित्यनायासं वक्तुं शक्यते। अतः किं खलु कवेर्महत्त्वबीजमिति प्रश्नो विमृश्यते।

युक्तमेवोक्तं विचारवद्भिः 'दुर्लभं मानुषं जन्मे' ति। प्राणिषु चेतनो मनुष्यः प्रशस्यः, चेतनेषु ज्ञानी श्रेयान्, ज्ञानिषु कविः श्रेष्ठः। कवीनां श्रेष्ठत्वमेव तेभ्यो-

ऽमरत्वमर्पयति। वृक्षसाम्यं सभ्यतायाः कल्पयद्भिरस्माभिरत्रापि वक्तुं शक्यते सभ्यतावृक्षस्य पत्रपल्लवसंभारस्थानीयाश्चेतना मनुष्याः, प्रसरदामोदः पुष्पोत्करो ज्ञानिनः, वर्णगन्धस्वादमयानि फलानि कवय इति। एवं चास्मदभिमतेन कवेः श्रेष्ठत्वविषये दर्शनसमुपासकैर्विद्वद्भिरसूया न प्रवर्तनीया। को नाम मूर्खो मननेन मानवजीवनस्य सार्थक्यमार्गं प्रदर्शयतो दार्शनिकान् न बहु मन्येत ? परमेतावदेवात्र विभावनीयम्—दर्शनं हि नाम तत्त्वानुसंधित्सया सदसतोः स्वरूपं निरूप्य हानोपादानबुद्धिं द्रढयति मनुजानाम्। अतश्च दर्शनस्य परमंमुद्देश्यं पार्थिव-जीवनस्य सन्मार्गप्रदर्शनमेव। तच्च प्रदर्शनं वस्तुगत्या मानवजीवनविधिं नानु-सरति। युक्तिप्रपञ्चैः साधकानामपरोक्षानुभूत्या च समुद्भासितं दर्शनमस्मादेव कारणात् न सर्वजनाभिगम्यम्। दृश्यते हि वेदान्तदर्शनेऽधिकारिणो विशिष्टं महत्त्वम्।

तथाहि तत्त्वतो हानोपादानबुद्धिर्भिन्नैव वस्तुतो हानोपादानबुद्धेः। दृश्यन्ते च तत्त्वतो हानोपादानबुद्धिप्रमापका अपि मनुष्या व्यवहारदशायां नितान्तं विपरीतकारिणः। यथाहि सर्वमेव वस्तुजातं 'आत्मनस्तु कामाय' प्रियं भवति मनुष्यस्य, तथैव तत्त्वज्ञानमपि यावत्स्वात्मगतं न भवति तावन्न तत्फलाय प्रकल्पते। स्वानुभव एव सर्वोत्तमं प्रमाणमित्यत्र कः सन्देहः। अनुभव द्वारी-कृत्य यत्किमपि मनुष्यैः प्राप्यते तदेव तस्य स्थायिने कल्याणाय।

कविरेतदेवाभिप्रैति। त्रिगुणगुम्फितां मानवप्रकृतिं स्वाभाविकैर्वैचित्र्य-सहस्रैः समुद्भास्य यज्जीवनालेख्यमसौ प्रस्तौति तद्धि सर्वतः पूर्णम्। नासौ यद् ग्राह्यं केवलं तदेव प्रदर्शयति प्रत्युत सत्त्वेन सार्धं रजस्तमसी च गुणौ तद्विकारांश्च स्वप्रतिभाया विषयीकरोति। दर्शनं केवलं सदेव प्रमाणयति काव्यं पुनः सदसती सामग्र्येण। अनेन न भ्रमितव्यं कवेः सदसद्विवेक एव नास्तीति। तस्योद्देश्यमेव भिन्नम्। जानात्येवासौ किं सत्किमसदिति, परमेतेन काव्यपाठकानां सामाजिकानां किं सिध्यते ? न हि अन्यदीयज्ञानेन भवति ज्ञानि-व्यपदेशो मनुष्याणाम्। कृत्स्नानां मानवानां गुरुरसौ तेषामेव विवेकोद्बोधार्थं यतमानो यथास्थितं मानवजीवनं प्रदर्शयति, तच्च साधारणीकरणविधिना हृदयङ्गमं सद्गुरूपदेशं विनैव सामाजिकानां हानोपादानबुद्धिमुद्बोधयति।

किं कविमात्र एवास्य महत्त्वस्याधिकारी ? नैवं वक्तुं युज्यते। परमेत-न्मूलकमेव कवीनां तारतम्यमिति ब्रूमः। गुणदृष्ट्या कविः सत्त्वप्रधानरजो-गुणवान्। सत्त्वप्राधान्येनैव रागद्वेषवियुक्तस्यास्य वर्ण्यविषयो देशकाल-बन्धन-मतिक्रामति, कविश्च क्रान्तदर्शीति व्यपदिश्यते। वाल्मीकिना सममेव अनुसर-

णीयचरितो रामभद्रः, हेयचरितो रावणश्चामरत्वं प्रापितौ । ततश्च सर्वेषां सर्वदा विवेकोद्बोधः यो हि एवं कर्तुमर्हः स एव कविर्नेतरः । अथवा स एव महाकविरित्युच्यताम् । सिध्यत्येवं दर्शनं यच्चिकीर्षति, कविस्तदेव मार्गान्तरेण सुष्ठुतरं संपादयतीति ।

इतोऽप्यधिकं विद्यते कवेर्महत्त्वसाधकं कारणान्तरम् । आनन्दमेवाभिलक्ष्य भूमौ मानवजीवनं प्रवर्तितम् । यथाहोपनिषद्—'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, आनन्दं प्रयन्त्यभिसंविशन्ति चे' त्यादि । तमेवानन्दं प्राप्तुकामा आमनोर्मनुष्याः प्रयतन्ते । इन्द्रियद्वारेण विषयभोगमुखेन यदनुभूयते तदेवानन्दं मत्वा सांसारिकैर्जनैर्निश्चिन्तैः स्थीयते । परं विषयेन्द्रिय - संयोगपरतन्त्रं यदनुभूयते न तदानन्दपदवाच्यं किन्तु सुखमेव तत् । सुखं हि अनुकूलवेदनीयं क्षणिकं स्वभावत एव द्वन्द्वचरं च । सुखं यदि प्रार्थ्यते तर्हि दुःखमप्रार्थितमपि लप्स्यते । अस्मादेव भगवदुपदेशः 'द्वन्द्वातीतो भवार्जुन' इति । सुखदुःखयोर्द्वन्द्वादूर्ध्वं विराजते स आनन्दः—

'यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ।।

एष हि आनन्दो दार्शनिकदृष्ट्या आनन्दस्वरूपादभिन्नः, न्यक्कृतेन्द्रियपारतन्त्र्योऽतश्च पूर्णतया आत्मरतिरूपः ।

इममेवानन्दं कविर्लक्ष्यीकरोति । रस एव तस्य दैवतम् । रसस्य यदभिव्यञ्जनं विलक्षणं सत्तदेव मनुष्यान् रजस्तमसोः परस्ताद् विराजमानमानन्दं स्वादयति । विगलितवेद्यान्तरो मनुष्यो रसास्वादक्षणेषु निरुपाधिक आनन्दे रमते । काव्यगतं जगत् परमार्थतोऽसद्रूपमपि कविप्रतिभाप्रसादेन स्फुरद्रूपमात्मपरभावनाविमुक्तं साधारण्येन प्रतीयते । मनुष्योऽपि रसोन्मुखः सपदि सर्वपरिच्छेदशून्यं परमानन्दं सत्त्वोद्रेकवशात् सर्वगते स्वात्मन्यनुभवति । जीवात्मनो रसास्वादकाले येयं बन्धविमुक्तिः काव्येन सम्पाद्यते तत एव काव्यस्य लोकोत्तरत्वं कवेश्च महत्त्वं महोपकारित्वं च सिध्यतः ।

(२)

यो हि स्वप्रतिभाप्रभावेण परिवर्तमानं खण्डितं मर्त्यजीवनमवलम्ब्य तदेव नित्यत्वेन, अखण्डत्वेन च संयोज्य आत्मानन्दं वितरति स एव महाकविः । असंशयमीदृशानां महाकवीनां संख्या न भूयसी । यथार्थमाह आनन्दवर्धनाचार्यपादः—'अस्मिन्नतिविचित्रकवि-परम्परावाहिनि संसारे कालिदासप्रभृतयो द्वित्राः पञ्चषा वा महाकवयः ।' स्थितेऽप्याद्ये काव्यदेवतावतारे वाल्मीकौ महाकविषु

कालिदासस्य प्रथमगणनीयत्वं ध्वनिप्रस्थान-प्रवर्तकस्थ विचारसौक्ष्म्यं प्रमाणयति। नात्र वाल्मीकिं प्रति काचनाश्रद्धा। आद्य खल्वसौ कविः काव्यविधेरुत्सभूतः। वाल्मीक्युपज्ञो हि संस्कृत-काव्यविधिः। यदि नाम स आर्षः कविर्नाभविष्यत् तर्हि कालिदासोऽपि कालिदासो नाभविष्यत्।

तथापि साम्प्रतमेव कालिदासस्य पृथग्गणनमिति ब्रूमः। लौकिकौऽयं सांसारिकः कविरार्षकाव्यपरम्परां लौकिकभूमौ प्रतिष्ठापयामास। पूर्वभाव्यपि बौद्धकविरश्वघोषः कविप्रतिभायां कालिदासातिशायी नासीदिति तु सर्वैः सहृदयैः स्वीकृतम्। केवलया कविप्रतिभया लब्धविपुलयशाः कालिदासो निःसंशयं तपःप्रभावपूतचरित्राद् वाल्मीकेरधिकां ख्यातिमर्हतीत्यपि न विस्मर्तव्यम्। यदुक्तम्—'जाते जगति वाल्मीकौ कविरित्यभिधाभवदि'ति न तत्र कस्यापि विप्रतिपत्तिः परं महाकाव्यरचयितृषु कालिदास एव प्राथम्यमर्हति। रामायणं न केवलमादिकाव्यं धर्मग्रन्थोऽपि, परं कालिदासकृतयो न धर्मग्रन्थाः, न तासां पठनेन स्वर्गप्राप्त्यादिफलश्रुतिः कल्पिता, केवलं रसास्वादमहिम्नैव तासां समादरबीजम्। नात्र मन्तव्यं रामायणे रसाभिव्यक्तिर्न भवतीति, परं तत्र ततोऽप्यधिकं पुण्यार्जनहेतुत्वं विद्यते। अतो रामायणस्योत्कर्षातिशयं स्वीकृत्यापि कालिदासकृतीनामनितरसाधारणत्वे नैव विवदनीयम्।

कवेर्महत्त्वबीजत्वेन यदस्माभिः पूर्वमुपन्यस्तं तत्सर्वं कालिदासे दृश्यत इत्यसौ कविरवश्यमेव महानिति विशेषणमर्हतीति नः पक्षः। कालिदासकाव्येषु ऋतुसंहार-मेघदूत-कुमारसंभव-रघुवंशाख्येषु सर्वत्र मानवजीवनं क्वचित्स्वत एव क्वचिच्च पौराणिकचरितान्याश्रित्य तथा विलसति यथा रसनिष्यन्देन पाठकानां हृदयमाप्लावयति। रसास्वादक्षणे च देशकालकृतबन्धनं विस्मृत्य काष्ठागतमात्मसमवेतं परमानन्दमनुभवति मनुष्यः जीवात्मनो मुक्तिरियमेव कवेर्लोकोत्तरं कर्म।

वयमत्र क्रमशः कालिदासप्रतिभाया महत्त्वबीजानि विमृशामः। आदौ तावत् कवेः सा प्रतिभा नयनगोचरीभवति या खलु नवनवोन्मेषशालिनी प्रज्ञा मता। स्पर्शमणिरिवेयं प्रतिभा यत्किञ्चन स्पृशति तदेव, महद् वा तुच्छं वा, नित्योज्ज्वलया कनकद्युत्या भासुरयति। वर्ण्यवस्तुजातं भासयन्त्यपीयं द्युतिर्वस्तुतो विषयनिरपेक्षा। सर्वं हि वस्तुजातं जगत्यस्मिन् क्षणिकं परं द्युतिरियं चिरन्तनी। न सन्ति ऋतवः कालिदासकालिकाः, न च यक्षः स्वाधिकारात् प्रमत्तः, न च हरपार्वत्यौ, न वा रघुवंशधुरन्धराः— परमेतेभ्यः सा द्युतिः समर्पिता कविराजेन यया चिरभास्वरास्ते सर्वे अमरत्वं प्रापिताः।

कालिदासप्रतिभाया यदेतदितरकविविलक्षणत्वं तन्मूलत्वेन विशेषस्य

सामान्यतापादनं वयमुत्पश्यामः। विशिष्टानामितरव्यावर्तकं वैशिष्ट्यं वर्णयन्नप्यसौ कविस्तत्र तत्रानेकसमवेतं सामान्यं तथा कौशलेन व्यंजयति यथा प्रातिस्विकोऽप्यनुभवः सर्वगतत्वेन भासते। अतश्च विच्छेदकातरस्य यक्षस्य विलापो विरहिमात्रस्याक्रन्दे, अनन्यभाजं पतिमाप्तुं पार्वत्यास्तपः सत्फलप्रेप्सुमात्रस्य ऐकान्तिकप्रयासे, रघोरौदार्यं सज्जनमात्रस्य दानबुद्धौ विपरिणम्य निध्यायतो मन्ये अनामकस्य सहृदयस्य सुभाषितं प्रवृत्तम्—

पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासा।
अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव॥

सर्वविषयग्राहिणी सर्वेषां च विषयाणां रूपान्तरसाधिका कवेरियं वाणी साधारणीकरणात्मना व्यंजनाव्यापारेण स्फुरद्रसा सर्वत्र काव्येषु सिद्धरूपा विराजते। यदुक्तमाद्येनालङ्कारिकेण दण्डिना—

लिप्ता मधुद्रवेणासन् यस्य निर्विषया गिरः।
तेनेदं वर्त्म वैदर्भं कालिदासेन शोधितम्॥

इत्येतस्य मूलं कालिदासकाव्यानां पूर्वोक्तं वैशिष्ट्यमेव मन्महे। ईदृशमेव मर्त्यजीवनं सौन्दर्यानुसन्धिन्या दृष्ट्या कालिदासः पश्यति, दर्शयति च। अथच मर्त्यं जीवनं दिव्येनानुभावेन महनीयं संपादयति। दिव्यं हि नाम जीवनं स्वतश्चारुत्वं न धत्ते, मर्त्यस्यापूर्णतापूर्तावेव सज्जीवनस्य सार्थक्यं संभवति।

शृंगारी कविः कालिदासः स्वकीयया रागवृत्त्या तदेव जगत् सृजति यन्मर्त्यमपि रसप्रसादेन अमृतम्, यत्र जीवा मर्त्या अपि दिव्यत्वमाकांक्षमाणाः, यत्र चारुताया कुत्रचिदपि लेशतो हानिर्नास्ति। पूर्णतया लौकिकमिदं जगल्लोकोत्तरेणानन्देन सर्वतः पूर्णम्। चक्षुः श्रोत्रघ्राणत्वग्रसनैः पञ्चभिरेव ज्ञानेन्द्रियैर्जगतोऽस्य रसास्वादसारं रूपं प्रतिपादयन् कालिदासः सौन्दर्योपासकानां कवीनां मूर्धन्यं भजते। कविप्रतिभयोन्मीलितेऽस्मिन् जगति यत् किंचन विद्यते स्थावरं वा जाङ्गमं वा तस्य सर्वस्य स्रष्टा कालिदास एव। अस्मिन् काव्यसंसारे सांसारिकमपि वस्तुजातं रसमयं सद् दृष्टपूर्वमपि नवरूपोद्भासितं महनीयतरं च दृश्यते। विधात्रा सृष्टा अप्येते विषयाः कवेः प्रतिभया संस्कृता वस्तुतो लोकोत्तराः। कालिदासविषयेऽपि कथयितुं शक्यते—

स पिता पितरस्तासां केवलं जन्महेतव इति।

यदेतत् कविः पुराणमपि, दृष्टपूर्वमपि, गतानुगतिकमपि वस्तुजातं नूतनत्वेन, अपूर्वत्वेन, आश्चर्यकरत्वेन च संभाव्य प्रदर्शयति तदेव वैलक्षण्यं निदर्शयितुकामस्य मन्ये ध्वनिगुरोरानन्दवर्धनस्य सिद्धान्तोऽयम्—

अपारे काव्यसंसारे कविरेव प्रजापतिः ।
यथास्मै रोचते विश्वं तथेदं परिवर्तसे ।।
शृंगारी चेत् कविः काव्ये जातं रसमयं जगत् ।
स एव वीतरागाश्चेन्नीरसं सर्वमेव तत् ।।

कविप्रजापतिः कालिदासः स्वकाव्येषु यज्जगदुन्मीलयति तत्सर्वतो रसमाधुर्येण परिप्लुतम् ।

(३)

महाकवेः कालिदासस्य सौन्दर्यानुरागिणी दृष्टिः किं पश्यतीत्यस्य किञ्चिद् विमर्शनं प्रासङ्गिकं प्रतीयते । न केवलं किमसौ पश्यति, परं किं दर्शयति–इत्यस्यापि विचारणावश्यकी । केवलेन दर्शनेन न कवीनामात्मसिद्धिः, वर्णनानुगतं दर्शनं हि खलु कवेरात्मलाभाय कल्पते । यथार्थमुक्तमाचार्येण भट्टतोतेन—

दर्शनाद् वर्णनाच्चाथ रूढा लोके कविश्रुतिः ।।
तथाहि दर्शने स्वच्छे नित्येऽप्यादिकवेर्मुनेः ।
नोदिता कविता लोके यावज्जाता न वर्णना ।।

दर्शनानुगतं वर्णनमत एव काव्ये विशेषतो निरूपणीयं भवति ।

वयमत्र रघुवंशाख्यं महाकाव्यमाश्रित्य कालिदासस्य दर्शनवर्णनयोर्वैशिष्ट्यं संक्षेपेण प्रदर्शयितुमिच्छामः । रघुवशं हि महाकाव्यं कवेरन्तिमा कृतिरिति विद्वत्संप्रदायः । यदुक्तं कैश्चिदसंपूर्णमेतत्काव्यं प्रतिभातीति न तदस्माकं मनोरमम् । राज्ञो दिलीपादाराभ्य अग्निवर्णनामानं राजानं यावद् रघुवंशस्य वर्णनपरं काव्यमिदमेकोनविंशतिसर्गात्मकानाम् । महाकाव्यस्यास्यारम्भावसाने विचिच्य काव्यस्यास्य परिपूर्णतायां संशयो न भवत्येव, कवेर्लक्ष्यमपि स्पष्टं प्रतीयते ।

आदिकवे ऋणमुररीकृत्य कालिदासो रघुवंशवर्णने सज्जोऽभवदिति स्वयं कविराह– 'तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः' इति । के च ते गुणाः प्रवृत्तिनिमित्तीभूता इति कविः कुलकेन प्राह–

'सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम् ।
आसमुद्रक्षितीशानामानाकरथवर्त्मनाम्
यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम्
यथापराधदण्डानां यथाकालप्रबोधिनाम्
त्यागाय संभृतार्थानां सत्याय मितभाषिणाम्

यशसे विजिगीषूणां प्रजायै गृहमेधिनाम्
शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम्
वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम्
रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन् ॥' (I, 5-9)

एतस्मात् स्पष्टमेतत्प्रतिभाति यदसौ कविरनुकरणीयचरितानां सर्वसद्गुणसंपन्नानामादर्श-क्षत्रियाणां स्वधर्मनिरतानां सुशासकानां काञ्चिन्मालिकां संग्रथ्य स्वकालिकजनेभ्य उपाजहार। ये केचन गुणाः सुशासके राज्ञि अपेक्ष्यन्ते सर्व एव ते रघुवंशप्रदीपेषु राजसु विराजन्ते स्म। परं किमग्निवर्णोऽप्येभिर्गुणैर्भूषित आसीत्? सर्वथैव नेति कविना प्रदर्शितम्। यैर्गुणगणै रघुवंशनृपतयः स्तुत्यचरिताः संजातास्त एव यदि कस्मिंश्चिन्न दृश्येरन् तर्हि कथमसौ तद्वंशगौरवख्यापके काव्ये स्थानं लभेत? अग्निवर्णो हि विधिविपाकात् पद्मरागाणामाकरे काचमणिरिव सूर्यवंशे जनुर्लेभे। अतः साम्प्रतमेव तद्राजवर्णन एव काव्यसमाप्तिः। क्व दिलीपो वंशप्रवर्तको राजा क्व चाग्निवर्णो वंशलोपकारी! दिलीपो हि—

'प्रजानां विनयाधानाद्रक्षणाद्भरणादपि।
स पिता पितरस्तासां केवलं जन्महेतवः॥"

अन्तिमः पुनर्वंशकलङ्को राजा सचिवेष्वधिकारं संनिवेश्य 'स्त्रीविधेयनवयौवनोऽभवत्', तथाच 'न व्यपैक्षत समुत्सुकाः प्रजाः' दर्शनं च तेन राजापसदेन 'गवाक्षविवरावलम्बिना केवलेन चरणेन कल्पितम्'। राजवंशस्याभ्युदयास्तमयौ एवमेव भवत इति कवेरन्यतमं प्रतिपिपादयिषितमित्यतोऽपि अग्निवर्णश्रृङ्गारो नाम सर्ग एव योग्यतया काव्यस्यास्यान्तिमः सर्गः।

सर्वस्यैव राजवंशस्य दृश्येतेऽभ्युदयकालः क्षयकालश्च। कालवित्तिज्ञः कालिदासो रघुवंशस्यापि तौ कालौ दर्शयति। रामचन्द्रो हि वंशोदधेरस्य मथनादुत्पन्नो राजचन्द्रः। तमेव प्राप्तुं मन्ये, अजं विहाय सर्वेऽन्ये पूर्वभाविनो राजानः पुत्रार्थं तपस्तेपिरे। दिलीपो नन्दिनीसेवया, रघुर्ब्राह्मणशीर्वादेन, दशरथश्च यज्ञप्रसादेन पुत्रान् लेभिरे। वंशानुक्रमेण संचितं तत्तपः प्रजापालनपुण्येन परिबृंहितं सत् पुत्ररूपेण रामचन्द्रं मर्यादापुरुषोत्तमं जनयामास। कवियविंत्सु राजसु स्वकाव्यप्रवृत्तिहेतुभूतान् गुणान् पश्यति तांस्तान् राज्ञो वितत्य वर्णयति। एवं च दिलीपवर्णने द्वौ सर्गौ, रघुवर्णने सर्गत्रयम्, अजार्थं सार्धत्रिसर्गाः, दशरथवर्णने सर्गद्वयम्, रामचन्द्रगुणवर्णने सर्गपञ्चकम्, कुशातिथ्योः प्रत्येकमेकः सर्गः, एकविंशती राज्ञां वर्णने वंशानुक्रमाख्य

एकः सर्गः, अग्निवर्णार्थं चैकः सर्गः काव्येऽस्मिन् दृश्यन्ते । रामं यावद्-वंशस्यास्य शुक्लः पक्षः स च तस्य कीर्तिच्छटोज्ज्वलितदिगन्तः पूर्णश्चन्द्रः, तदनु कुशातिथी कृष्णपक्षस्य प्रतिपद्द्वितीयाचन्द्रस्थानीयौ क्षीयमाणप्रभापटलौ, इतरे पुनः क्रमक्षीयमाणप्रभाः, दर्शस्थानीयश्चान्तिमोऽग्निवर्णः । परं कालवित्कविरग्निवर्णस्य निन्दितं मरणमेव चरमं न मनुते, किन्तु तत्पुत्रस्य गर्भस्थस्य सूचनया पतितस्यापि पुनरुद्धारसंभावनां प्रदर्शयति । यतो हि कविरसौ जानाति—

'कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण' इति ।

ऋतुसंहारमेघदूतयोः कविः प्राधान्येन अचेतनां प्रकृतिं वर्णयति, परं कुमारसंभवरघुवंशयोश्चेतनां प्रकृतिम् । प्रकृतिर्हि पाञ्चभौतिकी चेतनाचेतनयोः समानरूपा । चैतन्यप्रसादादेव मनुष्या अचेतनविलक्षणा महत्त्वं दधते । आत्मनस्तु कामाय सर्वः प्रियो भवतीति न्यायस्य सार्वत्रिकत्वाच्चेतनाश्चेतनेभ्य एव स्पृहयन्ति । अस्मादेव कारणात् लतापुष्पपल्लवादीनां सौन्दर्यं स्वीकृत्यापि मनुष्यगतं सौन्दर्यमधिकं कांक्षति । वन्यप्रकृतिरपि अत एवारोपितमनुष्यरूपा विशेषत आवर्जयति मानवहृदयम् । कमलं सुन्दरम्, मृगशिशुरपि सुन्दरः, परं प्रियामुखं सुन्दरतमम् । चेतनानामात्मसदृशानां वर्णनमित्यतोऽपि हेतो रघुवंशं कवेः सर्वजनप्रियं महाकाव्यम् ।

नैवं पुनर्मन्तव्यं यदेतस्मिन् प्रकृतिवर्णनस्य स्थानं नास्तीति । प्राधान्येन व्यपदेश इति नयेनास्माभिरेवमुक्तम् । वस्तुतस्तु मेघदूतेऽपि प्रकृतिरारोपितमनुष्यभावा एव हृदयं नन्दयति, परं रघुवंशे कुमारसंभवे च कविर्मानवजीवनमेव सुखदुःखमयं प्रस्तौति, प्रकृतिसौन्दर्यमत्र भूमिकारूपं धत्ते । वसिष्ठाश्रमः, गजरूपः प्रियंवदगन्धर्वः, अजप्रबोधने प्रभातकालः, दशरथस्य मृगया, रामस्य दण्डकाप्रत्यागमनम्, रामपरित्यक्ता अयोध्यानगरी – इत्येते विषयाः प्रकृतिसौन्दर्यवर्णने कालिदासस्याप्रतिमां प्रतिभामुद्घोषयन्ति । सर्वत्रैवैतानि वर्णनानि मूलकथापरिपोषकाणि रसोद्बोधपरतन्त्राणि, अकाण्डे प्रथनदोषरहितानि – इत्यतो महाकवेरौचित्यबोधोत्कर्षं स्फुटं प्रमाणयन्ति । रघुवंशप्रमाणकं हि आद्यं-महाकाव्यलक्षणमित्यस्मदभिप्रायः । यदुक्तमाचार्येण दण्डिना—

इतिहासकथोद्भूतमितरद्वा सदाश्रयम् ।
चतुर्वर्गफलोपेतं चतुरोदात्तनायकम् ॥

नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः ।
उद्यानसलिलक्रीडामधुपानरतोत्सवैः ॥
विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः ।
मन्त्रदूतप्रयाणाजिनायकाभ्युदयैरपि ॥
अलंकृतमसंक्षिप्तं रसभावनिरन्तरम् ।
सर्गैरनतिविस्तीर्णैः श्रव्यवृत्तैः सुसन्धिभिः ॥

(काव्यादर्शे १, १५–१८)

इत्यादि–तत्सर्वं रघुवंशमादर्शीकृत्य कल्पितमित्यनायासं प्रतीयते ।

यथाचेतनप्रकृतिवर्णने तथैव चेतनानां भावप्रतिपादने कालिदासस्य शक्तिः सूक्ष्मेक्षिका च विस्मयकरी । सद्गुणाकरभूतानां रघुकुलोत्तंसानां राज्ञां वर्णने कवेरियं शक्तिस्तत्र तत्र विजृम्भते । प्रजायै गृहमेधिनां रघूणामन्यतमस्य दिलीपस्य पितॄणां स्वधालोपशंकिनो यद्रूपं कविः प्रस्तौति तद्धि चिराय सत्पुत्रत्वस्य महोपमानं संजातम् । गुरोराज्ञया सपत्नीको राजा नन्दिनीसेवायामात्मानं निश्छलं योजयति । गोसेवाया ईदृशं मधुरमुदात्तं च वर्णनं काव्यान्तरेष्वत्र वान्यत्र वा दुर्लभमेव ।

'ललाटोदयमाभुग्नं पल्लवस्निग्धपाटला
बिभ्रती श्वेतरोमाङ्कं सन्ध्येव शशिनं नवम्'

इत्येवंरूपा प्रीता कामदुघा नन्दिनी

'पुरस्कृता वर्त्मनि पार्थिवेन प्रत्युद्गता पार्थिवधर्मपत्न्या
तदन्तरे सा विरराज धेनुर्दिनक्षपामध्यगतेव सन्ध्या ॥'

गोभक्तिर्हि भारतीयानामार्याणां प्रथमो धर्मः । तत्पालने नियुक्तोऽसौ राजा गोभक्तेः सार्वजनीनं कल्याणकरत्वं प्रदर्शयति । निकुम्भमित्रेण कुम्भोदरेण राज्ञो या परीक्षा कृता सापि महोदात्तत्वमस्य राजचक्रवर्तिनो व्यंजयति । यो हि संवादः सिंहदिलीपयोर्भवति सोऽपि नितरामुदात्तः । सिंहोक्तयः सर्वाः सयुक्तिकाः । न कोऽपि सामान्यो राजा गवार्थं तादृशे व्यतिकरे विचारमूढ इव 'एकातपत्रं जगतः प्रभुत्वं' हातुमुद्युञ्जीत, सिंहोपदेशं च—

'—तदक्ष कल्याणपरम्पराणां भोक्तारमूर्जस्वलमात्मदेहम्
महीतलस्पर्शनमात्रभिन्नमृद्धं हि राज्यं पदमैन्द्रमाहुः ॥—'

सपदि स्वीकुर्वीत । परं न दिलीपः सामान्यो भूपालः । क्षत्रियस्य यथार्थं स्वरूपं शिवानुचराय निवेद्य तमात्मदेहनिष्क्रयेण नन्दिनीमोचनमसौ प्रार्थयते, वक्ति च – 'किमप्यहिंस्यस्तव चेन्मतोऽहं यशःशरीरे भव मे दयालुः ।

एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु ।

प्रसङ्गेऽस्मिन् दिलीपस्य मनोगतान् भावान्निपुणं प्रतिपादितवान् कविः । सिंहेनाक्रान्तां नन्दिनीं रक्षयितुमसमर्थोऽसौ राजा 'स्वतेजोभिरदह्यतान्तर्भोगीव मन्त्रौषधिरुद्धवीर्यः' । परस्ताच्च यदा शिवप्रसादादेवं संजातमिति ज्ञातं तदैव 'प्रत्याहतास्त्रो गिरिशप्रभावादात्मन्यवज्ञां शिथिलीचकार ।' एष एव सदभिमानो वीर्यवतां स्वरूपलक्षणम् ।

एवं हि प्रतिराजवर्णनं तत्तद्राज्ञो महत्त्वनिदानं निपुणं सरसं च वर्णितवान् कविः । रघुकौत्ससंवादे तयोः संभाषणम्, ब्राह्मणस्य निर्वेदः, रघोरौदार्यपूर्णः संकल्प इत्येतत्सर्वमेव कवेर्लोकावेक्षणशक्तेरुद्भूतां निपुणतामुच्चैः प्रमाणयति । न केवलमुत्साहप्रकृतिका एव रसा यावद्रतिशोकक्रोधप्रकृतिका अपि रसाः कविना निपुणं तत्तद्विभावानुभावव्यभिचारिसंवलनेन यथास्थानं प्रतिपादिताः । सीतापरित्यागकाले शोको हि काष्ठां स्पृशति । तथापरित्यक्तां सीतां दृष्ट्वा महामुनेः कारुण्यमूर्तेर्वाल्मीकेरुक्तिरहो स्नेहविषादगम्भीरा—

उत्खातलोकत्रयकण्टकेऽपि सत्यप्रतिज्ञेऽप्यविकत्थनेऽपि ।
त्वां प्रत्यकस्मात् कलुषप्रवृत्तेरस्त्येव मन्युर्भरताग्रजे मे ॥

अत्रास्माभिरेवं प्रकारेण केवलं स्थालीपुलाकन्यायेन कतिचिदुदाहरणान्युल्लिखितानि । न केवलं रघुवंशे मेघदूतकुमारसंभवयोरपि कवेरीदृशं लोकोत्तरवर्णनानिपुणं कविकर्म प्रतिपदं बलादाकर्षति चेतः सहृदयानाम् । ऋतुसंहारेऽपि कवेरादिभूतायां कृतौ कविदृष्टेस्तद्विलक्षणत्वं विद्यत एव परं तत्र तस्याः स परिपाको न दृश्यते यः खल्वितरकाव्यत्रये प्राधान्येन स्फुरति ।

(४)

सार्वभौमोऽपि कविः स्वदेशस्यैतिह्येन समाकृष्टहृदयो भवत्येव । पूर्वमुक्तमस्माभिः काव्यं सभ्यतायाः सार्थक्यं प्रमाणयतीति । संस्कृतिसमृद्धा हि सभ्यता काव्यप्रवृत्तिं त्वरयति । सभ्यतापयसः सारभूतं नवनीतमेव संस्कृतिः । यत्किञ्चिन्महदुदात्तं च मानवानां भावनायां व्यवहारे च दृश्यते तदेव कालपर्ययेण भूखण्डविशेषेषु रूढमूलं सत् तत्क्षेत्रनिवासिनां चारित्रिकं वैशिष्ट्यं द्योतयति । संस्कृतिरेव मानवसमाजस्य जीवनाचारविध्योस्तद् वैशिष्ट्यम् ।

कवेरन्यतमं महत् कर्म संस्कृतेरुदात्तरूपस्य तथा प्रतिपादनं यथा तन्मानवमात्रस्य हृदये दृढमूलं सम्पद्येत । भारतीयः कविर्देशस्यास्य संस्कृतिं काव्यमार्गेण स्वदेशवासिभ्य उपाहरिष्यतीति स्वाभाविकमेव । कालिदासेनैतत् कर्म सुष्ठुतमं संपादितम् । सकलज्ञानमूलाधारेषु वेदेषु रामायणमहाभारतयोश्च

जीवनविधेर्यन्महत्तमं रूपं वरीवर्ति तदेव भारतीयजीवनविधेर्विशिष्टं स्वरूपम् । वर्णाश्रमविभक्तं मोक्षपरमं जीवनमेव स्वकीयेन महामहिम्ना वाल्मीकिवेद-व्यासयोर्ग्रन्थरत्नयोर्दीप्यते । कालिदासः स्वपूर्वभाविनामार्षकल्पनामण्डितमानव-जीवनानां कवीनां श्रेष्ठः शिष्योऽस्त एवास्य काव्येषु तदेव जीवनं विलसति यद्भारतभूमेश्चिरन्तनम् ।

एष एव कवेर्महिमा यदसौ भारतीयजीवनं स्वकालिकमपि वर्णवैचि-त्र्येण तथा समुद्भासयति यथा तत्कालान्तरेऽपि सर्वजनाकर्षकं विराजते। महत्त्वस्य यत्सार्वकालिकं सार्वभौमिकं च तत्त्वं तेनानुप्राणिता एव मानवाः कालिदासकाव्येषु वर्ण्यत्वं गताः । यया रीत्या मर्त्यमिदं जीवनं श्लाघ्यं दिव्यानुभावभास्वरं च संजायते सा रीतिरत्र प्रदर्शिता । कविवर्णिताः सर्व एव मनुष्याः स्वस्वकर्तव्यपालनेन, धर्मार्थकामानां यथास्वं विभज्य सेवनेन, मोक्षप्राप्तिसत्प्रयासेन च ऐहलौकिकं पारलौकिकं चाभ्युदयं भजन्तो दृश्यन्ते। ऐहलौकिकं जीवनमनुपेक्ष्यापि मनुष्यः कथं दिव्यानुभावसंस्पर्शेन तत्सार्थकं कर्तुं प्रभवतीत्येतस्य धर्मशास्त्रसंगत एव मार्गः कविना रसपेशलया रीत्या समुन्मीलितः। कालविशेषस्य सर्वमेव महत्तमं वस्तुजातं कालिदासस्य काव्येषु चिरकालिकं सौन्दर्यमण्डितं च स्वरूपं धत्ते – इत्येतदेव कवेः कालिदासस्य तत्काव्यानां च कालविजयित्वे हेतुः ।

# मेघदूतसमुन्मेषः

डा० भास्कराचार्यः त्रिपाठी

कमनीयकाव्यकाननकेसरी कविताविलासः कालिदासः सहृदयानां हृदय-व्यूहमान्दोलयन् भूयसा पूज्यमानः साहित्यजगति विजयते । यानि यानि कविवरेण्येन काव्यानि निरमायिषत, प्रतिनिधिभूतानि सम्पृक्तवागर्थसंवलितानि तानि सम्प्रत्यपि कविभिरुपजीव्यन्ते चर्व्यन्ते च यशोमरीचिकया सर्वं चतुरसूरिचक्रवालैः । अथ को हेतुः यत्संस्कृते पुरातनकालिदासः आङ्ग्ले पुराणः शेक्सपियरः, प्राचीनहिन्द्यां प्राग्भवः तुलसी, अर्वाचीनहिन्द्यां च प्रथमः प्रसादकविरेव श्रेष्ठप्रतिनिधयो भवन्ति ? मन्ये, भाषायाः जीवनस्य च प्रथमयौवनोद्भेदसम्मर्दं नान्यः कश्चिदुन्मादः पराजयते । अतएव अग्रगण्या कीर्तिः ऋतुसंहारः, आदिमं दूतखण्डकाव्यं मेघदूतम्, आदिममहाकाव्ये कुमारसम्भव-रघुवंशौ आदिप्रौढनाटकानि च शाकुन्तलपुरस्सराणि सर्वाणि कालिदासमेव कविकुलगुरुपदवीमारोपयन्ति ।

यथा ऋतुषु मन्दं माकन्दमाधुरीधुरीणो वसन्तः प्रविशति तथैव कवि-पुङ्गवस्यापि चेतसि विरहविजृम्भामयी कापि सुकुमारमेघदूतरूपा कल्पनाकलिका समुन्मिमेष । सुविदितमेव विदुषां यद् ऋग्वेदे पणीन् प्रति सरमा सन्देश-वाहिनी प्रहिता । वाल्मीकिरामायणे सीतां प्रति हनुमान्, महाभारते दमयन्तीं प्रति राजहंसः, श्रीमद्भागवते च कृष्णपार्श्वे रुक्मिणीप्रणयदूतो द्विजराट् विसृष्टः । तेषामेव सरणिः कविशिरोमणिना मेघदूतेऽनुसृता स्यात् । कतिपये पूर्वप्रभावाः विशेषतः सीताहनुमद्वृत्तान्तेभ्यः अवोलिखिताः स्युः ।

भासस्याभिषेकनाटके हनुमानशोकवनिकायां प्रथमसम्बोधने प्राह – 'जयत्यविधवा' । मेघदूतेऽपि प्रथमसन्देशवाक्यं 'भर्तुर्मित्रं प्रियमविधवे विद्धि मामम्बुवाहमित्यस्ति । पुनश्च 'इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा' यक्षी समपेक्षिताऽऽस्ते । कालिदासेन यक्षो जनकतनयास्नानपुण्योदकेष्वेव वसतिं कुर्वाणो वर्णितः । व्योममार्गोत्पाती मेघो हनुमत्तुल्यतामेव स्वीकरोति । वाल्मीकिरामायणे पवनात्मजो विश्रान्त्यै मैनाकपर्वतमधिश्रियत् किष्किन्धा-

काण्डवर्त्तिनि वार्षुके वातावरणे च – 'समुद्वहन्तः सलिलातिभारं बलाकिनो वारिधरानदन्तः, महत्सुश्रृङ्गेषु महीधराणां विश्रम्य विश्रम्य पुनः प्रयान्ति ।' तथैव मेघदूतेऽपि 'खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्ता'ऽस्ति मेघः । वाल्मीकिर्वक्ति 'नभो मेघैः संवृतं गिरिसन्निभैः ।' कालिदासेनापि च 'अद्रेः श्रृङ्गं हरति पवनः किं स्विदित्युन्मुखीभिः' सिद्धाङ्गनाभिः शंक्यमानो वारिदः प्रादर्शि । परम्परायां लङ्काप्रवेशकाले लघुरूपमापद्यते प्राभञ्जनिः । तथैव मेघोऽपीतः प्राबोधि–'गत्वा सद्यः कलभतनुतां शीघ्रसम्पातहेतोः क्रीडाशैले प्रथमकथिते रम्यसानौ निषण्णः' इति । सीतायाश्चूडामणेरभिज्ञानमिव यक्षोऽप्याशंसते– 'साभिज्ञानप्रहितकुशलैस्तद्वचोभिर्ममापि, प्रातः कुन्दप्रसवशिथिलं जीवितं धारयेथाः ।'

सादृश्यैरेभिर्विद्वांसो हनुमद्वृत्तान्तमेव मेघदूतोपजीव्यमाम्नासिषुः । किन्तु विदाङ्कुर्वन्तु कुड्मलितलोचना मनीषिणः—क्व पटुकरणवन्तो हनुमदादयो दूताः क्व च धूमज्योतिः सलिलमरुतां सन्निपातो मेघः ? कीदृशी भावना-सीमा सुकोमलोन्मादिनो विरहरागस्य । अतः मन्ये सन्देशवाहिता वारिदस्य हनुमत्तुल्याऽभूत् किन्तु कालिदासकल्पनांकुरणं वाल्मीकेः प्रसङ्गान्तरादेव स्यात् । तदितः प्रस्तूयते । उदन्वन्तमुत्तीर्य रुरोद विरही रामचन्द्रः

'शोकश्च किल कालेन गच्छता ह्यपगच्छति,
मम चापश्यतः कान्तामहन्यहनि वर्द्धते ।
न मे दुखं प्रिया दूरे न मे दुखं हृतेति वा,
एतदेवानुशोचामि वयोऽस्या ह्यतिवर्त्तते ।
वाहि वात यतः कान्ता तं स्पृष्ट्वा मामपि स्पृश,
त्वयि मे गात्रसंस्पर्शश्चन्द्रे दृष्टिसमागमः ।
कदा नु खलु मां साध्वी सीता सुरसुतोपमा,
सोत्कण्ठा कण्ठमालम्ब्य मोक्ष्यत्यानन्दजं पयः ।।

भावश्चायमनूदितो यथा प्रसङ्गं कवीश्वरेण—

आलिङ्ग्यन्ते गुणवति मया ते तुषाराद्रिवाताः,
पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ।।'

यथा रामो वातं प्रार्थयते तथैव यक्षः पयोदं ववन्दे । मेघस्तु कामरूपः । स्वेच्छा-रूपधारी । कामोद्दीपयितेति बुध्यतामधःपंक्तिध्वनिः—

'सन्तप्तानां त्वमसि शरणं, तत्पयोद ! प्रियायाः,
सन्देशं मे हर धनपतिक्रोधविश्लेषितस्य ।'

कामोद्दीपके दूतकर्मारोपः तुल्यमेव सन्देशकाव्यकर्तृभ्यां कालिदासघटकर्पराभ्यां

कृतः, तथाहि—

'मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः,
कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ।'

इति मेघदूते यक्षेण, घटकर्परकाव्ये च 'निचितं खमुपेत्य नीरदैः, प्रियहीनाहृदयावनीरदैः ।१।', प्रोषितप्रमदयेदमुच्यते सन्देशवाक्यम्—'निर्गतोऽसि शठ ! मासि माधवे, नोपयासि शयितेऽपि माधवे ।२१।'

कालिदासस्यैव रीतिमनुसृत्य पश्चात् पञ्चाशत्प्रायसंख्याकानि दूतखण्ड-काव्यानि रचितानि, येषामधिकांश - समुद्गमो जैनवंगरामकथासम्प्रदायेभ्यो बभूव । नेमिचन्द्रपान्थपवनादिदूतपरम्परायाम् आधुनिककविः मालवमयूरपत्रिका-सम्पादयिता जूतादूतमपि व्यरचत् । एषा स्नेहमेदुरा विरहसन्दिष्टिः संस्कृत-हिन्दीकृष्णकाव्येऽपि उद्धवसन्देश - रूपेण, भ्रमरगीतमाध्यमेन, यशोदातः पान्थ-सन्देशरूपेण च निबद्धा । यथा भोलानाथकविकृते पान्थदूते गोपिका काचित्—'कृष्णं तज्जलनीलपेशलतनुं स्मृत्वापतन्मूच्छिता ।३।' तथैव रत्नाकरस्यापि हिन्दी-कवेः कृष्णो राधाधम्मिल्लविधुरितं सुगन्धि कह्लारमाघ्राय मूर्छाच्छन्नो भवति ।

वस्तुतोऽथ प्रकृतिप्रेमप्रतिभाविशेषादयो हि कालिदासस्य कविचक्रचक्रवर्त्ति-गुणाः ये समग्रनैपुणीसंवलनया मेघदूतं मूर्ध्नि साहित्यस्य व्यदधुः प्रकृतेः तल-प्रशंसकोऽयं कवीश्वरः । न नागरी कृत्रिमता यथार्थमृष्टिसारस्यमाप्नोति इति मन्वानोऽयमभिज्ञानशकुन्तले प्राह—'दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ।' मध्येऽरण्यानि स्वैरं जरीजृम्भमाणा मृदुलतान्ता लतान्ताः यां सौन्दर्यभरभरितां विभां बिभ्रति, न तामिमाः नलप्रणालिकासिक्ताः चञ्चत्कर्त्तरीकर्त्तननियमिता नागरवाटिकाव्रततयः स्प्रष्टुमपि शक्ताः । क्व कृत्रिमधूपागुरुगन्धीनि शुष्ककुट्टिमानि क्व चाधिमेघदूतं वर्षाहेतुको दग्धारण्येषु सन्तप्तार्द्रभूमेः सद्यःसीरोत्कषणसम्भवो नासिकाप्यायी सुगन्धः—

दग्धारण्येष्वधिकसुरभिं गन्धमाघ्राय चोर्व्याः,
सारङ्गास्ते जललवमुचः सूचयिष्यन्ति मार्गम् ।'

सर्वातिशायिप्रतिभया कालिदास एव जानाति म्लायत्कान्ति समुदयदनङ्गानां दयनीयदयितानां वैरहीम् । 'उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणां, मद्-गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा' इति विरहिणीनां गुप्तमनोविज्ञानं कथं सुष्ठु प्रकटितमस्ति । शकुनसमये सर्वैः कविभिः नेत्रबाह्वोः वर्ण्यते स्फुरणं, किन्तु धन्यः सूक्ष्मदर्शी कालिदासः यस्य कामक्षीबाया यक्षपत्न्याः शकुनायिता मसृणा श्रोणी पुस्फोर ।

'सम्भोगान्ते मम समुचितो हस्तसंवाहनानां,
यास्यत्यूरुः सरसकदलीस्तम्भगौरश्चलत्वम् ।

कृतार्थाः संस्कृतरसज्ञा ये 'मेघे माघे गतं वय' इति कथयन्तो मस्तिष्क-बुभुक्षायै माघकाव्यं हृत्पिपासायै च मेघदूतमनुशीलयन्ति । विश्वस्मिन्नपि निखिले-ऽमेरिकाँऽऽग्लजर्मनलैटिनचीनतिब्बतसिंहलानां साहित्यमाधुरीमधुव्रता विद्वांसोऽनूद्य मेघदूतमास्वादयन्ति । एतामेव महाकवि - कालिदासकृतिं मोनफ्रेचमहोदयो विश्वस्य सर्वश्रेष्ठां कृतिमाह ।

# जयपुरीय-शतक-काव्य-परम्परा

प्रभाकर शास्त्री

'कति सन्ति शतककाव्यानि जयपुरीयैः विद्वद्भिः संलिखितानि'-'कदा चास्याः शतकपरम्परायाः प्रारम्भ'-इति प्रश्नद्वये समुपस्थिते क्रमेणोत्तरमुपस्थापयिष्यते। जयपुरनगरस्य संस्थापनात् पूर्वमपि लिखितानि द्वित्राणि शतककाव्यानि। यद्यपि तेषां काव्यानां श्लोकसंख्या शतोत्तरास्ति, तथापि तेषां शतककाव्येष्वेवेव परिगणनं विधीयते विद्वद्भिः। एवं काव्यानामेकविंशतिः प्राप्यते, यस्या महत्त्वपूर्णं योगदानं स्वीक्रियते जयपुरस्य संस्कृतसाहित्येतिहासे। तेषां परिगणनं तावत् क्रियते—

| संख्या | शतकनाम | रचयिता |
|---|---|---|
| १ | भावविलासः | रुद्रन्यायवाचस्पतिः |
| २ | राजरीतिनिरूपणम् | दलपतिरायः |
| ३ | सौन्दर्यलहरी | भट्टः शिवानन्दोगोस्वामी |
| ४ | शृंगारशतकम् | भट्टो जनार्दनो गोस्वामी |
| ५ | वैराग्यशतकम् | " |
| ६ | सुन्दरीस्तवराजः | कविकलानिधिः श्रीकृष्णभट्टः |
| ७ | अभिलाषशतकम् | केवलरामो ज्योतिषरायः |
| ८ | माधवसिंहार्याशतकम् | श्रीश्यामसुन्दरो लट्टूपाख्यः |
| ९ | श्रीकृष्णलीलामृतम् | कविभोलानाथः |
| १० | संस्कृत श्लोकशतकसंग्रहः | श्रीनारायणो भट्टः पर्वणीकरः |
| ११ | काव्यविभूषणं शतकम् | " |
| १२ | वसन्तशतकम् | सदाशिवः शास्त्री |
| १३ | गोपालशतकम् | " |
| १४ | रामसौभाग्यशतकम् | दाधीचो गोपीनाथः |
| १५ | आर्यालंकारशतकम् | श्रीकृष्णरामो भट्टः (राजवैद्यः) |
| १६ | सारशतकम् | " |

| | | |
|---|---|---|
| १७ | पलाण्डुराजशतकम् | श्रीकृष्णरामो भट्टः |
| १८ | लोचनोल्लोसः | श्रीहरिवल्लभो भट्टः (कविमल्लः) |
| १९ | गौर्यालंकाराः | ,, |
| २० | कान्तावक्षोजशतोक्तयः | ,, |
| २१ | अन्योक्तिशतकम् | श्रीहरिशास्त्री दाधीचः |

## भावविलास काव्यम्

महाराजस्य माधवसिंहस्य (प्रथम) मानसिंहानुजस्य परतः महाराजो भावसिंहो राजधानीमम्बापुरीं शशास । श्रीमतः सेवायां सभासद्रूपेणासीत् 'रुद्रन्यायवाचस्पतिनामा वंगदेशीयो विद्वान् । महाकवेरस्य पितुर्नाम 'विद्याविलास' इति विश्रुतम् । भावविलासस्य समाप्तौ पद्यमिदं सूचयति किमपि परिचयादिकम्—

"विद्याविलासपुत्रस्य न्यायवाचस्पतेरियम् ।
काव्यालापविदग्धानां मुदं निर्मातु निर्मितिः ।।" १३६

भाव-विलासात्मकं काव्यमिदं मुक्तककाव्यकोटौ गण्यते विद्वद्भिः । काव्येऽस्मिन् महाराजस्य भावसिंहस्य प्रशंसा १३६ श्लोकै वर्णिता महाकवेः काव्यशास्त्रीयां विद्वत्तां प्रकटीकरोति । हिन्द्यां सुप्रसिद्धस्य महाकवेः सूरदासस्य नन्ददासस्य वा "भ्रमरगीतस्य" छाया अमुष्मादेव काव्याद् गृहीता स्यादित्येवं प्रतिभाति । अन्योक्त्यलंकारस्य प्राचुर्यं दर्शनीयमिति मत्वा पद्यमेकंमुदाह्रियते—

"पीतमत्र मधु यापिता क्षपा भृंग ! सर्वमचिरेण विस्मृतम् ।
हीयमानसुषमां हिमागमे पद्मिनीं यदिह नावलोकसे ।।" ४२

न केवलं भ्रमरमुद्दिश्यैव कथयति कविः, परं हंसं, मेघं, सामान्यपुरुषान् प्रति निगदितं कविना । कविः स्वयं स्वीकरोति काव्यस्यास्य 'अन्योक्तिमयत्वम्' । यथोक्तं तेन तत्रैव—

"अन्यान्यदेश-विनिवेशविदग्ध-बुद्धिः श्रीभावसिंह-नरसिंहनियोगयोगात् ।
संपादितो विविधभावविकासभाजां प्रीत्यै भृशं भवतु भावविलास एषः ।।" १३४

यद्यपि वर्तन्तेऽस्मिन् शताधिकानि पद्यानि, परं काव्यमिदं शतकश्रेण्यामेव परिगण्यते विपश्चिद्भिः । प्रकाशितं चेदं काव्यमालाया द्वितीये गुच्छके निर्णयसागरयन्त्रालय—बम्बईतः ।

## राजरीतिनिरुपणम्

राज्ञो भावसिंहस्य पौत्रस्य मिर्जाराजेतिविरुदस्य राज्ञो रामसिंहस्य (प्रथम) सभायामासन् बहवो विद्वांसः[1] । कृतेरस्याः प्रणेता श्रीदलपतरायनामा कोऽपि विद्वान्, यस्य च परिचयादिकं न ज्ञातमद्यावधि । कृतिरियं केवलं प्रकटीकरोति यदयं महाभागः मुगलशासकैः सार्द्धमुत्राम । ततश्च केनापि कारणेन राज्ञो रामसिंहस्य सभामलंचकार ।

राजस्थान-प्राच्य-विद्याप्रतिष्ठानस्य प्रधानकार्यालये जोधपुरनगरे विद्यमानस्य श्रीमतः लक्ष्मीनारायणगोस्वामिनः सविधे मया दृष्टः 'गुटकाख्यः' प्राचीन-हस्तलेखानां संग्रहात्मको ग्रन्थविशेषः । श्रीदलपतिरायेण रचिता कृतिद्वयी प्राप्यते तत्र–(१) चकत्ता पातशाही की परम्परा (२) राजरीतिनिरूपणञ्च । कविना भूमिकायां लिखितं यन्मया ये द्वे रचने प्रस्तुते, तयोः सामग्री "अदाबस्सहलतीन" "मिफ्ताहुज्जबाबिन"–इतिनामकाभ्यां यवनग्रन्थाभ्यामुद्धृता–तस्याञ्च परिवर्तनादिकं विधाय संस्कृतमाश्रित्य रचितमिदं राजरीति-निरूपणाख्यं शतकमिति[2] । केचन श्लोकाः प्रस्तूयन्तेऽत्र–

गोपीवल्लभ – पादाब्जद्वन्द्वमाधाय चेतसि ।
वच्मि राजविधिं म्लेच्छपरिभाषानुकल्पितम् ।। १
क्वचिद्रूढेः क्वचित् कोशात् क्वचित् स्वानुभवात् पुनः ।
नामलक्षण – संस्थेयमधिकाराधिकारिणम् ।। २

यथा–'बजीर' 'प्रधान' 'दीवान' इत्यस्य—

"आयद्वाराधिकाराः स्युर्यदायत्ताः महीभुजः ।
अमात्यं मन्त्रिणं विद्धि प्रधानं सचिवं हि तत् ।।" ४

---

१ अवलोकनीयम् विषयमिममवलम्ब्य मया हिन्द्यां लिखितो लेखः पिलानीतः प्रकाशितायां "मरु भारती" त्रैमा[illegible] ( १३।१ अप्रैल १९६५ ) प्रकाशितः ।

२ "श्रीदलपतिराय और उमकी रचनायें" शीर्षकेण लिखितो लेखः (हिन्द्यां) "समन्तभद्राश्रम" वीर सेवा मन्दिरस्य द्वैमासिके मुखपत्रे "अनेकान्त" इत्याख्ये अगस्त १९६४ अंके प्रकाशितो बभूव । सोऽपि २१ दरियागंज दिल्ली ६ संकेते लब्धुं शक्यत-इति ।

'नाजिर'—

"योऽवरोधस्य कृत्यानि गुप्त्यादीनि विचेष्टते ।
महत्तरं विजानीयात् तं प्रतीतं जितेन्द्रियम् ।।" ११

'काजी'—

"आचारव्यवहारेषु प्रायश्चित्तेषु योजनात् ।
प्रवर्त्तयेन्मान्यतमो धर्माध्यक्षः प्रकीर्तितः ।।" २५

'अलहखिदमत' इत्यस्य परिभाषादिकं विविच्य शालाभेदा निरूपिताः । यथा—'गुसल्लखाना' इत्यस्य—

"आपङ्कनोद्वर्तनानि सचरोपस्करं जलम् ।
यत्र तन्मज्जनगृहं राजरीतिज्ञ-भाषया ।।" ३६

ततश्च देशविभागाः, तेषामधिपतयः—सूबा, सिरकार, परगना, मौजे, दयार, मजमूएदार—इत्यादीनां निरूपणं वर्तते । 'मजमूएदार' एव 'मजूमदार' इत्याख्यया प्रसिद्धाः सन्ति । यथा—

"राजवेतनदानांशान् ग्रामाप्ति दशवार्षिकीम् ।
लिखित्वा धारयेद्यस्तु लेखसंग्राहको मतः ।।" ६३

एवमेव 'परगनाधिकारिणां-करोडी, कोतलकरोडी, पोतेदार, खजांची बकायै निगार, तहसीलदार, कोतवाल, फोजदार, इत्यादीनां परिभाषा वर्तन्ते । यथा—'पोतेदार' इत्यस्य—

"राजद्रव्यं प्रजादत्तमाददीत परीक्ष्य यः ।
धनिको निक्षिपेत् पश्चात् कथितः प्राप्तधारकः ।।" ६७

उपसंहाररूपेण च पद्यद्वयं लिखितं, यथा—

"इत्यादयोऽधिकाराः स्युः प्रायशश्चक्रवर्तिनाम् ।
सम्पत्तेरनुसारेण त्वन्येषां विद्धि भूभुजाम् ।।
एषा पद्धतिराख्याता राजरीति बुभुत्सया ।
गभीराद्राजसेवाब्धेर्द्रोणपाकाच्च सिक्थव ।।" १०६

इति यवनपाठ्यानुकृत्या राजरीतिनिरूपणं नाम शतकं विरचितं दलपतिरायेण "इति शुभं भवतु ।"

## सौन्दर्यलहरी

भट्ट शिवानन्दगोस्वामिना विरचितेयं लहरी अनूपपुस्तकालये, बीकानेर नगरे वर्तते । शतकस्यास्याधारो वर्तते श्रीमच्छंकराचार्य-विरचितो ग्रन्थः

सौन्दर्यलहरीति । सूचनेयं दत्ता श्रीमता फाल्गुनगोस्वामिना बीकानेरनिवासिना ग्रन्थलेखकस्य वंशजेन । मया च नावलोकिता प्रत्यक्षरूपेणेतिकृत्वा विवेचनमसम्भवं मत्वा विरम्यते ।

## शृङ्गारशतकम्

सवाई जयसिंहद्वितीयस्य सभायामासन्ननेके महाकवयः, तेषु 'जनार्दनभट्टगोस्वामिनो' नाम विश्रुतमासीत् । सोऽयं भट्टशिवानन्दगोस्वामिनो मध्यमभ्रातासीत् । 'सभेदार्यासप्तशत्यां' भ्रातृजेन श्रीमिकेतनगोस्वामिना श्रीमतां विषये पद्यमेकं प्रस्तुतम्—

"नानामुनिमतगहनस्तन्त्राणां यत्र राद्धान्तः ।
तस्यानुजः सुमेधाः जनार्दनाख्यो वरीवर्ति ॥" १८

"वंशावली" ति प्रसिद्धे ग्रन्थे रामकृष्णगोस्वामिना लिखितम्—

"तस्यानुजो मनुजनाथसमर्चितांघ्रिः निःशेषतन्त्रबहुमन्त्रविधानविज्ञः ।
धर्मैककर्मकुशलः श्रुतितत्त्वदर्शी ज्यायान् जनार्दन इति प्रथितो विभाति ॥"१०

रचनात्मके कार्ये श्रीमतां चत्वारो ग्रन्था वर्तन्ते, तेषु—(१) शृंगारशतकं (२) वैराग्यशतकञ्च शतककोटयां परिगण्येते । 'शृंगारशतकन्तु' काव्यमालाया एकादशके गुच्छे प्रकाशितं बभूव । तथापि काव्यमालाया दुर्लभत्वादत्र किञ्चिल्लिख्यते—

महाकवेः भर्तृहरेः सुप्रसिद्धस्य 'शृंगार-शतक'स्य छायात्र वर्तते । मुक्तकपद्येषु स्त्रियः प्रियतमा-प्रणयिनी-परकीया-नवोढादिरूपेण प्रस्तुतीकृत्य रसराजं शृंगारं प्रत्यक्षवदुपस्थापितं गोस्वामिना जनार्दनेनात्र । नवोढाया मानसिकीं स्थितिं चित्रयन् प्रस्तौति तस्या व्याकुलताम्, यथा पतिमिलनकामा परिभ्रमति गृहाभ्यन्तरे—

"कदाचिदारोहति सौधमुन्नतं कदाचिदायाति धरातलं पुनः ।
कदाचिदास्यं विनिवेश्य जालके प्रियं नवोढा तु सलज्जमीक्षते ॥"

उपसंहारात्मकं पद्यं तु —

"शृंगारशतकमेतज्जनार्दनाख्यद्विजन्मना रचितम् ।
तिष्ठतु तावद् यावत् तिष्ठति धरणीतलं सकलम् ॥" १०१

## वैराग्यशतकम्

भट्टोपाह्वस्य जनार्दनगोस्वामिनः द्वितीयेयं रचनाऽद्वितीया संस्कृतसाहित्ये ।

कृतिरियं राजस्थानप्राच्यविद्याप्रतिष्ठाने जोधपुरनगरे हस्तलिखितसंग्रहे (क्रमांक १२२२७) वर्तते । षोडशपत्राणि शतसंख्याकैः श्लोकैः परिपूर्णानि सन्ति । लिपिश्चास्य १९४२ विक्रमाब्दे कृता काशीनाथेन केनापि लिपिकारेण जयपुरे निवसता ।

ग्रन्थारम्भे लेखकः भगवन्तं श्रीकृष्णं स्मरति–

"कालिन्दीकलकूलकाननकृतक्रीडाकलापोल्लसद्
गोगोपालकबालकैः प्रतिदिशं सानन्दमावेष्टितम् ।
वंशीनादवशीकृत - व्रज - वधूस्वानं सदाह्लादकं
सद्भक्त्या समुपास्महे वयमघध्वंसैकधीरं महः ।।" १५

तेनानुभूतं यदस्मिन् संसारे स्त्रीरूपिणी माया स्वीयैरनेकविधैः रूपैः मनुष्यं संभ्रान्तं करोति । सहसैव स कथयति–

'एताः कानपि मण्डयन्ति पुरुषान् नानाविधैर्भूषणैः
एताः कानपि वञ्चयन्ति च जनान् मिथ्यावचोभिः पुनः ।
एता वै रमयन्ति कानपि वरान् भावैर्मनोजोत्कटैः
स्वात्मभ्रान्तं करोषि किं बत मुधा नारीषु हार्दं हि तत् ।।" ३

भगवतः श्रीकृष्णस्य मुरारेः स्मरणेनैव संसारसागरार्णवं तरीतुं शक्यते । पुत्रादयः सर्वे सामयिकाः सन्ति । परलोकगमनावसरे न कोऽपि त्वामनुयास्यति । अत ईश्वरमेव भज रे मूढ मनः, मान्यत्र गमनं विधेहि–

"पुत्रो मित्रं कलत्रं वसु च वसुमती वेश्म वासश्चवीति-
र्नागो रत्नं रथौघः परिजननिवहो नैव यास्यत्यनु त्वाम् ।
तस्मादस्माकमेतन्मतममृतसमं सावधानः शृणु त्वं
सेवामेकां विधेहि प्रणतजनभयध्वंसधीरां मुरारेः ।।" ४

या लोके 'प्रियतमेति' ख्याता, तस्याः सत्यं वर्णनं करोति कविः–

"त्वगस्थिरुधिरामिषैः प्रचुरगुह्यमूत्रादिकैः
कृतां जलजजन्मना सकलदोषसीमां वधूम् ।
अनंगशरजर्जरीकृतकलेवरः कातरो
नरो जडमतिर्मुहुः प्रियतमेति तां भाषते ।।" २४

'कालं' विवेचयता गोस्वामिना तस्मै नमस्कारा अर्पिता–यस्य महिमा लोकविश्रुतः । न कोऽपि स्थायी, यः समागतोऽस्मिन् संसारे, कालेन कवलिताः सर्वे–

"भूपास्ते रणकर्कशा, युवतयः सौन्दर्य-सीमाश्च ताः
सद्विद्या स्ववशीकृताखिलबुधस्वांताश्च ते पण्डिताः।
अन्ये चैव नटा विटाश्च कवयः सद्गायका नर्तकाः
ते याता यदपाङ्गपातचकिताः 'कालाय' तस्मै नमः ॥" ४६

एवं संसारस्यासारतायाः कामक्रोधादीनां षड्रिपूणां तथा च अन्येषां विषयाणां भोग्यपदार्थानाञ्च वर्णनं कुर्वन् गोस्वामी महाभागः समापयति ग्रन्थमिमम्। उपसंहारे चायं श्लोकः कृतिकारस्य नामोल्लेखनं प्रस्तौति—

"शृंगारशतके मग्नं समाकृष्य निजं मनः।
जनार्दनेन विप्रेण वैराग्यशतकं कृतम् ॥"

इति श्रीगोस्वामिजगन्निवासात्मज-गोस्वामि-जनार्दनभट्टकृतं वैराग्यशतकं संपूर्णम्।

## सुन्दरीस्तवराजः

श्रीमच्छंकराचार्यपादानां रचनासु "सौन्दर्यलहर्याः" महत्त्वपूर्णं स्थानमस्ति। तामेवोररीकृत्य तैलंगभट्टोपाह्वैः श्री श्रीकृष्णमहाभागैः 'कविकलानिधिः' इत्युपनाम्ना विख्यातैः "सुन्दरीस्तवराज"—नामिकेयं रचना विरचिता। अद्यावधि न प्रकाशिता। श्रीमतां कविकलानिधिमहोदयानां परिचयादिकं स्वतन्त्रे शोध-निबन्धे प्रकाशितमिति नास्ति पुनः पिष्टपेषणस्यावश्यकता।[1] भगवत्याः त्रिपुरसुन्दर्याः स्तवनं शिखनखवर्णनादिकञ्च विदुषा लेखकेन भक्तिरसप्लावितेन कृतमित्यर्थं दिङ्मात्रमुदाह्रियतेऽत्र—

"अखण्डब्रह्माण्डप्रकटनपटुर्यत्कमलम्-
रुपेन्द्रोऽभूद्द्रुह्यद्दनुजकुलसंदारणचणः
महारुद्रो रुद्रः सकलजगतां संहृतिविधौ
तदेतन्माहात्म्यं तव जननि [illegible]पादाब्जरजसः ॥" २

विश्वस्य जगत उत्पादयित्री या कापि शक्तिः, भगवतीं त्रिपुरसुन्दरीति नाम्ना विश्रुता सेयं शक्तिरूपा भगवती ब्रह्मविष्णुमहेशादीन् सर्वानपि देवदेवान् स्वस्वकर्मसु योजयामास। एवमेवाग्रिमे पद्येऽपि लेखकः प्रणमति जिन [illegible]

1 "कविकलानिधिः श्री कृष्णभट्टः तस्य सुन्दरीस्तवराजश्च" इतिशीर्षकेणलिखितः शोधनिबन्धः "सागरिका" पत्रिकायाः पञ्चमवर्षस्य द्वितीयाङ्के प्रकाशितोवर्तते

"कलाकेलीलोलक्वणितमणिकांचीगुणगणां
विलुप्तांगीं मध्ये, कुचभरनताङ्गीं शशिमुखीम् ।
कराम्भोजभ्राजत्सधनुरिषु - पाशांकुशवरां
समन्तात्त्वां वन्दे स्मरहरतपःसिद्धिपटलीम् ।। ७

स्तोत्रेऽस्मिन् पद्यानां सप्तोत्तरशती प्राप्यते, परमियमपि रचना शतकेष्वेव मन्यते। भाषायाः सारल्यं, भावप्रवणता चाकर्षति स्वान्तम् । अलंकाराणाञ्च स्वाभाविकः प्रयोगः प्रमोदयति चेतः । यथा—

नराणां निष्ठायै निगमनिरतायै नयभृते
नुतीनां निघ्नायै निहितनयनायै निजजने ।
निरूढायै नानाननिगदितायै नवगिरा-
नुतायै नित्यायै निभृतनिभृतायै नम इदम् ।। १०७

सर्वान्तिमश्चायं श्लोकः अनुप्रासालंकारस्य शोभनमुदाहरणम् ।

## अभिलाषशतकम्

"ज्योतिषराय" इत्युपनाम्ना सुप्रसिद्धस्य गणकराजस्य, जयपुरसंस्थापकस्य महाराजस्य सवाईद्वितीयस्य सभासदः, उदुम्बरगोत्रीयस्य भट्टब्राह्मणावतंसस्य श्रीकेवलरामस्य साहित्यिकीयं रचना "अभिलाषशतक" मद्यावधि न प्रकाशिता, केवलं हस्तलिखितरूपेणैकैव प्रतिः प्राप्यते राजस्थान-प्राच्यविद्याप्रतिष्ठानस्य प्रधानकार्यालये जोधपुरनगरे ११२०४ क्रमाङ्के । सेयं रचना शतककाव्येषु मुक्तकरचनारूपेण परिगण्यते । अस्यां कृतौ भगवतः श्रीकृष्णस्य बाल्य-लीलादीनामाकर्षकं वर्णनं, परम्परानुसारी च सूर्योदयास्तादीनां षड्तूनां स्वाभाविकरूपेणोपन्यासश्च च विहिते कविना । केचन श्लोकाः प्रस्तूयन्ते—

"पाञ्चाली-करिराज-राजवनिता-श्रीदाम-कुन्तीसुताः
सर्वे प्रत्युपकारतो व्यवहृता ज्ञातं तदुक्त्यैव तत् ।
नोपेक्ष्यो व्रजवत्सलात्मविमुखभ्रान्त्या त्वयाहं क्वचिद्
यस्मान्नाथ ! परोपकारकृतिषु ख्यातिं कथं यास्यसि ॥" १

एवमेव श्रीकृष्णस्य बालचातुर्यं प्रकटयितुं कविः लिखति—

"मातर्मां नय वीथिकासु मिलिताः क्रीडन्ति यद् बालिशाः,
'काचस्थेन कुमार ! खेलय गृहे, नेतुं न मेऽद्य क्षणः ।
दृष्ट्वा स्वं प्रतिबिम्बमानय बहिः स्निग्धं वयस्यं द्रुतं,
नोचेन्मां नय तत्र, वाश्रु विसृजन् मुग्धो हरिः पातु वः ॥ ८

उपसंहारात्मके पद्ये लेखकेन स्वनाम प्रस्तुतम्, येन कृतिकारस्य किंचित् परिचयो भवति–

"शिव-शौरिपदाब्जपूजनप्रतिभा-भाविततत्पदाम्बुजः ।
अभिलाषशतं मनोहरं कुरुते केवलरामनामकः ॥"

ग्रन्थमवलम्ब्य मया लिखितपूर्वः शोधलेखः[1] प्रकाशितश्चेति कृत्वा संक्षिप्त-रूपेणैव परिचयः प्रस्तुतः ।

**माधवसिंहार्याशतकम्** लट्टूपाह्वेन श्री श्यामसुन्दरेण व्यरचि काव्यमेतत् । जयपुरसंस्थापकस्य सवाईजयसिंहद्वितीयस्य कनिष्ठपुत्रस्य सवाईमाधवसिंह-प्रथमस्य शासनकाले (१७५०–१७६८ ई.) आसीदयं लेखकः ।

आर्याच्छन्दसि लिखितमिदं काव्यं[2] राज्ञो माधवसिंहस्य प्रस्तवनं, जयपुर-नगरस्य दर्शनीयानि स्थानानि, समसामयिकविदुषां च परिचयादिकं प्रस्तौति । यथा—

"श्रीमद्गणपति वर्णनम्—"
"अलिकुलमण्डितगण्डं विघ्नालिध्वान्त - मार्तण्डम् ।
सिन्दूरारुणशुण्डं कलये देवं सदा हि गजतुण्डम् ॥१॥
स्तम्बेरमास्यबिम्बं भक्तप्रत्यूह-तिमिर-खरबिम्बम् ।
जगदवलंबं बालं जगदम्बायास्त्वहं समालम्बे ॥२॥
भ्रमराकलितकपोलं विघ्नव्यूहतिमिर मिहिरपालम् ॥
सिन्दूरारुण - शुण्डं देवं स्तम्बेरमाननं वन्दे ॥३॥
"श्रीमन्माधवसिंह - प्रभुचरितं मनोहारीदम् ।
आर्याशतकमुदारं कलये कलितं नृपाज्ञातः ॥४॥

ये ये विषया अत्र निबद्धाः तेषामुल्लेखः क्रियते । यथा—(१) गणपति-

---

१ "ज्योतिषराय केवलराम तथा उनकी रचना अभिलाषशतकम्" विषयेऽस्मिन् हिन्द्यां लिखितो लेखः पिलानीतः प्रकाशितायां "मध्य भारती" नामिकायां त्रैमासिकशोधपत्रिकायां (१२-३ अंके, अक्टूबर १९६४) प्रकाशितः विस्तरेण परिचयादिकः तत्रैव वर्तते ।

२ अस्य काव्यस्य मूलप्रतिः भंडारकर ओरियंटल रिसर्च इन्स्टीटयूट नाम्नि संस्थाने पुण्यपत्तननगरे (पूना) वर्तते यस्य स्थापनं सर्वतः पूर्वं श्री पी. के. गोडे महोदयैः कृतम् । प्रतिलिपिकृता च तस्मादेव प्रतिष्ठानादत्र च प्रस्तूयते विवरणादिकम् ।

वर्णनम् (२) श्रीमद्गोविन्ददेवजीकप्रभूणाँ वर्णनम् (३) श्रीमत्सीताराम-वर्णनम् (४) सरस्वतीवर्णनम् (५) अथेश्वरी वर्णनम् (६) श्रीमच्छ्री कृष्ण वर्णनम् (७) श्रीमन्महाराजाधिराजेन्द्रवर्णनम् (८) दानवर्णनम् (९) प्रताप-वर्णनम् (१०) महाराजेन्द्रकीर्तिवर्णनम् (११) जयपुर वर्णनम् (१२) राज-प्रसादवर्णनम् (१३) अन्तःपुरवर्णनम् (१४) गजवर्णनम् (१५) अश्ववर्णनम् (१६) आखेटकवर्णनम् (१७) सभावर्णनम् (१८) वसन्तोत्सववर्णनम् (१९) श्रीमन्माधवसिंहविलासाख्योपवर्णनम् (२०) जलक्रीडावर्णनम् (२१) अम्बिकापुरीवर्णनम् (२२) शिलामयीश्वरी वर्णनम् (२३) मनसादेवी-वर्णनम् (२४) ब्रह्मपुरीवर्णनम् (२५) ब्रह्ममण्डलीवर्णनम् (२६) उपसंहारः।

यथा — **श्रीमन्महाराजाधिराजेन्द्रवर्णनम्—**

"श्रीमन्माधवसिंह प्रभुवर नृपचन्द्रे समुदिते जगति ।
सत्पुण्डरीक निवहाश्रकाशिरे सर्वतोऽजस्रम् ॥३४॥
गणपालं विधुभालं कालीपालं स्वभक्तजनपालम् ।
प्रणताखिलभूपालं जगतीपालं समं कलये ॥३५॥"

**सभावर्णनं तथा—** "हरिहरशंकरवर्यैं सचिवैरन्यैः सभोपेता ।
माधवसिंह सभा ते राजति शाक्री सभैवैषा ॥१००॥
त्रिदशसभायां चैको हरिरपि मित्रः सदाशिवोऽप्येकः ।
माधवसिंहसभायां रवयः सदाशिवाश्चित्रम् ॥१०१॥

**"अथ ब्रह्ममण्डलीवर्णनम्" यथा—**

"श्रीपौण्डरीकयाजि गंगारामाभिधः सूरिः ।
ऋषिरिव बभूव चास्यां पुर्यां भूदेववर्योऽयम् ॥१२२॥
तत्सूनुर्द्विजराजः श्रीरामेश्वराभिधः सूरिः ।
श्रीपौण्डरीकयाजी विराजते ब्रह्मपुर्यां यः ॥१२३॥
स जयति सम्राट् गोपीनाथः पुरे हि रुचिरे हृद्ये ।
श्रीविश्वनाथ सम्राट् पुर्यामस्यां जयत्वनिशम् ॥१२४॥

ग्रन्थेऽस्मिन् कारिकाणा संख्या १३० वर्तते, परं श्रीमन्माधवसिंहस्य वर्णनं शतसंख्याकैरार्याभिरेवोपवर्णितम् । ग्रन्थसमाप्तौ श्लोका निर्माणसमयादिकं वर्णयति । यथा—

"शालिवाहनशके शुभान्विते सप्त सप्त ऋतु-भूमि-संमिते ।
नेत्र-भूमि-करि-चन्द्रिरैर्मिते हायने शुभतरे मनोहरे ॥१॥

शुक्लमासि शुभशुक्लपक्षके मंदवासरयुते तिथावहे ।
दन्दशूकभयुते जनहर्षत्रातदे हि शुभसंमदयोगे ॥२॥
श्यामसुन्दर इति प्रथितोऽसौ संततं प्रणतरामपदाब्जः ।
बाडवो जयपुराभिधे पुरे पुस्तकं वरमलीलिखत्सुधीः ॥३॥"
अप्रकाशितेयं रचना प्रकाशनमर्हति ।

## श्रीकृष्णलीलामृतम्

महाकविना भोलानाथेन विरचिता सेयं रचना स्तोत्र-साहित्यान्तर्गतैव परिगण्यते यस्यां चतुरधिकशतानि पद्यानि सन्ति । श्रीमद्-भागवत-पुराणस्य दशमस्कन्धानुसारि भगवतः श्रीकृष्णस्य सरसानां लीलानामुपवर्णनमधिकं रोचते । जयपुरनगरे 'वायु-प्रासाद' (हवामहल) इत्याख्यातस्य प्रासादस्य समीपे वर्तते श्रीमद्गोवर्द्धननाथ-मन्दिरम । अस्य च प्रतिष्ठापनादिकं श्रीमता सवायीप्रतापसिंह-वर्मणा कृतमिति प्रसिद्धं कविना भोलानाथेन च लिखितम्—

'श्रीप्रतापस्य नृपतेः न्यवसत् सुखसद्मनि ।
श्रीरामस्वामिनो भर्ता गोवर्धनधरः प्रभुः ॥१०४॥"

देवमन्दिरस्यास्य निर्माणसमये श्रीरामस्वामिनामा प्रसिद्धः स्यात् कोऽपि भगवद्भक्तः पूजकश्च । अतएव श्री भोलानाथेनात्र संकीर्तितं नाम । अन्यत्रापि च

"नाम्ना श्रीरामशर्मा हरिचरणरतिप्राप्त-सत्कीर्तिकर्मा
तद्ध्यानाप्राप्तबोधोऽखिलभुवनतलप्राप्ततत्त्वावबोधः ।
प्राप्ता विद्यानवद्या हृदि यजनतया तस्य देवस्य भूम्नः
साक्षाद् गोवर्द्धनोऽसौ हरिरचलतया वर्ततां सर्वदान्तः ॥ २"

आसीत् सोऽयं महाकविभोलानाथः बहुभाषाविज्ञः । संस्कृतभाषायां केवलं रचनाद्वयी प्राप्यते—(१) कर्णकुतूहलम् नाम नाटकम् (२) श्रीकृष्णलीलामृतञ्च । एतौ द्वावपि ग्रन्थौ राजस्थान-प्राच्यविद्या-प्रतिष्ठान-पुरातत्त्व-मन्दिराख्ये संस्थाने, जोधपुरनगरतः एकत्रैव प्रकाशितावभूताम् । अतः नात्र विशेषतया विविच्यते । केवलं द्वित्राण्युदाहरणानि प्रस्तूयन्ते पाठकानां विनोदाय । यथा—

कालियदमनमधिकृत्य प्रसिद्धां कथां स्वशब्दैः प्रकटयति—

"शरीरशक्त्या निःसार्य गृहीत्वाभ्रामयद् हरिः ।
क्षीणशक्तिं परित्यज्य तत्फणासु ननर्त सः ॥ ३४

तत्त्वं तत्त्वं ततस्तत्त्वं तत्त्वतस्तत्त्वतस्तु तत् ।
ततं तेने ततं तेने मृदंगध्वानितोऽभवत् ।। ३५

ग्रंथान्ते फलश्रुत्यात्मकोऽनुष्टुप् श्लोको वर्तते यथा—

"यः पिबेत् सस्पृहं भक्त्या कृष्णलीलामृतं जनः ।
वैकुण्ठलोकं गत्वा स रमते कृष्णसन्निधौ ।। १०३"

अस्मिन् ग्रन्थे शालिनी, अनुष्टुप्, वंशस्थः, आर्या, शार्दूलविक्रीडितमित्यादीन्यनेकानि छन्दांसि वर्तन्ते ।

# अष्टादशशतकीयं केरलप्रदेशीयं नाटकत्रयम्

बिहारीलाल नागार्चः

अष्टादशशतके केरलप्रदेशे राज्ञां सभासु बहवः संस्कृतपण्डिता रूपकाणां सर्जनं कृतवन्तः। अत्र निम्नलिखितानां त्रयाणा नाटकानां विवेचनं प्रस्तूयते–

१. रामपाणिवादविरचितं सीताराघवनाटकम्[1]

२- देवराजकविविरचितं बालमार्तण्डविजयनाटकम्[2]

३. अश्वतितिरुणाल - रामवर्मविरचितं रुक्मिणीपरिणयनाटकम्[3].

## कविपरिचयः

रामपाणिवादेनेदं सीताराघवनाटकं विरचितम्। एष रामपाणिवादोः महान् विद्वान् कविश्चास्ति। अयं महाभागोऽष्टादशशतके केरलप्रदेशे बहूनां राज्ञां सभामलङ्कृतवान्।[4] अनेन संस्कृतप्राकृतभाषयोः बहवः ग्रन्थाः विरचिताः। तथाहि—संस्कृते—१. राघवीयम्–महाकाव्यम् २. विष्णुविलासम्–महाकाव्यम् ३. चन्द्रिका वीथी ४. लीलावती वीथी ५. मदनकेतुचरितम्–प्रहसनम् ६. मुकुन्दशतकम्–स्तोत्रम् ७. अम्बरनदीश–स्तोत्रम् ८. सूर्यष्टिकम् ९. भागवतचम्पूः १०. वृत्तवार्तिकम् ११. तालप्रस्तारकाव्यम् १२. रासक्रीडा प्राकृते— (१) कंसवधम् (२) उषानिरुद्धम्—उभे लघुकाव्ये।

अपरं च रामपाणिवादेन कतिपयस्वकृतीनामन्येषां च कृतीनां व्याख्या विरचिताः। मङ्गलग्रामवासिनो रामपाणिवादस्य बाल्ये तस्य संरक्षकोऽम्पलप्पुलनगरस्य राजा देवनारायण आसीत्। स रामपाणिवादस्याध्यापनं कारयामास, धनराशिवितरणेन तस्य कुटुम्बं सम्भरितवान् च। पश्चात् १७५० ई० संवत्सरे त्रिवाङ्कूरस्य

---

1. Edited, S. K. Pillai, Trivandrum, 1958.
2. Edited, K. Sambasiva Sastri, Trivandrum.
3. Edited, Kāvyamālā, 40.
4. K. K. Raja, Contribution of Kerala to Sanskrit Literature, Madras, 1951. P. 183.

राज्ञा मार्तण्डवर्मणा विजिते देवनारायणस्य राज्ये रामपाणिवादोऽन्यत्राश्रयं जग्राह। स यथाकालं त्रिवाङ्कुरे मार्तण्डवर्मणः, वेट्टत्तुनाडे वीररायस्य, 'चेन्नमङ्गलम्' इति पुरस्य सामन्तस्य रामकुबेरस्य, 'कुन्नङ्कुलम्' इति पुरस्य समीपवर्तिन आर्यश्रीकण्ठरामवर्मणश्चाश्रितः सन्नेतेषां सर्वेषाममरीकरणाय स्वकीयासु कृतिषु तेषां वर्णनं कृतवान्। एतेन प्रसङ्गेन महाकवेर्लोकप्रियताभिव्यज्यते।

पाणिवाद इति केरल प्रदेशस्य अम्पलवासिजातेः नम्बियार इत्युपजातिरेव ख्यातः। पाणिवादानां व्यवसायः संस्कृतनाट्याभिनये चाक्याराणां नटानां साहाय्यमेव वर्तते। पाणिवादाः पाणिघाः वा मिलावु इति ढौलवादनेन सहायीभूता अभिनयकाले। तस्य कौटुम्बिकनाम राम आसीत्। राघव इति मङ्गलग्रामवास्तव्यो महान् विद्वान् तस्य मामक आसीत्। अष्टादशशतकस्य मध्यभागो रामपाणिवादस्य रचनाभिः माहात्म्यं लेभे।

## सीताराघवनाटकम्

सीताराधवनाटकस्याभिनयः स्यानन्दूरनगरस्थितस्य पद्मनाभ - मन्दिरस्य समीपे राज्ञः मार्तण्डवर्मणः सभायां बहुभ्यो देशेभ्यः समागतानां वेदविदां काव्यरसज्ञानाञ्च समक्षं कृत इति प्रस्तावनातो ज्ञायते।

### कथावस्तु

अस्य नाटकस्य कथावस्तु रामायणात्संगृहीतमस्ति। अत्र सप्तस्वङ्केषु वस्तुप्रपञ्चः कृतः। प्रस्तावनानुसारं विश्वामित्रमुनिर्यज्ञरक्षार्थं रामलक्ष्मणौ गृहीत्वा स्वाश्रमं नीतवान्। रामस्य वियोगे दशरथः कौशल्या च दुःखमनुभवतः स्म। कौशल्या दशरथश्चान्तःपुरे किमपि मन्त्रयन्तौ स्थितौ।

प्रथमाङ्के विश्वामित्रस्य यज्ञारम्भो दृश्यते। सुबाहुमारीचमायावसुप्रभृतीनां रक्षसामुत्पात आशङ्क्यते। अनन्तरं विश्वामित्रशिष्यश्चारायणः दशरथसमीपमागत्य सूचयति यद्रामेण ताटका सुबाह्वोर्वधः कृतः। मारीचस्ततः पलाय्य तपश्चरति। विश्वामित्रयज्ञः सम्पन्नः। राज्ञा जनकेनामन्त्रितः विश्वामित्रः मिथिलां गन्तुकामः रामलक्ष्मणावपि तत्र नयति। चारायण इक्ष्वाकुकुलोद्भवानां राज्ञां प्रतापं विश्वामित्रस्य च शक्तिं वर्णयित्वा कौशल्यादशरथावाश्वासयति। दशरथः रामोद्वाहविषयकं विश्वामित्रप्रस्तावं श्रुत्वा स्वीकरोति। चारायणोऽपि ततो गच्छति।

द्वितीयाङ्के मायावसुः रामलक्ष्मणौ हन्तुं स्वानुचरं करम्बकाभिधेयं

राक्षसं मिथिलां प्रेषयित्वा तेनानीतं वृत्तं जानाति। करम्बकः मारीचप्रदत्तं मायाङ्गुलीयकमपि मायावसवे प्रयच्छति। करम्बकमुखाद्रामलक्ष्मणविश्वामित्रान् सीतास्वयंवरदर्शनार्थं मिथिलायामुपस्थितान् श्रुत्वा मायावसुः माययात्मनः दशरथरूपं करम्भकस्य च सारथिसुमन्त्ररूपं कृत्वा तत्र गच्छति। मायावसुः रामं धनुर्भङ्गान्निवारयति। स विश्वामित्रं जनकञ्चावमानयति। अनन्तरं वास्तविकः दशरथः स्वपत्नीभिस्सहायोध्यातः मिथिलामागच्छति। शतानन्दमुनिः स्वयंवरस्थलं गत्वा जनकविश्वामित्राभ्यां दशरथागमनस्य सूचनां प्रयच्छति। अनन्तरं जनकविश्वामित्रौ पूर्वागतं दशरथवेषधारिणं मायावसुं राक्षसं निश्चित्य तमवमानयतः। विश्वामित्राज्ञानुसारं रामश्शिवधनुर्भनक्ति। रामेण धनुर्भङ्गे सति सर्वे प्रसन्ना भवन्ति। तदा नेपथ्यात्क्रुद्धस्य परशुरामस्यागमनं श्रुत्वा मायावसुः मुनिवेषं धृत्वा परशुराममतीवक्रोधज्वलितं कर्तुं विचारयति। एवं विचारयन्मायावसुः निर्गच्छति। जनकोऽपि दशरथायेदं धनुर्भङ्गरूपमुल्लासपूर्णं वृत्तं निवेदयितुं गच्छति।

तृतीयाङ्के रामस्य भ्रातॄणां च सीतया तस्या भगिनीभिः सह विवाहो दृश्यते।

चतुर्थाङ्के शूर्पणखामायावस्वोरादेशेनायोमुखी विदेहनगरीं गत्वा तत्र मन्थराया रूपं विधृत्य रामराज्याभिषेकाय प्रवृत्तायाः कैकेय्याश्चरणयोरवपत्य रुदती कैकेयीं रामराज्याभिषेकस्य दोषानब्रवीत्। तच्छ्रुत्वा कैकेयी राज्ञः दशरथस्य समीपं गत्वा पूर्वप्रतिश्रुतं वरद्वयमयाचत—रामस्य चतुर्दशवर्षपर्यन्तं वनवास इति प्रथमो वरः, भरतस्य राज्याभिषेक इति द्वितीयो वरः। स्वपितुर्वचनं पालयितुं रामस्सीतालक्ष्मणाभ्यां सह वल्कलान् परिधाय वनं गच्छति। अयोमुखी कथयति यच्छूर्पणखा रामं प्रति कामासक्ता विद्यते। अनन्तरं सीतां प्रति कामासक्तः रावणः स्वप्रतीहार्या हेमवत्या सह रङ्गमञ्चमायाति। अमात्यः प्रहस्तः विनोदार्थं रावणाय चित्रपटमेकं ददाति। तस्मिन् चित्रपटे सीतां चित्रितां दृष्ट्वा रावणस्तमालिङ्गति। इन्द्रेण प्रेषितस्तुम्बुरुनामा गन्धर्वः रावणं विनोदयितुं तत्रागच्छति। तुम्बुरुमुखाद्विराधवधं श्रुत्वा रावणप्रहस्तावतीवदुःखमनुभवतः। अनन्तरं प्रहस्तः रावणाय निवेदयति यल्लक्ष्मणेन शूर्पणखाया नासिका कर्तिता। इदानीमेवाकम्पनः प्रविश्य रावणं सूचयति यद्रामेण खरदूषणत्रिशिरसां वधः कृतः। रावण इदं ज्ञात्वाकम्पनेनैकं गोपनीयं समाचारं मारीचसमीपं प्रेषयति।

पञ्चमाङ्के भरतेन प्रेषितः नन्दको चरः रामस्य वृत्तं ज्ञातुं वनं गच्छति।

नन्दकः वनदेवतया मन्दारवत्या सूच्यते यद्रावणनापहृतां सीतामन्विष्यन् रामः वने विचरति । अनन्तरं नन्दकः जटायोः प्रज्वलितां चितां पश्यति । तत्र गगनचारी दनुः नन्दकं सूचयति यदिदानीं रामो ऋष्यमूकपर्वते सुग्रीवेण सह निवसति । दनोस्सम्मत्या नन्दकः नन्दिग्रामं प्रतिनिवर्तते । सुग्रीवः हनुमन्तं सीतान्वेषणाय नियोजयति । रामसुग्रीवौ सीतां स्मृत्वा करुणार्द्रौ स्तः । अनन्तरं मायावसुः चारणस्य वज्राङ्गदस्य वेषं धृत्वा तत्रायाति । मायावसुः रामलक्ष्मणसुग्रीवाणामात्मघातार्थं योजनां निर्माति । मायावसुः रामलक्ष्मणसुग्रीवान् सूचयति यद्रावणेन बहुप्रार्थितापि सीता यदा तस्य पत्नीत्वं न स्वीकृतवती तदा सा रावणेन हता । सीतामन्वेष्टुं लङ्कां गतः हनुमानपि मेघनादेन हतः । स्वजनविनाशं श्रुत्वाङ्गदादिभिरपि स्वप्राणा विसृष्टा इति । रामलक्ष्मणसुग्रीवाः सीताहनुमदङ्गदादीनामिमां विपत्तिं श्रुत्वा मूर्च्छिता भवन्ति । अनन्तरं दधिमुखस्तत्रागत्य सुग्रीवं सूचयति यद्धनुमान् लङ्कां दग्ध्वाङ्गदादिकपिसैन्येन सहितो मधुवनं प्रविष्टस्तत्रत्यवृक्षानुत्पाटयति । रामलक्ष्मणसुग्रीवा हनुमदङ्गदादीनां प्रत्यागमनं श्रुत्वातीवप्रसन्ना भवन्ति । लङ्कादहनं श्रुत्वा खिन्नः मायावसुः प्रच्छन्नरूपेण ततो निर्गच्छति ।

षष्ठाङ्के एकस्मिन् प्रवेशके वनदेवताया मन्दारवत्या लङ्कालक्ष्म्याश्च वार्तालापेन सूच्यते यल्लङ्कादहनानन्तरं रावणश्शिल्पिन आहूय तां यथापूर्वां कृतवान् । लोपामुद्रया प्रेषिता वनदेवता मन्दारवती सीतायाः वृत्तं ज्ञातुं गगनमार्गेण लङ्कामायाति । मन्दारवती लङ्कां प्रविश्याशोकवृक्षतले समुपविष्टामत्यन्तकृशकायां सीतां पश्यति । सीतासमीपमुपविष्टे त्रिजटासरमे राक्षसैः भीतां सीतामाश्वासयतः । प्रवेशकानन्तरं त्रिजटासरमाभ्यां समाश्वास्यमाना रुदती सीता रङ्गमञ्चमायाति । अस्मिन् समये विभीषणानुचरस्सम्पातिस्तत्रागत्य त्रिजटां सूचयति यद्रामेण विभीषणः लङ्काराज्येऽभिषिक्तोऽस्ति । रामलक्ष्मणसुग्रीवाः सैन्येन सहिताः समुद्रं निस्तीर्य लङ्कां प्राप्ता इत्यपि सम्पातिना सूच्यते । अनन्तरं मन्दारवती सीतासमीपं गत्वा तस्यै लोपामुद्रया प्रदत्तमङ्गरागमर्पयति । मन्दारवतीं दृष्ट्वा सीता प्रसन्नतामनुभवति । तदनन्तरं नेपथ्याद्वानरराक्षसां युद्धं सूच्यते त्रिजटाया निर्देशेन मन्दारवती सरमा च गगनतलमुड्डीय वानरराक्षसानां युद्धमवलोकयतः । तस्मिन् युद्धे गरुडः मेघनादनागपाशबद्धयो रामलक्ष्मणयोर्बन्धनं छिनत्ति । अस्मिन् समये मायावसुः रामलक्ष्मणयोःकृत्रिमे शिरसी सीतासमीपं प्रक्षिपति । अनन्तरं नेपथ्यान्मायावसुमधिक्षिपन्ती लक्ष्मणगीश्श्रूयते । नेपथ्यात्कुम्भकर्णमेघनादयोर्वधस्समुद्घुष्यते । रावणोऽपि युद्धार्थं युद्धभूमिं गच्छति ।

सप्तमाङ्के एकस्मिन्विष्कम्भके पिशाचस्य मांसप्रियस्य तस्य पत्न्या

७. निसर्गो ह्ययमार्याणां गुणमात्रप्रशंसनम् ।
स्वभावो न हि भृङ्गाणां मकरन्दरसग्रहः ।। ५.१३

८. अल्पं वा बहु वा लभ्यं लभ्यते स्वयमेव तत् ।
प्रवर्तितव्या यत्नेन प्रार्थना जानता हरौ ।। ५.१३७

९. लक्ष्मीशचरणाम्भोजभक्तिरूपधनं विना ।
रत्नादिकं सुवर्णं वा न धनं बन्धनं हि तत् ।। ५.१४४

१०. वारिधेरेव गृह्णन्ति वारिदाः सलिलं बहु ।
न संगृह्णन्ति तद्भूयः सद्यो मुञ्चन्ति भूमिषु ।। ५.१६३

११. कुलीनतावयोविद्यातपःशमगुणादयः ।
पृथक्त्वेनैव सम्पूज्याः किमु यत्र समष्टयः ।। ५.१६५

## लोकोक्तयः

१. पुष्पोद्गमः फलपर्यवसाने किल श्लाघनीयो भवति ।

२. अहो ! महान् पौरजनानुग्रहाद्भुतवृक्षः स्वोत्पत्तिकाल एवं फलवानभूत् ।

३. अनर्घो मणिरभिज्ञे खलु मूल्यमर्हति ।

४. किं परोक्षवर्तिनी लोकानन्दकारिता चन्द्रस्य ?

५. कथमापद्यते रत्नदीपशिखा वात्यया निर्वापणम् ।

६. विपाटिता न कर्तव्या परिपाटी क्रमाश्रिता ।

मनोरथपूर्तिविषयकं कवेरिदमुक्तिवैचित्र्यं द्रष्टव्यम् । यथा—

"तदस्य मनोगतं रथमौदार्यमयीं महतीं रथ्यां प्रापय्य वेगयुक्तया चक्रधाटचा केङ्कारकारिणं करिष्यामि ।"

## अलङ्कारयोजना

कविना यथास्थानं शब्दालङ्काराणामर्थालङ्काराणां च प्रयोगः कृतः । परन्त्वलङ्कारा अत्र स्वाभाविकरूपेण प्रयुक्ताः न तु कृत्रिमतया । कविनोपमोत्प्रेक्षारूपकातिशयोक्त्यपह्नुतिव्यतिरेकदृष्टान्तादय अर्थालङ्काराः वृत्त्यनुप्रासलाटानुप्रासश्लेषादयश्शब्दालङ्काराः प्रयुक्ताः ।

## छन्दोयोजना

कविना रसस्य भावस्य चानुकूलानि छन्दांसि व्यवहृतानि । पृथ्वीन्द्रवज्रो-

पेन्द्रवज्राशार्दूलविक्रीडितमालिनीवसन्ततिलकास्रग्धराप्रहर्षिणीशिखरिणी-रथोद्धता-स्वागतानुष्टुप्शालिनीवृत्तानां प्रयोगः कृतः, शार्दूलविक्रीडितं कवेरतीव प्रियं छन्दः ।

कवेः शैलीविषयकं के० साम्बशिवशास्त्रिणः मतमपि द्रष्टव्यम् ।[1]

## नाट्यकला

नाटकमिदमैतिहासिकघटनाश्रितम् । कथावस्तु पञ्चाङ्केषु विभक्तम् । यथास्थानं विष्कम्भकप्रवेशकानां प्रयोगः कृतः । पञ्चसन्धयः प्रयुक्ताः । मार्तण्डवर्मा धीरोदात्तकोटिकः नायकोऽस्ति । अत्र शान्तवीररसयोर्निष्पत्तिः साफल्येन कृता । विषयवस्तुनो गाम्भीर्यात्कविना विदूषकस्य प्रयोगोऽत्र न कृतः । चरित्रचित्रणदृष्टयापीदं नाटकमन्यूनम् । कविना यथास्थानं स्वगतप्रकाशजनान्तिकाकाशभाषितानां प्रयोगः कृतः । पात्रोचिता भाषाप्यत्र प्रयुक्ता । प्राकृतस्य प्रयोगः कविना सीमित एव कृतः । तृतीयाङ्के कविना स्वनिर्मितं दिग्विजयाख्यं निबन्धनं पाठकमुखेन प्रयुक्तम् । एतद्गर्भाङ्कसदृशमस्ति । कथनोपकथनान्यपि प्रभावशालीनि विद्यन्ते । काव्यकलादृष्ट्येदं नाटकं सुष्ठु विरचितम् । इदं नाटकं प्रशंसन्मार्तण्डवर्मा कथयति--

भगवद्गुणमाधुर्यं नाटकाख्यं नवं मधु ।
अस्यास्यपङ्कजोद्भूतं विद्वद्भृङ्गमदावहम् ॥
सद्वस्तुघटितं चारु नाटकं कृतवानयम् ।
तदस्मिन्नेव सदसि महत् सम्मानमर्हति ॥

प्रसिद्धेऽपि कथानके कविना यत्र तत्र परिवर्तनं विहितम् ।

## दोषाः

नाटकेऽस्मिन्नाख्यानगतिस्तूर्णा नास्ति । अस्मिन्वर्णनानामेव बाहुल्यं वर्तते ।

---

1 "It is easy to understand that the poet follows the style of Kālidāsa generally; and hence occasional imitation and partial plagiarism are noticeable.
"The poet appears to have been fond of the style of the Mudrārākṣasa also in similar situations."
*Vide*, Introduction to बालमार्तण्डविजयम् by K. Sambasiva Sastri.

यत्र तत्र नाट्यनिर्देशं विनापि पात्राणां प्रवेशः रङ्गमंचे कारितः। कतिपयस्थलेषु कविना पात्राणां नामसु पर्यायवाचिनश्शब्दाः प्रयुक्ताः। एकस्मिन् स्थले "इतरे" पात्ररूपेण विद्यते। अत्र पात्राणां नामाङ्कनेन भवितव्यम्। यत्र तत्र कतिपय-पात्राणि रङ्गमञ्चमागत्य न किमपि कार्यं कुर्वन्ति। यथा वैणिकशिष्यः, राज-सेवकः श्रीकङ्कणः, स्थूलढाकपुत्र-श्रीकण्ठः। अभिनयदृष्ट्याप्यत्र कतिपयदोषाः। नाटके यत्र तत्र प्रयुक्तैः दीर्घवाक्यैः दीर्घसमासान्तपदैश्च रसानुभूतिः बाधिता।

## सामाजिकी स्थितिः

अस्य नाटकस्याध्ययनेन समसामयिकसमाजस्य विषये सूचनाः प्राप्यन्ते। निम्नलिखिते पद्ये रङ्गस्थलस्य वर्णनं कृतम्। यथा—

आदर्शामलभित्तिरुज्ज्वलमहानीलस्फुरत्कुट्टिमः
स्वर्णस्तम्भपिनद्धपूगकदलीपालीक्षुकाण्डावलिः।
ऊर्ध्वक्षौमवितानमण्डललसन्मुक्तासरालंकृतो
रङ्गो राजति शातकुम्भघटितस्तम्भाग्रदीपोत्करैः॥ ३.१

रङ्गस्थले दर्शकानामासनव्यवस्था निम्नलिखिते पद्ये वर्णिता—

तिष्ठद्भिः परितो द्विजेतरकुलैः पौरैः क्रमान्मण्डिता
राजन्ती युवतीजनैर्यवनिकां कृत्वा स्थितैरन्तरा।
राजामात्यजनैस्ततोऽन्तरनघैर्विप्रोत्तमैर्वैदिकै
र्विद्वद्भिः रसिकैर्यथोचितमिहासीनैः सभा शोभते॥ ३.२

रङ्गपाठकस्य वेषोऽत्र वर्णितः—

व्यालोलोर्मिमदुज्ज्वलाच्चलपयःफेनालिशुभ्रांशुकः
सर्वाङ्गीणपटीरपङ्ककलितां विच्छित्तिशोभां वहन्।
बाहुद्वन्द्वलसत्सुवर्णवलयः कोटीरवान् कुण्डली
वेषोऽयं वत पाठकस्य कुरुते नो कस्य वा विस्मयम्॥ ३.४

तात्कालिकदाक्षिणात्यमन्दिराणां रचनाशैल्या वर्णनं पद्मनाभमन्दिरवर्णने प्राप्यते। मन्दिरं परितः बहुद्वारयुतः प्राकार आसीत्। गोपुरमपि बहुभिस्तलैर्युत-मभूत्। मूलदेवच्छाया विविधानि रूपाणि मन्दिरे प्रदर्श्यन्ते स्म।

तस्मिन् समाजे ब्राह्मणेभ्यो भोजनप्रदानं पुण्यकार्यमासीत्। निम्नलिखिते पद्ये भोजनसामग्र्या वर्णनमुपलभ्यते—

सर्वं सम्पन्नमन्नं समधिकरुचिकृत् सूपपूर्णैः कटाहैः
सन्निष्ठानैर्गरिष्ठैरपि भरितमभूद् दाधिकाद्यैरनेकैः।

आपक्वैः पर्पटौघैः फलभरनिचयैः पुञ्जिताभिः सिताभिः
सार्धं नव्याज्यकुम्भैर्मधुरिमभरितैः पायसौघैश्च पूर्णम् ॥ ५.७५

कविगोष्ठीनां प्रचलनमासीत् । यथा—

गोष्ठ्यां तत्र न लक्ष्यते घटपटाभावोऽथवा घञ् घटा
टिड्ढाणञ्चापि वैन्द्रमाश्विनमिदं मिथ्येति शब्दावली ।
साध्वीयं रसपुष्टिरद्भुतमहो सारल्यमस्मिन्निति
श्लाघाहर्षविवर्धिता परमहो स्वच्छन्दमुन्मूर्च्छति ॥

राजानः कवीनां विद्वज्जनानाञ्च सम्मानं कुर्वन्ति स्म । राजा कलाशिल्पयोः पोषकोऽभूत् । तस्मिन् समाजे तन्त्रस्यातीव प्रभावोऽविद्यत । देवता मानवेष्वाविश्य स्वेच्छाः प्रकटयन्ति स्म ।

## "रुक्मिणीपरिणयम्"

अश्वतितिरुणालरामवर्मास्य नाटकस्य प्रणेतास्ति । एष कार्तिकतिरुणालमहाराजस्य भागिनेयः । अनेन कार्तिकतिरुणालाध्यक्ष्ये शिक्षा प्राप्ता । शङ्करनारायणः रघुनाथतीर्थश्चास्य गुरू बभूवतुः । किळिमानूरवासी रविवर्मकोयिलतम्पुरानस्य पिता । रामवर्मणः जीवनकालः १७५५ खीष्टाब्दात् १७९५ खीष्टाब्दपर्यन्तमासीत् ।[1] अनेन कविना संस्कृतभाषायां मलयालमभाषायाञ्च बहवः ग्रन्था विरचिताः । अनेन संस्कृते रुक्मिणीपरिणयनाटकम्, शृङ्गारसुधाकरभाणः, वञ्चिमहाराजस्तवः, सन्तानगोपालप्रबन्धः, कार्तवीर्यविजयप्रबन्धः दशावतारदण्डकाश्च विरचिताः । एष कविः सङ्गीतादिकलासु कुशलः । रुक्मिणीपरिणये नाटके कृष्णरुक्मिण्योर्विवाहो वर्णितः ।

### कथावस्तु

नाटकस्याभिनयः भगवत्पद्मनाभसान्निध्यात्पवित्रायां सभायां समभूत् । विदर्भनगरात्स्वयंवरवृत्तं श्रुत्वा वासुभद्रोऽतीव सुमुत्सुकोऽस्ति । इदानीं वासुभद्रः मन्त्रशालायां कुतश्चिदागतं पत्रमेकं पठन्नास्ते । वासुभद्रामात्य उद्धवः कतिपयदिवसेभ्यः पूर्वं कपिञ्जलेन ब्राह्मणेन सह कुण्डिनपुरं गतः । प्रथमाङ्के वासुभद्र उद्धवेन कुण्डिनपुरात्प्रेषितं पत्रं पठन् रङ्गमञ्चमायाति । तदनुसारं कतिपयैरेव दिवसैर्वि-

1 K. K. Raja, Contribution of Kerala to Sanskrit Literature Madras, 1958, p. 172

दर्भनगरस्य प्राज्ञा मन्त्रिणः, विदर्भनृपतेः प्रियसुहृदो रुक्मिण्याः सख्यश्च स्वपक्षे कृताः। परन्तु रुक्मिण्या भ्रात्रा रुक्मिणा प्रोत्साहितः दमघोषपुत्रशिशुपालः रुक्मिणीमुद्वोढुं कामयते। उद्धवेन रुक्मिशिशुपालयोर्वञ्चनोपायोऽपि चिन्तितः। अनन्तरं वासुभद्रः दारुकेण सहितः रथमारुह्य कुण्डिनपुरं गच्छति। वासुभद्रहृदयं रुक्मिण्यास्सौन्दर्येण व्याक्षिप्तमस्ति। कुण्डिनपुरं प्राप्य वासुभद्रदारुकौ कात्यायन्याः मन्दिरे निवसतः।

द्वितीयाङ्के-विष्कम्भके रुक्मिणीसखी-नवमालिकोद्धवयोर्वार्तालापेन सूच्यते यद्रुक्मिणी वासुभद्र एवानुरागिणी विद्यते। रुक्मिणी स्वभ्रातुरिमां प्रतिज्ञां श्रुत्वा दुःखमनुभवति यत्सा चेदिराजाय शिशुपालाय समर्पयितव्या। विदर्भनृपतिस्तस्य मन्त्रिणश्च रुक्मिण्या विवाहं वासुभद्रेण सहैव कर्तुमिच्छन्ति। उद्धवः नवमालिकां वासुभद्रस्य कुण्डिनपुरागमनं कात्यायनीमन्दिरावासं च सूचयति। नवमालिकोद्धवौ रुक्मिणीवासुभद्रयोः परस्परसंयोगयोजनां निर्मातः। द्वितीयाङ्के वासुभद्रो विदूषकाय कपिञ्जलाय निवेदयति यन्मया स्वप्ने स्वशय्यासमीपं नीलाकमलधारिणी रुक्मिणी दृष्टा। विदूषकसमक्षं रुक्मिण्या रूपसम्पत्तिं वर्णयन्वासुभद्रः कामव्यथितो भवति। विदूषको वासुभद्रव्यथामपनेतुमुपायं चिन्तयति। अस्मिन् समये शिशुपालसुहृच्छाल्वः रुक्मिणीं बलादपहरति। वासुभद्रप्रेषितेन सुदर्शनचक्रेण पराजितः साल्वः रुक्मिणीं विमुच्य ततः पलायते। अनन्तरं वासुभद्रः भीतां रुक्मिणीमाश्वासयति। आश्वस्ता रुक्मिणी शृङ्गारलज्जां प्रदर्शयन्ती ततः समुत्थायान्यतो गच्छति। अनन्तरं वासुभद्रानुमतिं प्राप्य नवमालिका रुक्मिण्या साकं ततः निर्गच्छति। वासुभद्रविदूषकावपि कात्यायनीमन्दिरं गच्छतः।

तृतीयाङ्के विष्कम्भके सूच्यते यद्वासुभद्रेऽतीवासक्तत्वाद्रुक्मिण्यस्वस्थहृदयास्ति। अनन्तरं शशिकान्तमणिशय्यामधिशयाना महतीं कामव्यथामनुभवन्तीं रुक्मिणीं समाश्वासयन्ती नवमालिका तस्यै वासुभद्रनर्मसचिवेन कपिञ्जलेन प्रदत्तं मुक्ताहारं शिशिरोपचारार्थं ददाति। परन्तु तेनापि रुक्मिण्याः कामतापः नापनोद्यते। रुक्मिणी चित्रफलके वासुभद्रस्यातीव रमणीयं चित्रं निर्माय तस्य चरणयोः पतित्वा तं दयामभ्यर्थयते। अस्मिन् काले नेपथ्याद्रुक्मिणः शिशुपालागमनविषयिकीं वाणीं श्रुत्वा रुदन्ती रुक्मिणी मूर्च्छति। नवमालिकया समाश्वस्ता रुक्मिणी स्वभ्रातुर्निर्दयतां ख्यापयन्ती स्वभाग्यं निन्दन्त्यात्मघातं निश्चिनोति। परन्तु नवमालिका रुक्मिणीं समाश्वास्य तां कात्यायनीमन्दिरपार्श्वं नयति।

चतुर्थाङ्के एकस्मिन्विष्कम्भके विवाहोचितं वेषं धारयन् शिशुपालः स्वताम्बूलदेन नूपुरकेण सह रङ्गमञ्चमायाति। नूपुरकः कामपीडितं शिशुपाल-

माश्वासयति । नूपुरकेण साकं प्रासादशिखरमारुह्य शिशुपालः बध्वा रुक्मिण्याः स्वयंवरयात्रां पश्यति । विदूषकेण सहितः वासुभद्रोऽपि कात्यायनीमन्दिरस्य गौरीविलासप्रासादस्य गर्भगृहे स्थित्वा रुक्मिणीं प्रतीक्षते । अनन्तरं नवमालिकानङ्गसेनाभ्यां सहिता रुक्मिणी कात्यायनीमन्दिरमायाति । अतीव व्याकुला रुक्मिणी नवमालिकां कथयति यद्भगवतीपादवन्दनानन्तरं सा स्वप्राणान्परित्यक्ष्यति । नवमालिकया समाश्वस्ता रुक्मिणी भगवतीपादवन्दनं करोति । नवमालिका शीघ्रमेव रुक्मिणीं गौरीविलासप्रासादस्य गर्भगृहं नयति । तत्र रुक्मिणीमुपवेश्य नवमालिका तस्या प्रसाधनं कारयति । अनङ्गसेनयानीतानि रुक्मिण्या मातुलपत्न्या प्रेषितान्याभूषणानि नवमालिका रुक्मिणीं परिधापयति । रुक्मिण्या अनुमतिं प्राप्य नवमालिका तस्याः पुराणान्याभूषणान्यनङ्गसेनायै ददाति । अनन्तरं नवमालिका स्वभ्रूसंज्ञया वासुभद्रं तत्राहूय तस्य हस्ते रुक्मिणीहस्तं दत्वा तं रुक्मिण्या शोकपरिहरणं याचते । इदं कथयित्वा नवमालिका ततो गच्छति । लज्जाशीला रुक्मिणी वासुभद्रहस्तात्स्वहस्तं विमोक्तुं यतते । तामाश्वासयन्वासुभद्रः कथयति यद्भवत्या आभूषणानि परिधायानङ्गसेना स्वयम्वरभूमिं गता । अनङ्गसेनया साकं शिशुपालस्य विवाहो भवतु ।

पञ्चमाङ्क एकस्मिन्विष्कम्भके विदर्भराजामात्यसेनापतिसिंहकेत्वोर्वार्तालापेन सूच्यते यज्जरासन्धादयश्शिशुपालसुहृदश्शिशुपालस्येदमलीकंपाणिग्रहणं ज्ञात्वोद्धवमस्यापमानस्य कारणमाकलय्य तस्य निवासस्थानमावृतवन्तः । भीतां रुक्मिणीमाश्वास्य वासुभद्रोऽपि युद्धाय कटिबद्धोऽभूत् । परन्तु यदा वासुभद्रः धनुः पश्यति तदैवाकाशात्पुष्पवृष्टिस्संजाता । शत्रूणां हस्तेभ्यश्च धनूंषि पतितानि । अनन्तरं शिशुपालसुहृदः युद्धभूमेः पलायिताः । रुक्मी स्वभगिन्या इमं राक्षसविवाहं शिशुपालावमाननञ्च दृष्ट्वा वासुभद्रं प्रति चोराद्यपशब्दान्कथयति । परन्तु वासुभद्रः रुक्मिण्याः प्रणयानुरोधेन रुक्मिणं न दण्डयति । विजयी वासुभद्रः रुक्मिणीकपिंजलोद्धवदारुकैस्सहितः रथमारुह्य द्वारकां गच्छति । भरतवाक्यानन्तरं नाटकस्य समाप्तिर्भवति ।

## चरित्रचित्रणकला

पात्राणां चरित्रचित्रणं कविना सुष्ठु कृतम् । अस्य नाटकस्य नायकः वासुभद्रोऽस्ति । स धीरोदात्तोऽस्ति । वासुभद्रः गुणग्राहकः, प्रकृतिप्रेमी, पराक्रमी क्षमावान्परिहासंप्रियश्च विद्यते । रुक्मिण्यत्र नायिकास्ति । एषातीवसुन्दरी, गुरुजनाज्ञाकारिणी, बुद्धिमती, विनयवती, लज्जाशीला, सहृदया, पतिपरायणा

चास्ति । वृक्षान्पक्षिणश्च प्रति रुक्मिण्या उत्कटोऽनुरागः विद्यते । एषा चित्रकलायामपि निपुणास्ति । रुक्मिणीसखी नवमालिका सोत्साहा, संविधानचतुरा, स्वामिनीभक्ता चास्ति । प्रतिनायकश्शिशुपालः मूढः, पापी, लुब्धः स्तब्धश्च वर्तते । वासुभद्रामात्य उद्धवः कूटनीतिज्ञः प्रतिभाशाली, संविधानपटुः विनयशीलश्च विद्यते । विदूषको कपिंजलः भोजनप्रियः परिहासकुशलश्च वर्तते । अस्मिन्नाटके चतुर्दशपात्राणि विद्यन्ते ।

## प्रकृतिवर्णनम्

नाटककारेण वसन्तमलयानिलोद्यानानां सूर्योदयसूर्यास्तरात्रीणाञ्च वर्णनमत्र कृतम् । नर्मदागङ्गावृन्दावनानामपि वर्णनमत्र प्राप्यते ।

महीतलकृतावतार इदानीमुपगूढसुरभिवनमालः ।
नित्यमुद्धवसहितो मन्मथजनको हि माधवो जयति ।।

## भाषाशैली

अस्य नाटकस्य भाषा क्वचित् सरलान्यत्र क्लिष्टा विद्यते । यत्र तत्र लघूनि वाक्यानि दृश्यन्तेऽन्यत्र च दीर्घाणि बहुपंक्तिमन्ति वाक्यान्युपलभ्यन्ते । प्राकृतभाषायामपि बहुपंक्तिमतां वाक्यानां प्रयोगो वर्तते । नाटककारस्य कवित्व प्रशंसनीयमस्ति । तेनात्र विविधानि छन्दांसि प्रयुक्तानि । अर्थालङ्कारेष्वत्रोपमोत्प्रेक्षारूपकापह्नुत्यादीनां शब्दालङ्कारेषु चानुप्रासयमकश्लेषाणां प्रयोगः कृत. । नाटककारस्य प्रवृत्तिः दीर्घवाक्यानां प्रयोगार्थं विद्यते । कविना सूक्तीनां लोकोक्तीनाञ्च प्रयोगेण भाषायाः प्रभावोत्पादकता समापादिता ।

## सूक्तयः

१ परगुणग्राही विद्वान्द्विजातिरनेषणो
रिपुरभिमतो वीतक्रोधोऽपरागमना मुनिः ।
वितरणपटुः श्लाघाशून्यः सुखी परसेवको
विगतकुहनाटोपो लोके विटोऽपि सुदुर्लभः ।।

२ सकललोकलोचनानन्ददायिनी कुमुदिनी सहजसौन्दर्यरमणीयस्य सुधानिधेरालोकनाय स्पृहयत्येव ।

३ नन्वयस्कान्तमणय इव लोहानि निष्ठुराणि क्षुल्लकानामप्याकर्षन्ति मनांसि महतां गुणाः, किमुत स्वभावसरसमृदूनीतरेषाम् ।

४ तन्मित्रं यद्व्यसने सा लक्ष्मीर्या करे स्थिता भवति ।
तद्रूपं यत्र गुणास्तद्विज्ञानं यत्र धर्मः ।।

५ वृक्षविकारेण निधिरनर्घरत्नं स्फुरन्मयूखेन ।
ज्ञायते सुजनैः शुभोदयाभ्युदगमो निमित्तेन ।।
६ किमभेद्यमम्भसा किमदूष्यं दुर्जनानाम् ?
७ किं नु खलु दुष्करं पापानाम् ?
८ निसर्गचपलाः प्रमदा भवन्ति ।

## लोकोक्तयः

१ सकवलितहालाहलस्य जनस्य सर्पदंशः ।
२ का खलु वर्णना चन्द्रः सुधोद्गारीति ।
३ पिबतु दुग्धमिति जीर्णमार्जारस्तक्रम् ।
४ कमलाकरं वर्जयित्वा न राजहंस्यन्यस्मिन्नभिरमते ।
५ न हि कुलशैलनिवहवाहिनो वायवः संनह्यन्ति तरले तूलराशौ । न च सुमेरुवप्रप्रणयप्रगल्भा वा दिक्करिणः परिणमन्त्यणीयसि वल्मीके ।

## नाट्यकला

नाटकमिदं नाट्यशास्त्रनियमानुकूलमस्ति । अत्र मुखप्रतिमुखगर्भविमर्श-निर्वहणाः पञ्चसन्धयः विद्यन्ते । प्रवेशकविष्कम्भकयोरप्यर्थोपक्षेपकयोरत्र प्रयोगः कृतः । अत्र सर्वाणि पात्राणि नाट्यशास्त्रानुसारं यथोचितभाषया संवदन्ति । संवादेष्वपि नाटककारः कुशलोऽस्ति ।

## दोषः

प्रथमाङ्कप्रारम्भे प्रवेशकस्य प्रयोगः नाट्यशास्त्रनियमविरुद्धोऽस्ति । अत्र विष्कम्भकस्य प्रयोगेण भवितव्यम् ।

## सामाजिकी स्थितिः

नाटकेऽस्मिन्बहुषु स्थलेषु समसामयिकसामाजिकस्थितिः सूचिता । अष्टा-दशशतकीयानामुज्जयिनीवाराणसीद्वारकाणां वर्णनमत्र प्राप्यते । उज्जयिन्या विशाला विपणयो महाकालशिवोऽनेकाः सुन्दर्यश्चात्र वर्णिताः । वाराणसीं मुक्तिक्षेत्रं ज्ञात्वा तत्रानेके मुनयः, विद्याभूमिमवगत्य बहवो जिज्ञासवोऽप्सरसां पुरञ्चाकलय्या-नेके विटाश्च न्यवसन् । द्वारकाया गवाक्षका दर्पणयुता आसन् । कन्यकाविवाह-समये मातृपूजनप्रथाष्टादशशतकेऽप्यविद्यत । कन्यका स्वसखीभिः वृद्धाभिश्च साकं मातृपूजनार्थमगच्छत् ।

उपर्युक्तविवेचनेन सूच्यते यदष्टादशशतके केरलप्रदेशे राजाश्रयं प्राप्य संस्कृतरूपकसाहित्यं समृद्धं संजातम् ।

विस्नगन्धिन्याश्च संवादेन सूच्यते यद्रामरावणयुद्धे मृतानां राक्षसादीनां रक्तवसामांसैः पिशाचाः पिशाचिन्यश्च परितुष्यन्ति । रामः रावणं हत्वा विभीषणं लङ्काराज्येऽभिषिक्तवान् । अग्नौ परिशुद्धां सीतां गृहीत्वा रामः पुष्पकविमानेनायोध्यां गच्छति । अयोध्यायां वशिष्ठेन रामस्य राज्याभिषेकः क्रियते । भरतवाक्येन साकं नाटकस्य समाप्तिर्भवति ।

अस्य नाटकस्य नेता रामः धीरोदात्तकोटिकोऽस्ति । रावणोऽत्र प्रतिनायकः । एष लोकरावण एव । नाटकेऽस्मिन्नेकचत्वारिंशत्पात्राणि सन्ति । अत्यधिकेयं पात्रसंख्याभिनयदृष्ट्येति स्पष्टमेव । कतिपयपात्राणां चरित्रमत्र प्रस्तूयते— नाटकस्य सीता नायिकास्ति । एषा स्त्रीरत्नललामभूता सर्वगुणोपपन्नास्ति । एषा पतिपरायणा, गुरुजनानुवर्तिनी, सखीस्नेहशीला, कुटुम्बिजनादरभावनिर्भरा च चित्रिता । मायावसुः मायाप्रगल्भः सर्वदुर्गुणसम्पन्नः रावणस्य परमसहायकः स्वदुर्वृत्तेरविश्रान्तः लोकापहारक एव वर्णितः ।

**प्रकृतिवर्णनम्**

नाटककारेण यथास्थानं प्रकृतिवर्णनं कृतम् सूर्योदयसूर्यास्तसन्ध्याचन्द्रोदया अस्मिन् रूपके वर्णिताः ।यथा सूर्योदयः—

जृम्भारम्भिकुसुम्भकेसरसखैः साकूतकोकाङ्गना
दृष्टैः कैश्चन रोचिषां परिकरैः प्राची यदाचीयते ।
यच्चात्मद्युतिभङ्गभीरव इव म्लायन्ति तारा गणा
स्तन्मन्ये तरसा भविष्यति रविः पूर्वाद्रिचूडामणिः ।। ६.१

**सूर्यास्तः**

अस्तक्ष्माभृदधित्यकापरिगलद्धातुद्रवार्द्रैरिव
प्रत्यासन्नवियोगकोकतरुणीशोकाग्निलग्नैरिव ।
आताम्रैः किरणोत्करैरवतरत्याशामसौ वारुणी-
माश्लेषव्यतिषक्तरक्तनलिनीचिह्नैरिवाह्नां पतिः ।। १.२३

**चन्द्रोदयः**

रात्रावुद्भ्रमता घनेन तमसा स्वीकर्तुमाकांक्षितां
सन्ध्यामेष पतिंवरामिव वधूमुद्दामरागोदयाम् ।
आसम्पूर्णकलाकलापसुभगो रक्तोल्लसन्मण्डलो
मन्ये स्वैरममूं ग्रहीष्यतितरां लब्धोदयश्चन्द्रमाः ।। १.२५

**विन्ध्याचलपर्वतवर्णनम्**

अत्यन्तोद्‌धुरहस्तिमस्तकतटीसञ्चारिपञ्चाननः
शार्दूलोत्कटवक्त्रकृष्टहरिणीरक्तावसिक्तावनिः ।
उच्छ्रायच्छुरितोडुमार्गशिखरो वैमानिकानामपि
व्योमोत्सङ्गगतागतानि कुरुते वंध्यानि विन्ध्याचलः ॥ ५.६

**भरद्वाजाश्रमः**

रोमन्थस्फुरदोष्ठगोष्ठशयनप्रेष्ठाङ्गकण्डूयन-
क्रीडासक्तगवीनवीनशिशुकव्यावल्गितोपान्तभूः ।
हव्यद्रव्यसुगन्धिगन्धवहनव्याधूतधूमावलि-
श्यामीभूतवियत्पथो नियमिनः कस्याश्रमो दृश्यते ॥ ७.१५

**भाषाशैली**

अस्य नाटकस्य भाषा सरला विद्यते। यत्र तत्र दीर्घसमासान्ताः पदावल्योऽपि प्रयुक्ताः । नाटककारेण भावानुरूपैव कान्ताथवा कठोरा शब्दावली व्यवहृता । भाषार्थाभिव्यक्तौ पूर्णरूपेण समर्थास्ति । कोमलभावानामभिव्यक्तिसमये सरला कान्ता च पदावली प्रयुक्ता । यथाभिषेकानन्तरं रामविषयकमिदं वर्णनम्—

पूर्णाभिषेकमङ्गल्यः पूर्णचन्द्रसमद्युतिः ।
विश्वामित्रं पुरस्कुर्वन्नार्योऽयमभिवर्तते ॥ ७.३२

वानराणां राक्षसानाञ्च युद्धवर्णने संयुक्ताक्षरप्रचुरा समासबहुला च भाषा व्यवहृता। यथा—

वल्गाघातप्रवल्गत्तुरगखुरपुटक्षुण्णभूमण्डलोत्थाः
स्त्यायन्तेऽमी परागाः ककुभि करिघटाकर्णवातावधूताः ।
येषां सन्ध्याभ्रभासामधिविततिमिथो मुक्तशस्त्रास्त्रधारा
निष्पेषे निष्पतन्तो दधति पटुतडिद्विभ्रमं विष्फुलिङ्गाः ॥ ७.२७

नाटककारः गद्यलेखनेऽपि तथैव निपुणो यथा पद्यलेखने । प्राकृतभाषायामपि प्रावीण्यमस्ति । प्राकृतभाषाया बहूनि पद्यानि विद्यन्ते ।

**अलङ्कारयोजना**

कविना यथास्थानं शब्दालङ्काराणामर्थालङ्काराणाञ्च प्रयोगः कृतः ।

परन्त्वलङ्कारप्रयोगा अत्र भाषाया भावस्य च सौन्दर्यं वर्धयन्ति । शब्दालङ्कारेषु कविनानुप्रासयमकश्लेषाः प्रयुक्ताः । अर्थालंकारेषूपमोत्प्रेक्षादृष्टान्तार्थान्तरन्यासापह्नुतिविषमाणां प्रयोगोऽत्र द्रष्टव्यः ।

## छन्दोयोजना

कविना भावानुकूलाना छन्दसामत्र प्रयोगः कृतः । अत्र शार्दूलविक्रीडितशिखरिणीस्रग्धरावसन्ततिलकमंजुभाषिणीमालिनीप्रहर्षिणीमन्दाक्रान्तावंशस्थहरिणीपृथ्वीन्द्रवज्रोपेन्द्रवज्राप्रबोधिताशालिनीद्रुतविलम्बितस्वागतानुष्टुभादीनां छन्दसां प्रयोगः कृतः ।

## सूक्तयः

सूक्तीनां लोकोक्तीनाञ्च प्रयोगेण भाषायाः प्रभावोत्पादकता वृद्धिं गता । निम्नलिखितास्सूक्तयोऽत्र द्रष्टव्याः—

१ शेषेण भारयति चक्रधरो धरित्रीं
मेघेन वर्षयति सोऽपि पतिर्नदीनाम् ।
नैशन्तमश्शमयति ज्वलनेन भास्वान्
नानन्तरं स्वविभवं प्रथयन्ति सन्तः ॥ १.६.

२ अज्ञानामनुदर्कतर्कतरलाः स्वापप्रलापोपमा
वाचः सन्तु विकारयन्ति विदुषो नैतास्तितिक्षावतः । २.१४

३ दुरुक्तं दुष्टानां कलुषयति चेतः सुमनसां
तटाकानामम्भस्तटरुहतरूणामिव रजः । २.१६

४ अभेद्यो धैर्याद्यैरपि हि बहुभिस्साधकतमै-
रपत्यस्नेहाख्यो जयति दृढबन्धस्तनुभृताम् । २.२७

५ दाक्षिण्यभाजाम्महताम्मुखेभ्यो
न जातु निर्यान्ति वचांसि तानि ।
श्रुतानि यानि व्यथयन्ति सद्यः
श्रोतुश्श्रुतीः शल्यवदुत्कटानि ॥ २.३२

६ प्रत्यग्धामनि कामचारविषयादष्टाङ्गयोगाङ्कुशे-
नाकृष्य प्रतिबध्नतामपि सताम् च्चैर्मनोवारणम्
तोकं नाम यदेकमस्ति तदलं मोहाय वस्त्वन्तरं
ब्रह्मज्ञस्य ममापि मज्जति यतश्चेतो ममत्वाम्बुधौ ॥ ३.२०

७ भर्ता कामं भवतु भवने वा वने वा वनेऽपि
प्रायेणास्तु क्वचन विषयः सम्पदामापदां वा ।
स्वच्छन्दो वा भवतु परतन्त्रोऽथवा सर्वथापि
च्छायेवैनं प्रतिलगति या केवलं सैव साध्वी ।। ३.२९

८ भाविन्येव यदृच्छयापि निपतत्यर्थे प्रभूणां मनः । ५.१२

९ किं पुनरहो दुस्साधमुत्साहिभिः ?

१० यः साधौ गुणिनि स्थितो गुणगणः श्लाघ्यस्सतां जायते
सम्पूर्णोऽपि स एव शोच्यतमतामायात्यसाधौ स्थितः ।
सान्द्रं चन्दनजन्म यन्मृगदृशां वक्षोरुहे भूषणं
पाण्डुत्वं हि तदेव हन्त भवति श्वित्रोद्भवं दूषणम् ।। ६.४४

## लोकोक्तयः

१ वेत्त्यद्यापि महार्घतां कथमहो शुक्तिर्न मुक्तामणेः ?
२ न खलु माधवीलता उद्भिन्नमात्रे पल्लवानि दर्शयन्ति ।
३ महानद्यो महोदधिं वर्जयित्वा क्वान्यत्र विश्राम्यन्ति ?
४ नन्वेषानभ्रा सुधावृष्टिः ।
५ एष कपटनाटिकानान्दीप्रस्तावः ।

## नाट्यकला

अस्य नाटकस्य कथावस्तु रामायणाद्गृहीतत्वात्प्रख्यातमस्ति । नाटककारेणानेकेषु स्थलेषु मूलकथायां परिवर्तनं बिहितम् । अस्य नाटकस्य नायको रामो धीरोदात्तः विद्यते । अस्मिन्नाटके शृङ्गारसस्यैव प्राधान्यं विद्यते । वस्तुप्रपञ्चनमत्र नाटयशास्त्रनियमानुकूलमेवास्ति । नाटककारेण शास्त्रविहिता पात्रोचिता भाषैव प्रयुक्ता । कविना यथास्थानं विष्कम्भकप्रवेशकचूलिकादीनामर्थोपक्षेपकाणां प्रयोगः कृतः । संवादेष्वपि कविना स्वकौशलं प्रदर्शितम् । संवादाः प्रायशः संक्षिप्ता बोधगम्या जिज्ञासावर्धकाश्च सन्ति । अस्मिन्विषये एस० के० पिल्लइ-महोदयानां मतमत्र समुद्ध्रियते—

"Like several other Sanskrit Nāṭakas, Sītārāghava also deserves greater praise as a poetic work. Pāṇivāda shows himself at his best in this work as a master of ornate expression".
Introduction to Sītārāghava, P. 6

रामपाणिवादस्य नाट्यकलाविषयेऽपि पिल्लइमहाभागानां विचाराः द्रष्टव्याः-

"Pāṇivāda has succeeded in an eminent degree in securing dramatic effectiveness in the presentation of plot. No doubt he borrowed the story from Rāmāyaṇa but the presentation is largely original. No great claim can be made in the matter of characterisation although the delineation of Māyāvasu certainly deserves praise. Pāṇivāda's special skill lies in creating and handling situations commendable for their theatrical effect".

Introduction to Sītārāghava, P. 5–6.

एको महान् दोषो वर्ततेऽस्मिन्नाटके । स तु घटनानां संकथनानाञ्च महत्संकलनमेव । इदं संकलनं नाटकीयतामेव विलोपयति ।

## बालमार्तण्डविजयम्

नाटकमिदं देवराजकविना विरचितम् । शेषाद्रिपुत्रोऽयं कविः केरलप्रदेश आश्रमाभिधेये ग्रामेऽष्टादशशतके न्यवसत् ।[1] अयं कविस्त्रिवाङ्कुरशासकस्य बालामार्तण्डवर्मण (१७२१–१७५८ ई०) आश्रितोऽभूत् । कविना स्वाश्रयदातुर्बालमार्तण्डवर्मणो दिग्विजयो वर्णितः । बालमार्तण्डवर्मणास्मै कवये "नवकालिदास" इत्युपाधिः प्रदत्तः । देवराजो बालमार्तण्डवर्मणो भागिनेयस्य कार्तिकतिरुणालरामवर्मणो मित्रमासीत् ।

### कथावस्तु

शङ्खतीर्थे जपं कुर्वतः राज्ञः समक्षं प्रकटीभूय पद्मनाभेन किञ्चित्सन्दिष्टम् । तदनुसृत्य राजा मन्त्रिणो कथयति–अहं स्यानन्दूरपुरे जीर्णस्य पद्मनाभमन्दिरस्योद्धारं कुर्याम् । अस्य जीर्णोद्धारकार्यस्य बहुव्ययसाध्यत्वादहं भारतवर्षीयान् राज्ञः पराजित्य तेभ्यो धनं प्राप्यास्मिन्कार्ये समर्थो भविष्यामि । जीर्णोद्धारानन्तरं मया राजसूयविधिनाभिषिक्तः पद्मनाभः मम राज्यभारं ग्रहीष्यति, अनन्तरमहं पद्मनाभस्य युवराजरूपेण निवत्स्यामि । बालमार्तण्डवर्मा पद्मनाभस्येममादेशं पालयितुं स्वचिन्तां प्रकटयति । राजा दिग्विजयाय सेनासन्नाहार्थममात्यानादिशति ।

द्वितीयाङ्के राजा मार्तण्डवर्मा विजयप्रयाणसमये ब्राह्मणेभ्यः स्वर्णं धेनवश्च

---

1 K. K. Raja, Contribution of Kerala to Sanskrit literature, P, 168.

वितरति । राजा यथोचितेन दानेन सम्मानेन च स्वसेनापतीन् तोषयति । स्ववियोगव्यथितानां पुरवासिनां विनोदाय मार्तण्डवर्मा स्वभागिनेयाय रामवर्मणेऽभिनव-कालिदासविरचितं दिग्विजयनिबन्धनं दत्त्वा तमाज्ञापयति यत् स पाठककुलाचार्येण रङ्गरञ्जकेन तद्रङ्गे पाठयतु । मार्तण्डवर्मणः दिग्विजयप्रस्थानकाले बहूनि शुभानि शकुनानि भवन्ति । राजा दिग्विजयनिबन्धनकर्तारमभिनवकालिदासं बहुसम्मान्य तस्मै पारितोषिकरूपेणाग्रहारद्वयमर्पयति ।

तृतीयाङ्के पाठकः रङ्गरंजकः विरहाकुलानां पुरवासिनां समक्षं दिग्विजयाख्यं निबन्धनं पठति । युवराजः रामवर्मापि तत्र पाठं शृणोति । पाठकेन पठितात्तस्मान्निबन्धनाद्बालमार्तण्डवर्मणः दिग्विजयवृत्तं पौराः विजानन्ति । दिग्विजयाद्विपुलं धनं प्राप्य तीर्थयात्राञ्च कृत्वा मार्तण्डवर्मा स्वराजधानीं प्रतिनिवर्तते । निबन्धनं श्रुत्वातीवमुदिताः पौरजनाः पाठकं बहुमन्यन्ते ।

चतुर्थाङ्के मार्तण्डवर्मा पद्मनाभमन्दिरस्य जीर्णोद्धारं कारयति । जीर्णोद्धारे सम्पन्ने राजा शिल्पाचार्येणामात्यैश्च सहितः मन्दिरसौन्दर्यं पश्यति ।

पञ्चमाङ्के मार्तण्डवर्मा तन्त्रज्ञेन सोमयाजिना पद्मनाभाभिषेकं कारयति । अभिषिक्तं पद्मनाभं दृष्ट्वा राजा तं स्तौति । पद्मनाभः राज्ञः राज्यभारं स्वीकृत्य तं युवराजपदे नियोजयति । अनन्तरमाचार्याः पद्मनाभस्य पूजाहोमादिकं सम्पादयन्ति । राजा भद्रदीपमण्डपं प्रविश्य कवीन् सम्मन्यते । अनन्तरं राजादेशानुसारं राज्याधिकारिणः ब्राह्मणेभ्यः भोजनं, धनं धेनवश्च वितरन्ति । राजा महाभिषेककर्तृभ्य आचार्येभ्यः स्वर्णमणिपीताम्बरादिकं दक्षिणारूपेण ददाति । अनन्तरं राजाभिनवकालिदासं सम्मन्यते । अभिनवकालिदासः स्वर्णमणिमण्डितां कन्यकास्वरूपिणीं स्वकृतिं राज्ञे समर्पयति । सशिष्यः राजगुरुराचार्याश्चाभिनवकालिदासाय मणिमयवलयान्याभूषणानि वस्त्राणि चोपहारस्वरूपेण प्रयच्छन्ति । राजाचार्यान्प्रति कृतज्ञतां प्रकटयति । भरतवाक्यानन्तरं नाटकस्यावसानं भवति ।

राजा मार्तण्डवर्मास्य नाटकस्य नायकः स धीरोदात्तकोटिकोऽस्ति । अत्र सप्तत्रिंशत्पात्राणि विद्यन्ते । अत्यधिकेयं संख्याभिनयदृष्ट्येति निर्विवादम् । नाटकरचयितापि पात्रभूतोऽस्मिन्नाटके । नाटककारेण मार्तण्डवर्माभिनवकालिदासकुमाररामवर्मशिल्पाचार्याणां चित्रणं सुष्ठु कृतम् ।

नाटकेऽस्मिन् शान्तरसस्य प्राधान्यं विद्यते । मार्तण्डवर्मणः पद्मनाभभक्तिरत्र सर्वत्र व्याप्तास्ति । मार्तण्डवर्मणः मतेऽपि नाटकमिदं भक्तिपूर्णं विद्यते । यथा—

भगवद्गुणमाधुर्यं नाटकाख्यं नवं मधु ।
अस्यास्यपङ्कजोद्भूतं विद्वद्भृङ्गमदावहम् ॥ ४.११६

अस्मिन्नाटके वीररसः शान्तरसस्य सहचारी अस्ति । मार्तण्डवर्मा शौर्येण बहून् राज्ञः पराजित्य तेभ्यो विपुलां धनराशिं प्राप्य पद्मनाभमन्दिरस्याभिनवीकरणं समायोजयति ।वीररसः तृतीयाङ्के वर्तते । चतुर्थाङ्के मरालिकासारिकयोः वार्तालापे हास्यरसः विद्यते ।

के०'साम्बशिवशास्त्रिणां मतेऽस्मिन्नाटके वीररसस्य प्राधान्यं विद्यते ।[1]

## वर्णनकौशलम्

नाटककारेण मध्याह्नपद्मतीर्थसागरतटाकशरदां वर्णनं रसभावानुकूल्येन कृतम् । तथाहि,

भूत्वा वह्निकुलाद्भवानिव महापाथोनिधेर्भानुमान्
भूभृन्मौलिपदं प्रगाह्य जगतामुन्मेषमुद्भाव्य च ।
सर्वाशापरिपूरणं प्रकलयन्नोघैर्वसूनामयं
माध्यस्थ्यं वहते समस्तभुवनोत्तुङ्गः प्रतापाकरः ॥ १.४१

आशामण्डलपातिनः प्रविततान् रश्मिप्रतानान् निजान्
बिभ्राणो निपुणोपधार्यसविधच्छिन्नाभ्रविभ्राजितः ।
प्राप्तो मध्यमयं दिवो दिनमणेर्दृश्येत चेत् सन्ततं
दूरोद्यच्चतुरन्तदीप्रपरिधिस्तस्योपमामर्हति ॥ ६.१४

चञ्चन्मारुतपोतकाकुलमहामुक्तासरोदञ्चित-
क्षौमोल्लोचकमध्यभासुरमहानीलप्रभामंजरी ।
वल्गद्वीचिसमूहसान्द्रकलशाम्भोधिस्फुरत्पन्नग-
प्रौढोपर्यधिशायिशार्ङ्गधनुषः सौन्दर्यमालम्बते ॥ ४

समुद्रोऽपि भगवद्भक्तरूपेण चित्रितः । यथा—

विलोकयतु सादरं वरुणपालनीयां दिशं
यदत्र वरुणालयो यमितवीचिहस्तांजलिः ।
प्रतीरमुपयाति च प्रणमतिं स्खलद्यन्ततो
भक्तानिव विराजते भगवदंघ्रिभक्त्याकुलः ॥ ४.५२

तटाकोऽत्र पद्मनाभरूपेण चित्रितः । यथा

---

1 Vide, Preface to the edition of "बालमार्तण्डविजयम्" by K. Sambasiva Sastri, p. 9–10

नाभिप्रदेशसंफुल्लमहानालीकभासुरः ।
तटाकोऽयं विभात्येष पद्मनाभ इव प्रभुः ।। ४.१२

दूरीकृतवकयूथो मधुकरकुलगीतवैभव इदानीम् ।
राजति राजहंसः परिमलमकरन्दमेदुरे पद्मे ।। १.३

## भाषाशैली

कविना सरलैव भाषा व्यवहृता । वाक्यानि लघूनि पदानि च समासहीनानि विद्यन्ते । यत्र तत्र वाक्यानि दीर्घाणि समासान्तपदैश्च संयुतानि सन्ति । पञ्चमाङ्के चतुर्विंशपंक्तिव्यापिन एकस्य वाक्यस्य प्रयोगः कृतः । कविर्गद्ये पद्ये च समानरूपेण सिद्धहस्तोऽस्ति । कविनैकया प्रहेलिकया स्वनाम सूचितम् यथा—

परस्परादेशतया प्रयुक्तहलवर्णकत्वाद्धृतवेदरूपम् ।
स्वकीयनामाद्यपदं वहन्तं बाले ! कविं वेत्सि हि राजचूडम् ।। १

प्राकृतभाषायामपि कविः प्रवीणः । तेनात्र बहूनि प्राकृतानि पद्यानि प्रयुक्तानि, परन्तु प्राकृतमिदं कृत्रिमं विद्यते । कविना केवलं शास्त्रमर्यादापालनार्थमेवास्य प्रयोगः कृतः । भाषा व्याकरणदृण्टया शुद्धास्ति । कविना 'तिमतिमायन्ते' 'काननचन्द्रिकायते' इत्यादीनि क्रियापदान्यपि प्रयुक्तानि ।

कविना सूक्तिभिः लोकोक्तिभिश्च भाषा प्रभावशालिनी कृता ।

## सूक्तयः

१. राज्येन किं भवेत्पुंसो महामोहप्रदायिना
यस्मिन् निविशमानस्य हरिभक्तिर्दवीयसी ।। १.२०

२. यः स्वधर्मपरित्यक्तः प्रत्यवायनिधिर्भवेत् । १.२१

३. आततायिवधो युद्धे राज्ञां धर्मः सनातनः ।
संशयेन कृतं देव ! प्रमाणं तत्र फल्गुनः ।। ६.१०

४. मृगेन्द्रबालकेनापि हन्यन्ते किं न कुञ्जराः । २.१५

५. कार्यकाराः शतं सन्तु राज्ञां किं तैर्यशोभवेत् ।
साधयन्ति च ये कार्यं ते यूयं सम्मता मम ।। ४. १

६. उत्तुङ्गवीचिधाटीभिरुद्धतोऽपि पयोनिधिः ।
वेलां न लङ्घते तद्वद्राजाज्ञां राजसेवकः ।। ४.१३

# कालिदासकाव्येषु कलायाः प्रकृतिप्रभावौ

*डा० कु० मिनति चक्रवर्ती*

कलासु प्राकृतिकवस्तूनि पुनः संघटितानि भवन्त्युद्घाटितानि वा । दुष्यन्तेन तपोवनशोभा चित्रकलामाध्यमेन[1] पुनः संघटिता, तथा च प्रणयोत्कण्ठितायाः शकुन्तलाया हृदयावेगः काव्यकलामाश्रित्योद्घाटितः[2] ।

जीवने जगति च परिव्याप्तमिदं वस्तुदर्शनमेव कलायास्तथ्यदर्शनम् । किन्तु कलाकारस्य तथ्यदर्शनं दार्शनिकानां तथ्यदर्शनात्किञ्चिद् भिन्नम् । कल्पनाविलासिनः कलाकारस्य तथ्यदर्शनं सरसं मञ्जुलं च भवति, न तु तर्ककर्कशम् । सौन्दर्योन्मुखः कलाकारस्तर्कजातान् स्थूलदोषानुपेक्ष्य कल्पनालोके विलसति[3] । अतस्तस्य दृष्टिर्धूमज्योतिःसलिलमरुतां सन्निपातं निष्प्राणमपि मेघं कुशलचारुरूपेणाविष्करोति ।[4] तस्य तथ्यदर्शनपद्धतिरपि सर्वथा भावनामूला भवति । मधुकरीवृत्त्यासौ रम्याण्यन्विष्य तान्यात्मसात्करोति । तत्त्वान्वेषणपरः स दूरे स्थित्वा नापेक्षते समयम् ।[5]

कला भिन्नरुचेर्जनस्य बहुधाप्येका समाराधिका, यतो नाम कलासु त्रैगुण्योद्भवानि नानारसानि लोकचरितानि, हृदयसंवेदना भावाश्च प्रकाश्यन्ते ।[6]

सौन्दर्यसाधनायां तल्लीनोऽयं कलाकारः । सौन्दर्यस्य त्रयो धर्माः नेत्रप्रसादनम्, चित्तहरणम्, निष्कालुष्यञ्च । शैवलानुबिद्धं सरसिजमिव सर्वावस्थासु

---

१—शाकुन्तलम् ६/१७,१८ ।

२—तत्रैव ३/१४ (तव न जाने हृदयं······)

३—पूर्वमेघस्य चतुर्दशश्लोकस्य मल्लिनाथकृता श्लिष्टा व्याख्यात्रानुसंधेया । (स्थानादस्मात्सरसनिचुलाद्········ इत्यादौ)

४—पूर्वमेघे पञ्चमः श्लोकः (धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः) ।

५—"वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती" शाकुन्तलम् १/२२ ।

६—मालविकाग्निमित्रम् १ श्लोकः ४ ।

रमणीयमिदम् ।[१] तस्य दर्शनं हि नेत्रयोः साफल्यम् ।[२] तपसा लभ्यं सौभाग्यं चारुताया वशीकरणधर्मो येन सा सफलीभवति ।[३] अन्यथा केवलं कामसाधनभूतं रूपं निन्दनीयम् ।[४] पापवृत्तये न रूपम् ।[५] पुण्यप्रकाशैरेव तस्य विकासः सम्भवति, अत एव तपसाभितप्तमुमामुखं रम्यतरं बभूव ।[६]

सौन्दर्यं विषयप्रेरितं विषयप्रेरकं च भवति । अतो हि विषयव्यावृत्त-कौतूहलः पुराणो मुनिः कथं रूपस्रष्टा भवेदिति सन्देहो जायते[७] । कलाकारो विषयान्न जुगुप्सते । अपि तु सर्वान्तःकरणैस्तानात्मसात्करोति ।[८] मुनिमानसमपि विषयोन्मुखं करोतीयं रमणीयता । उमारूपेण महायोगिनः शङ्करस्यापि चित्तं क्षुब्धं संजातम्[९] । सर्वकल्याणप्रदं गार्हस्थ्यमेवैतद्रूपस्य परमं लक्ष्यम् । गार्हस्थ्यमिदं ब्रह्मचर्यादप्यभ्यर्थनीयम् । तदेव यदसुरोपरि सुराणां विजय-मुद्घोषयति ।[१०]

अलौकिकप्रभामण्डितं पुण्यप्रभावं सुदुर्लभमिदं सौन्दर्यम् ।[११] पुण्यानामखण्डं फलमिव[१२] खलु कोऽपि भाग्यशाली तस्य दर्शनं लभते । सौन्दर्यानुभूतेर्महत्क्षणं स्वप्नवत्क्षणिकमिन्द्रजालवदविश्वसनीयं भ्रमवद् वा ससन्देहं भवति ।[१३] कलासु इदमेव सौन्दर्यं कलाकारस्य प्रतिभाया अध्यवसायेन शाश्वतं सर्वग्राह्यं

---

१ —शाकुन्तलम् १/१६ ।

२—"अनवाप्तचक्षुःफलोऽसि येन त्वया दर्शनीयं न दृष्टम् ।"

शाकुन्तलस्य द्वितीयेऽङ्के ।

३—"प्रियेषु सौभाग्यफला हि चारुता ।" कुमारसम्भवम् ५।१ ।

४—"निनिन्द रूपं हृदयेन पार्वती" । तत्रैव।

५—"पापवृत्तये न रूपमित्यव्यभिचारि तद्वचः" । कुमार० ५/३६ ।

६ —"तथाभितप्तं सवितुर्गभस्तिभिर्मुखं तदीयं कमलश्रियं दधौ" । कुमार० ५/२१ ।

७—"वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः" । विक्रमोर्व० १/१० ।

८—शाकुन्तलम् १/२२ ।

९—"हरस्तु किञ्चित्परिलुप्तधैर्यः……॥" कुमारसंमवम् ३/६७ ।

१०—कुमारसंमवम् सर्गः २/५९/६१ ।

११—"मानुषीषु कथं वा स्यादस्य रूपस्य संभवः………।" शाकुन्तलम् १।२४।

१२—"अखण्डं पुण्यानां फलमिव………॥" शाकु० २ । १० ।

१३—"स्वप्नो नु माया नु मतिभ्रमो नु………॥" शाकु० ६ । १० ।

च क्रियते । क्षणमङ्गुरा पार्थिवशोभापि शाश्वतायाः कलायाः संसर्गेणाजरामरत्वं लभते जनमानसं प्रीणयति च । यथा मेघस्य सान्ध्यशोभा नृत्यारम्भे पशुपतेरार्द्र-नागाजिनस्थानापन्ना सत्यममरत्वं लभते भवानीं प्रीणयति च ।[१] कलाकारो जगति जीवने च विकीर्णान् दुर्लभान् सौन्दर्यकणानाहृत्याहृत्य[२] तान् कलारूपेण परिणमयत्युद्वेजितं जनमानसं प्रसादयति च । अथ किं रूपस्रष्टा स हि विधाता ।

कलाकारः सुन्दरमुपास्ते । सौन्दर्येषु शिवत्वं निवसति[३] । शिवत्वं हि परमसत्यमस्मिन् जगति । अत एव कलासु सत्यं शिव सुन्दरमेव प्रतिभाति ।

सुवर्णधर्मिणीयं कला । यथा "हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा" ।[४] तथैव विद्वद्भिरालोचनाग्नौ विशुद्धिकृता हि कला श्लाघनीया । सुशिष्यपरम्परामाश्रित्य कला विकसति । यतः "पात्रविशेषे न्यस्त गुणान्तरं व्रजति शिल्पमाधातुरिति" ।[५]

उत्सवानन्दसहचारिणीयं कला । अतो नागरिकजीवने तस्या अधिकम्महत्त्वं दृश्यते । कालिदासीये युगे जनतातीव कलानुरागिणी प्रतीयते । तदा यत्र-कुत्राप्याविष्कृता कलाप्रतिभा विकाससुयोगमलभत । तथा हि बन्दीकृताया अपि मालविकायाः कलाप्रतिभा सुविकासिता ।[६] जीविकासघर्षलिप्तेन कलाकारेण कलायाः सम्यगनुशीलनमसंभवमतः कलाकारा राज्याश्रिता आसन्[७] ।

मानवजीवनोपरि कलाया बहुमुखः प्रभावो दृश्यते । त्रिविधोऽयं प्रभावः शारीरिको मानसिक आध्यात्मिकश्च । नृत्याभ्यासेन कलाकारस्य शारीरिकसौष्ठवं वर्धते । नृत्यपराया अङ्गनायाः सौन्दर्यं यत्र-तत्र वर्णितं कविना । मालविकायाः सर्वाङ्गसुन्दरं वपुः कस्यापि नर्तकस्य साकारकल्पनेति सुष्ठु भणितम् ।[८]

---

१—"नृत्यारम्भे हर पशुपतेरार्द्रनागाजिनेच्छा.........॥" पूर्वमेघे ४० ।
२—"सर्वोपमाद्रव्यसमुच्चयेन......॥" कुमार० १ । ४६ ।
३—"भर्तुः कण्ठच्छविरिति.........।" पूर्वमेघे ३७ ।
४—"काञ्चनमिवाग्निषु.........॥" मालविका० २ । ६ । रघु० १ । १० ।
५—मालविका० १ । ५ । ६ ।
६—"तेन शिल्पाधिकारे योग्येयं दारिकेति.........॥" मालविका० १ ।
७—"देवीपरिग्रह एव मे वृद्धिहेतुः ।" मालविका० २ ।
८—"छन्दो नर्तयितुर्यथैव मनसि श्लिष्टं तथास्या वपुः ।" मालविका ० २ । ३ ।

नृत्यशिल्पिनां स्वाभाविकगतमपि कान्ततरं भवति ।[1] नृत्यमुद्रासु शारीरिक-स्वास्थ्यस्य योजना निहितास्ति । संगीताभ्यासेन स्वरो मधुरतरो लययुक्तश्च भवति[2] । शिल्पिनां कुशलकर्मशक्तिरप्यनायासेन वर्धते । प्रसाधनकलया मानवशरीरं परिष्कृतं लावण्यमण्डितमाकर्षकं च भवति ।

कलाकारस्य चित्ते[3] हि कलायाः प्रथमः प्रकाशो जायते, पश्चात् तूलिकया वाण्या वा तस्या बाह्यस्वरूपं सम्भवति । सृष्टेः प्राक् स्रष्टुर्मानसपटे तस्या ध्यानरूपमुद्भवत्यत एव कलाकारः समाधिस्थो योगीव चित्तस्य चाञ्चल्यं निरुध्य तदेकाग्रं सन्निविष्टं च करोति । अन्यथा शिथिलसमाधिदुष्टा कलौ कान्तिं विसंवदति ।[4]

कलारसिकैरपि सावधानं वर्तितव्यम् ।[5] तन्मयेन हृदयेन दृष्टा कलाकृतिः साक्षादिव प्राणवती प्रतिभाति ।[6] इत्थं कलानुशीलनेन योग इव चित्तवृत्तिनिरोधः सम्भवति येन मानवव्यक्तित्वं विकसति ।

व्याधो यथा हारिणा गीतध्वनिना मृगमनः प्रसभं हरति,[7] तथैव कलाकारः कलासौन्दर्येण मानवहृदयं वशीकरोति । विशेषेण तु ललितकला मानवव्यक्तित्वस्यानुरागपक्षमालोडयति ।[8] अतो हि योगिनां समाधिविघ्नायाप्सरसां नृत्यगीतं प्रयुक्तमासीत् । तथा हि तेषामात्मशक्तिपरीक्षणेऽपि ललितकलाया महत्त्वं स्वीकृतम् ।[9]

तद्गतचित्तेन कलासौन्दर्यं निरीक्षमाणो रसिकः कलानिहितया भावनया सह स्वचित्तमेकीकरोति । यथा करुणं गीतध्वनिं श्रुत्वेष्टजनविरहादृतेऽपि जनो बलवदुत्कण्ठितो भवति, सर्वथा सुखितोऽपि स विश्वव्यापिनीं वेदनामनुभवति

---

१—"नृत्यादस्याः स्थितमतितरां कान्तम्......।।" मालविका० २ । ६ ।
२—"कलविशुद्धाया गीतेः स्वरसंयोगः श्रूयते ।" शाकुन्तलम्० ५ ।
३—"चित्ते निवेश्य" । शाकुन्तलम् २ । ९ ।
४—मालविकाग्निमित्रम्० २ । २ ।
५—"अवधानात्...... ।" विक्रमोर्वशीयम् ० १ । २ ।
६—"दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन ।" शाकु० ६ । २१ ।
७—"गीतरागेण हारिणा प्रसभं हृतः...... ।" शाकु० १ । ५ ।
८—"रागनिविष्टचित्तवृत्तिरालिखित इव सर्वतो रंगः ।" शाकु० प्रस्तावना ।
९—"आत्मेश्वराणां नहि जातु विघ्नाः......।"कुमारसंभवम् ३ । ४० ।

वा ।[1] इयं हि स्वार्थभावनामुक्तिः कलायाः लक्ष्यम् ।

हृदयगुहानिहिताः प्रच्छन्नभावाः कलाद्वारेण प्रकटीक्रियन्ते । यथा चतुष्पदवस्तुकं द्वारीकृत्य राज्ञीउपस्थितात्मा मालविकेति वर्णितम् ।[2] देव्या वसुमत्या संगीतद्वारेण स्वभर्त्रे महदुपालम्भनं दत्तम् ।[3] वासनानामनावश्यकदमनेन व्यक्तित्वं विघटितमसन्तुलितं भवतीत्यधुनापि स्वीक्रियते । इतरेऽपि मानवाः कलाश्वभिव्यक्तान् भावानुवान् गृहीत्वा स्वव्यक्तित्वं निष्पादयन्ति ।

विदुषां परितोषो हि कलायाः साफल्यम् ।[4] अतः कलाकारः स्वभावेन परप्रसादनपरोऽवलेपरहितश्च भवति । सर्वत्र सौन्दर्यमेव संचिनोति सः, कुरूपतायाश्च जुगुप्सते । तथाहि स्वसाधनया जनमानसं सौन्दर्योन्मुखं जगच्चारुतरं जीवनं मधुरतरञ्च करोति । कलाया मानसप्रभावोऽयम् ।

आत्मन्यपि कलायाः प्रभावो दृश्यते । कलासाहचर्येणात्मनः संस्काररूपेण पर्यवसितानि जननान्तरसौहृदानि स्मरति जनः ।[5] अयं ह्यात्मबोधः कलाकृत्या संभवति । कलाप्रतिभायाः साफल्यमीश्वरार्पणबुद्धौ निहितम् । यावत्कला केवलं केलिविनोदसाधनं तावत्सा निष्फला । कामरूपोऽपि मेघः स्वामन्द्राणां गर्जितानामविकलं फलं तदैव लभते यदा शूलिनः सान्ध्यपूजायां सम्मिलति ।[6] न केवलं वसुधायै पुलकप्रदानेनापितु भगवदाराधनया हि तस्य संगीतरवः सार्थको भवति । वारयोषिदपि स्वविलासकलङ्कितं जीवनं देवपूजायां स्वकलां नियोज्य पवित्रीकरोति ।[7] तस्या विलासक्षतानि नववर्षाया वारिबिन्दुनेड्वेश्वरीयवरदानेन निरामयन्ति[8] ।

कलाकारस्याखण्डसमाधेरुद्भूता सौन्दर्यमयी कला कलुषप्रदा कथं स्यात् । सा ह्यपवित्रस्थानेभ्यो संगृहीतानि वस्तून्याश्रित्यापि परमपावनेति नात्रसंशयः ।

---

१—शाकुन्तलम् अङ्क ५ । २ । (इष्टजनविरहादृतेऽपि । तत्रैव)

२—मालविकाग्निमित्रम् अङ्क २ ।

३—शाकुन्तलम् अङ्क ५ ।

४ - आपरितोषाद् विदुषां न साधु मन्ये प्रयोगविज्ञानम् । शाकु० । १ । २

५—शाकुन्तलम् । ५ । २ ।

६—पूर्वमेघे श्लोक ३८,

७—पूर्वमेघे श्लोक ४० ।

८—संसक्ताभिस्त्रिपुरविजयो गीयते किन्नरीभिः । पूर्वमेघे श्लो० ६० ।

कलासु शुभङ्करी शिवशक्तिर्विराजते, ब्रह्मानन्दसहोदरपरमानन्दस्य जनयित्री । अतोहि नटराजस्य नृत्याभिनयक्रियाच्युतं चिताभस्मरजोऽपि देवैर्मस्तकेष्वालिप्यते[1] ।

देवमूर्तीनां देवमन्दिराणाञ्च निर्माणमाध्यात्मिकसाधनाया अङ्गभूतम् । मूर्तिषु कलासाधकः ध्यानावस्थितचित्तेनारूपाय रूपं प्रददाति । प्रतिमागृहेषु चासीमानन्तं विश्वरूपमनन्यभावेन बन्दीकरोति । सृष्टिकर्तुर्या चिरन्तनी कला तया सह स्वप्रतिभाया एकीकरणमेव कलाकारस्य चरमं लक्ष्यम् ।[2] तदैव कला सर्वाङ्गसम्पूर्णा यदा सा देवानां दानवोपरि विजयं गायति ।[3] एतद्रूपा हि कला देवानाँ प्रीतिदायकः शान्तः यज्ञः ।[4] अतो यज्ञमूले भारतीयजीवने कलायाः स्थानमपरिहार्यमिति स्पष्टम् ।

---

१—पूर्वमेघें श्लोक ३६,

२—मालविका० १ । ४ ।

३—तत्रैव ( वेश्यास्त्वत्तो नखपदसुखान्

४—कुमारसंभवम् ५ । ७६ ।

# कर्णपूरः तस्य चैतन्यचन्द्रोदयं नाटकञ्च

*गणेश प्रसादः*

चैतन्यचन्द्रोदयं नाम नाटकं कविना कर्णपूरेण विरचितम् । 'कवेर्वास्तविकं नाम परमानन्ददास आसीत्' कर्णपूरस्त्वस्योपाधिः । नाटकस्य प्रस्तावनाया इदं स्वयमेव स्फुटीभवति-यत्

"श्रीकृष्णचैतन्यस्य प्रियपार्षदस्य शिवानन्दसेनस्य तनुजेन निर्मितं परमानन्ददासकविना विनाशितहृत्कषायतिमिरं श्रीचैतन्यचन्द्रोदयं नाम नाटकमभिनीय समीहितहितमस्य नृपतेः करिष्यामि"[1]

नाटकस्य भूमिकयापि इदं प्रमाणितं भवति "श्रीकृष्णचैतन्यपार्षदस्य वैद्यवंशीयशिवानन्दसेनस्य तनूजन्मा परमानन्ददासाभिधानो महाकविरयं वंगप्रदेशे काञ्चनपल्लीग्रामे १५२४ ख्रिस्ताब्दे जन्म लेभे"[2]

चैतन्यदेवःकवेःर्बाल्ये निर्मितं कंचित् श्लोकं श्रुत्वा तस्याद्भुतां कवित्वशक्ति विलोक्य सोल्लासः कवये 'कर्णपूर' इत्युपाधिं ददौ । स श्लोकः

'श्रवसोः कुवलयमक्ष्णोरञ्जनमुरसो महेन्द्रमणिदाम
वृन्दावनरमणीनां मण्डनमखिलं हरिर्जयति "[3]

श्लोकेऽस्मिन् श्रवसोः कुवलयमित्येव पदद्वयं कर्णाभरणार्थसूचकत्वात् चैतन्यदेवेनैतदुपाधिप्रदाने बीजभूतम्'

अन्येऽपि ऐतिह्यविदो विद्वांसः कवेः 'कर्णपूर' इति नामोपाधिं मत्वा तस्य वास्तविकं नाम परमानन्ददास एवेति प्रमाणीकृतवन्तः । स्वेतिहासग्रन्थे श्रीवाचस्पतिगैरोला महाशयः स्वाशयमित्थं प्रकटयति'

" कवेरस्य नाम परमानन्दसेनः तथोपनाम कविः 'कर्णपूर' इत्यासीत् । अस्य वैद्यवंशीयपितुः शिवानन्दसेनस्य गणना प्रसिद्धवैष्णवेषु आसीत् । अयं

---

१—चैतन्यचन्द्रोदय, अंक १ पृ० ३

२—चै. च. भूमिका सं० केदारनाथ-वासुदेव-लक्ष्मणशास्त्री-पणशीकरौ ।

३ – चै. च. भूमिका. पृ. १

वंगदेशस्य हुगलीमण्डलान्तर्गतस्य काञ्चनपल्लीग्रामस्य निवासी बभूव ।[१] अमुमेवाशयं बलदेवोपाध्यायोऽपि समर्थयति ।

**स्थितिकालः**

नाटकस्य रचना १४०७ शाके १५७१ ख्रिस्टाब्दे अभवत् । नाटकस्यान्तिमेन श्लोकेनेदं स्पष्टं ज्ञायते ।

"शाके चतुर्दशशते रविवाजियुक्ते
गौरो हरिर्धरणि-मण्डलमाविरासीत् ।
तस्मिंश्चतुर्नवतिभाजि तदीयलीला
ग्रन्थोऽयमाविरभवत् कतमस्य वक्त्रात्" ॥[२]

नाटकस्य रचनाकाले कविः पञ्चपञ्चाशद्वर्षवयस्क आसीत् ।[३] 'चैतन्यचरितामृतं' नामापरं महाकाव्यमपि कविनानेनैव निर्मितं वर्तते । तस्मिन्नपि तेन रचनाकालोल्लेखः कृतः ।

"वेदारसा श्रुतय इन्दुरिलि प्रसिद्धे,
शाके तथा खलु शुचौ सुभगे च मासि,
वारे सुधाकिरणनाम्न्यसितद्वितीया-
तिथ्यन्तरे परिसमाप्तिरभूदमुष्य ॥[४]

काव्यमेतदष्टादशवर्षवयस्केन कविकर्णपूरेण १५४२ ख्रिस्ताब्दे निर्मितमिति तदीयान्तिमश्लोकेनावगम्यते ।

श्रीराजेन्द्रलालहरिमोहनप्रभृतयः केचिद्विद्वांसः १४९४ शाके (१५७३ ई०) निर्माणकालं नाटकस्य मन्यन्ते ।

आफ्रेक्टस्तु चैतन्यचरितामृतकाव्यस्य निर्माणानन्तरमेवास्य रचनाकालं

---

१—संस्कृत-साहित्येतिहासः वाच. गैरोला पृ. ३२

२—चै. चन्द्रो: पृ. २०७

३—कपिलेश्वर-देवात्मजपुरुषोत्तमदेवसेनोर्नीलगिर्यधीशस्य गजपतिप्रतापरुद्रदेवस्याज्ञया निर्मितमेतदिति प्रस्तावानायां स्फुटमेव । १५७६ ख्रिस्ताब्दे पञ्चपञ्चाशद्वर्षवयस्केन कविना निर्वर्तितमेनदित्युपयुक्तपद्येन स्पष्टंभवति- चै, च. भूमिका पृ. ३

४ – चै. च. भूमिका पृ. २

स्वीकरोति । तन्मते नाटकस्य समयः १५४३ ई० वर्तते ।[1]

कवेः रचना अधोलिखिताः

१ चैतन्यचरितामृतं काव्यम्- १५४२ ख्रिस्टाब्दीयः
२ आर्याशतकम्
३ आनन्दवृन्दावनचम्पूः
४ चमत्कारचन्द्रिका
५ अलंकार-कौस्तुभः
६ कृष्णलीलोद्देशदीपिका
७ गौरगणोद्देशदीपिका
८ वर्णप्रकाशः कोषः
९ चैतन्यचन्द्रोदयं नाटकम् । १५७२ ख्रिस्टाब्दीयः

नाटकमिदं सर्वप्रथमं 'रायल एसियाटिक सोसाइटी' इत्याख्यया संस्थया मुद्रितमासीत् । अनन्तरं निर्णयसागर-मुद्रणालयतः काव्यमालायां ८७ सोपाने मुद्रितमस्ति ।

## चैतन्यचन्द्रोदयम्

नाटकमिदं जगन्नाथक्षेत्रस्य स्वामिनः गजपतिप्रतापरुद्रस्याज्ञया विरचितमिति प्रस्तावनयैव ज्ञायते[2] नाटकेऽस्मिन् देवस्य श्रीकृष्णचैतन्यस्य चरितमाधारीकृत्य भक्तिरहस्यं,-हरिनामसंकीर्तनमेव मोक्षोपायः प्रतिपादितः । प्रतीकात्मकत्वादपीदं लोकाह्लादकरं तथैव वर्तते यथा कालिदासादीनां कृतयः । मानवोनां चित्तवृत्तयोऽत्र पात्ररूपेण समाविष्टाः सन्ति । श्रीकृष्णमिश्रस्य 'प्रबोध-चन्द्रोदयवदत्रापि विविधानि मूर्त्तामूर्त्तपात्राणि सन्ति । किन्त्वत्र किञ्चित्ततो वैशिष्ट्यं वर्तते । प्रबोधचन्द्रोदये सर्वाण्येव पात्राणि अमूर्त्तानि सन्ति, तैः नाटके न तादृशं याथार्थ्यं वर्तते यथाऽस्मिन् नाटके । अस्मिन् केचिन्मूर्त्ता अमूर्त्ताश्च केवलं वर्णाः । स्वयं देवः चैतन्यः पार्षदाश्च तस्य मूर्त्तपात्राणि सन्ति ।

---

१—Caitanyacandrodaya Nataka composed in 1543, Part I P 87

२—परमानन्दे स्नानं देयमपि न कुर्वताऽवताऽवनिभृताऽनिभृताभिलाषेण गजपतिना प्रतापरुद्रेणादिष्टोऽस्मि ।

दर्शनप्रधाने नाटके सति विनोदोऽत्र वर्ण्यते । इदं दशाङ्ककारणात् महानाटक कौटावायाति । प्रतीकनाटकेषु केवलं 'संकल्पसूर्योदयम् ।' चैतन्यचन्द्रोदयञ्च द्वावेव तस्यां कोटौ आयातः । प्रत्यङ्कस्य कथावस्त्वत्र वर्ण्यते ।

कथावस्तु

**प्रस्तावना**–नान्दीपाठानन्तरं सूत्रधारः प्रथमं नाटककर्त्तुः परिचयं दत्वा तात्कालिकस्य राज्ञो प्रतापरुद्रस्य नाटकनिर्माणविषयिणीमाज्ञप्तिञ्च संसूच्य ब्रह्मणि लयस्य वार्त्तां पारिपार्श्विकेन सह करोति वार्त्तायामस्यां 'भक्तिः सिद्धेर्जरीपसी' इति नारदीयपुराणोक्तं वाक्यमुद्धरन् हरिनामसंकीर्तनमेव मोक्ष-साधनं विवृण्वन् तस्याविर्भावकस्य चैतन्यदेवस्य प्रादुर्भावं सूचयति । पुनः चतुर्दिक्षु विततं कलेः प्रभावं वर्णयन्यदा तं निन्दति तदा क्रुद्धः कलिरधर्मेण सह प्रविशति ।

**प्रथमाङ्कः**—कलिरधर्मश्च प्रविश्य तात्कालिकं वास्तविकं समाजं चित्रयतः । तस्मिन् काले शौचाचारतपःक्षमाशमदमविवेकादयः उन्मूलिता दृश्यन्ते । कलिः देवस्याविर्भावं सूचयति । तस्य प्रभावेण दग्धः स त्राणाय चेष्टते । सान्त्वयन्नधर्मः तस्य समक्षं कामक्रोधश्रीमदादीनां वास्तविकं स्वरूपं सूचयति । विषकम्भकानन्तरं देवस्य विविधाः पार्षदा हरिनाम कीर्त्तयन्तः प्रविशन्ति । भक्तिं वर्णयन्तस्ते ब्रुवन्ति - यैः निःश्रेयसायेश्वरस्य हरेः भक्तिरूपाम्बुधौ निमज्जिताः ते संसाररागात्मके कूपादिजले कथं निमज्जिता भविष्यन्ति ।

**द्वितीयाङ्कः**—अस्मिन् विरागः प्रथमं प्रविशन्नेव धर्मस्य वास्तविकं स्वरूपं समन्तात् भ्रमन् दिदृक्षति । किन्तु सर्वतो नैराश्यं प्राप्य समाजे भूयोभ्यः अधार्मिकेभ्यो जुगुप्सते । अनन्तरं भक्तिदेव्या सह धर्मवार्त्तां कुर्वन् देवस्य प्रादुर्भावं सूचयति । हरेरलौकिकीं लीलां लोकाय स्वीकुर्वन्तौ तौ परमानन्दमनुभवतः । अस्मिन् भक्ता त्रिधा -मध्यमोनुरक्त नानुरक्ताविरक्तभेदात् प्रतिपादिताः । आनन्दस्य स्वरूपमपि त्रिधैव भेदैः मूर्त्त-व्याप्त-परिच्छिन्नरूपैर्वर्णितम् । एतेषु रूपेषु परमेश्वरः सविलासः वैराग्याश्रितो भवति ।

**तृतीयाङ्कः**– दानविनोदनामाङ्कितो वर्ततेऽयम् । सर्वे चैतन्यपार्षदा भगवतो श्रीकृष्णस्यालौकिकीं लीलामभिनयन्ति । स्वयं देवो विश्वम्भरः राधिकाया भूमिकां गृह्णाति । उद्यानभूमौ गोपीश्वरपूजनाय व्रजन्त्यः काश्चिदवचितपुष्पाः राधिकायाः सख्यः तथा च कृष्णस्य सखायो गोपाः पुष्पचयनाधिकारचर्चा

कुर्वन्तो विवदन्ति। श्रीकृष्णोऽपि तस्मिन् काले विवादभूमावायाति अनिन्द्य-सुन्दरीं राधां सहसा विलोक्य च सकामो जातः। ईदृश्येवास्ति गती राधिकायाः। किन्तु स्वस्वभावं गूहन्तौ तौ विवदतः। श्रीकृष्ण उद्यानभूमौ स्वाधिकारं प्रदर्श्यावचितानां कुसुमानां करयाचनं करोति। राधा सर्वाणि कुसुमानि तत्सन्निधौ निक्षिपति। किन्तु राधारूपमोहितः कृष्णः कञ्चुकाभ्यन्तरे प्रच्छन्नौ द्वौ हेमकुम्भौ याचते। उभयोः परस्पराकृष्टचेतसोस्तयोः दानयाचनं श्रुत्वा हृदि प्रसन्ना काश्चित् सख्यः तत् प्रत्यक्षं निन्दन्ति। राधा ततो गन्तुकामा भवति। इत्थं परिहासेनैव सर्वे पार्षदाः कृष्णलीलाभिनयं समापयन्ति।

**चतुर्थाङ्कः**-चैतन्यस्य संन्यासग्रहणं प्रस्तौति। आचार्यपत्न्या सह चैतन्यस्य माता शचीदेवी प्रविशति। चैतन्यः मातुः समीपे श्रीकृष्णस्य स्तुतिं कुर्वन् प्रव्रज्याग्रहणेच्छां प्रकटयति। तदाशयं ज्ञात्वा पुत्रस्नेहेन कातरा माता खिद्यते। किन्तु परिव्रजितुमना चैतन्यः स्वनिश्चयात् विचलितो न भवति। एकस्मिन् दिने सर्वान् विहाय याति। तद्रहिताः सर्वे विलपन्ति नित्यानन्दं प्रियपार्षदं चैतन्येन सह ज्ञात्वा किञ्चिदाश्वास्य तस्य मातुः शचीदेव्याः समीपे गच्छन्ति।

**पञ्चमाङ्कः**-अद्वैतपुर विलासनामाङ्कितो वर्ततेऽयम्। अस्मिन् चैतन्यः नित्यानन्देन सह व्रजति। पथि केचित् गोपकुमाराः तं दृष्ट्वा प्रभाविताः 'हरिं वद' इत्युच्चैः रटन्तो दृश्यन्ते। चैतन्यः वृन्दारण्यस्य पन्थानं तान् पृच्छति। पथि यमुनायामवगाहनं कृत्वा ततो गंगातीरे स्थितमद्वैतपुरं प्रथमभिक्षा-ग्रहणाय याति। तत्र कतिचिद् दिनान्युषित्वा स्वदर्शनदानेन भक्तान् संतोष्यातिथ्यं स्वीकृत्य च मथुरां यियासुरपि भ्रमवशाद् भाग्यादेव शान्तिपुरं आयाति। तत्पुरं तु नवद्वीपस्य चैतन्यवासस्थानस्य निकटमेवासीत्। अतस्तत्रैव मात्रा सह सर्वे भक्ता महाप्रमोदर्शनं कुर्वन्ति।

**षष्ठाङ्कः**-सार्वभौमं प्रति महाप्रभोरनुग्रहः वर्णितो वर्ततेऽत्र। प्रथमं प्रवेश-कद्वारेण गंगारत्नाकरद्वयेनामूर्त्तपात्रेण चैतन्ययात्रा सूच्यते। शान्तिपुरतश्चैत-न्यश्चतुर्भिः पार्षदैः सह जगन्नाथक्षेत्रं व्रजति। मार्गे साक्षिगोपालदर्शनार्थं कटकनामधेयां राजधानीं प्रविशति। पुनः जगन्नाथक्षेत्रसमीपमेव कमलपुरनामानं ग्रामं याति। मुकुन्दनामा कश्चित् तस्य पार्षदः तत् क्षेत्रं गत्वा गोपीनाथाचार्यं सूचयति। गोपीनाथः सार्वभौमएव। महाप्रभोरज्ञातप्रभावः सार्वभौमः कुतूहलेन

शङ्कया च तस्य दीक्षागुरोः केशवभारत्या नाम ज्ञात्वा पुनः बन्गाव भवितु वेदान्तस्याध्ययनाय कथयति । अस्मिन्नेव प्रसंगे गोपीनाथेन सह सार्वभौमस्य किञ्चित् शास्त्रार्थो भवति । चैतन्यं प्रति भक्तिरहितं सार्वभौमं विलोक्य गोपीनाथः खेदमावहति । दर्शनदानेन कृतकृत्यं विधाय सार्वभौमाय दर्शनं चैतन्यः ददाति । तस्य दर्शनेन केवलशास्त्रपण्डितस्य सार्वभौमस्याद्भूतैव गतिर्जाता । अकृतस्नानः अकृतमुखप्रक्षालन एव जगन्नाथस्य प्रसादभक्तं गिलति । महाप्रभोः प्रभावेण तद्भक्त्या च उन्मत्त इव तस्मिन् समये स भवति । सार्वभौमानुग्रहं ज्ञात्वा गोपीनाथोऽपि प्रसन्नो भवति । मुकुन्दः सार्वभौमेन विरचितं श्लोकद्वयं महाप्रभोः स्तुतिपरं सर्वान् श्रावयत्यन्ते ।

**सप्तमाङ्कः** चैतन्यस्य तीर्थाटनवर्णनं वर्ततेऽत्र । गजपतिः सार्वभौमं भट्टाचार्य-माहूय चैतन्यस्य यात्रा–विस्तारं पृच्छति । भट्टाचार्यः सूचयति यत् सङ्गिनो विप्राः गोदावरीं प्रयन्ति किन्तु चैतन्यः सेतुबन्धपर्यन्तं गमिष्यति । पुनः कश्चित् विप्रः तस्यैव राज्ञो सदसि प्रविश्य निवेदयति । जगन्नाथक्षेत्रतो कर्मक्षेत्रं तत्र च कर्मनाम्ने विप्राय दर्शनं दत्वा तत्रैव वासुदेवनामानं गलितकुण्ठं ब्राह्मणं स्वकराभ्यामुपवर्यं तस्य कुष्ठं दूरीकृत्य श्रीकृष्णसंकीर्तनं कुर्वन् विप्रैः सह गोदावरीं रामानन्दं प्रति गच्छति । रामानन्दः महाप्रभुं बहुविधं स्तौति । पुनः कर्णाटपतिना प्रेषितः मल्लभट्टनामा कश्चित् पण्डितवरः गजपतेः सभायां प्राप्य चैतन्यस्य पथि विलोकितानलौकिकचमत्कारान् वर्णयति । रामं कीर्त्तयन् कश्चित् विप्रः चैतन्यस्य प्रभावेण कृष्णं भजति । इत्थमेव महाप्रभोः प्रभाव-प्रसंगस्तेन बहुप्रकारेण सूच्यते । तीर्थाटनं विधाय चैतन्यः पुनः जगन्नाथक्षेत्रं प्रत्यावर्तते ।

**अष्टमाङ्कः** गजपतिप्रतापरुद्रोपरि देवस्यानुग्रहो वर्णितोऽत्र । केचिदुत्कल-वासिनो भक्ताः प्रविशन्ति । सार्वभौमः सर्वेषां परिचयं ददाति । भगवतो पुण्डरीकाक्षस्य दर्शनकालः समायात इति चैतन्यः ततः चलति । पुरीं प्राप्य पुरीश्वराय दर्शनं ददाति महाप्रभुः । राजा प्रतापरुद्रोऽपि जगन्नाथदेवस्य रथयात्रा-कालं विदित्वा चैतन्यस्य दर्शनाय याति । तं दृष्ट्वा स राजा तस्य पादोपरि पतति । देवः तमालिङ्गति । पुनः राज्ञे दर्शनं दत्त्वा जगन्नाथदेवस्य दर्शनाय महाप्रभुर्गच्छति । राजाऽपि गोपीनाथाचार्येण सह स्ववासस्थानं प्रत्यागच्छति ।

**नवमाङ्कः**-चैतन्यस्य मथुरागमनं वर्णितमत्र । प्रारंभ एव प्रवेशकद्वारेण किन्नरमिथुनः प्रविश्य जगन्नाथस्य रथयात्रा पूर्णा जाता इति संदिश्य चैतन्यस्य

पथि मथुरागमनं सूचयति । चैतन्यो गौडवर्त्मन्येव गन्तुमुद्यतोऽस्ति । मद्रककुलियाख्यग्रामावतिक्रम्य गौडसीम्नि प्रविशति । तत्र त्रय एव पन्थान आसन् द्वयं रुद्धं एकस्तु जलदुर्गः । सीमाधिकारी तत्र कश्चिद्यवनः महान् क्रूर आसीत् । चैतन्येन प्रभावितः स यवनः पार्षदैः चैतन्यः तेनैव मार्गेण याति । पथि पुनः मन्त्र-सह तं पाणीपहाटीनामक ग्रामपर्यन्तं तरण्योत्तारयति । ततो तटिनीवर्त्मनैव श्वराख्यं स्थानमुत्तीर्य पिच्छनदाख्यं ग्रामं प्राप्नोति । सप्तहायनानि नवद्वीपस्य पारे कुलियानामग्रामे माधवदास-वाट्यामुत्तीर्णवान् । तत्र व्यतीत्य वृन्दावने स प्राप्यति । भक्तिदशामापन्नः स स्खलति, लुठति, वेपते विरौति द्रवति मूर्च्छतीति बहुविधभक्तिभावं दर्शयति ।

दशमाङ्कः महामहोत्सवनाम्नाभिहितो वर्ततेऽयम्। विष्कम्भद्वारेण इदं सूच्यते यत् सर्वतो चैतन्यपार्षदाः एकत्रीभूता । ते चैतन्यस्यालौकिकं प्रभावं, करुणार्द्रं भावं, जात्याद्यनपेक्षितत्वं भावं विलोक्य तं स्तुवन्ति । स्वयं राजा चैतन्येन प्रभावितः कथयति--रथविजयस्य यात्रा यद्यपि निश्चिता, किन्तु सा मां न तथोत्कण्ठयति यथा महाप्रभोर्देवस्य नृत्यस्यः स्पृहा' । स्तुवन् कश्चित् कथयति-देव भवतश्चरणकमलयोर्दर्शनमेव यदि सदा लभेय तदाहं तमेव महामहोत्सवं मत्वात्मानं कृतकृत्यं मन्ये । भक्तेः सत्संगस्य च प्रभाव ईदृशीं कोटिं गतो वर्तते यत् तयोरग्रे भक्ता धर्मार्थकाममोक्षान् चतुरोऽपि पुरुषार्थान् स्वीकर्तुं नोत्सहन्ते । ते सर्वे एव चैतन्यस्य दर्शनायैव लालायिता दृश्यन्ते । भरतवाक्येनान्ते नाटकस्य समाप्तिर्भवति ।

## नेता

कविः नाटकस्य सम्पूर्णं कथानकं चैतन्यदेवस्य चरितमाधारीकृत्य प्रस्तौति । अतः नाटकस्य नेता स्वयं चैतन्य- एव । दशरूपके नेतुर्यद् वैशिष्ट्यं वर्ण्यते तत्सर्वं चैतन्ये वर्तत एव । दशरूपके यथा--

> "नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः ।
> रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा ॥
> बुद्धयुत्साहस्मृतिप्रज्ञा -- कलामानसमन्वितः ।
> शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः" ॥

एव विष्कम्भकद्वारेण क्रूराशययोः कल्यधर्मयोर्वार्त्तया चैतन्यस्य गुणाः प्रकटी-भवन्ति । चैतन्यं संबोध्य कलिः निगदति—

कलिः —"नो भयं, नो भयं, नो भयं कर्त्तुमीष्टे । किन्तु
नवद्वीपे जगन्नाथनाम्नो मिश्रपुरंदरा —
ज्जातः शच्यां कुमारोऽयं मम मर्माणि कृन्तति ।"[1]

चैतन्ये बाल्यादेव त्याग–विराग-शम-दमादयो गुणाः सन्ति । एकत्र त्यागस्य विरागस्य च महिमानं वर्णयन् कलिः कथयति —

आरंभ एव वयसोऽभिनवस्य नव्यां,
लक्ष्मीमिव द्युतिमतीं स विहाय भार्याम् ।
संपालयन्निजनिदेशमशो गयायां,
यातश्चकार जनकस्य परेतकार्यम् ॥[2]

चैतन्यः श्रीकृष्णस्यानन्योपासकः । श्रीकृष्णस्य भक्तये सर्वं विहाय स्वयं गायन्, नटन् अभिनयन्, विरुदन् आनन्दसिन्धुषु निमज्जति, निमज्जयति च लोकान् । भक्तिदशामापन्नस्य तस्य स्थितिरेवाद्भुता भवति । यथा—

"न भाषते नेक्षते च न शृणोति च किंचन
स्वानन्दस्तिमितः किन्तु तेजसा परमेधते" ॥[3]

विविधानि शास्त्राणि स्वस्वरुच्या निर्मितान्यपि भक्तियोगस्य समक्षं न तादृशानि आनन्दमयानि । यतस्तेषां ज्ञानन्तु श्रमेण साध्यं किन्तु भगवद्भक्तिः निष्कामपुरुषाणां कृत एव भगवतोऽनुग्रहेण लभ्या भवति । महान् न्याय-शास्त्रवित् कश्चिदेक पार्षदः सार्वभौमभट्टाचार्यनामा चैतन्यस्य भक्त्या प्रभावितः कथयति—

"शास्त्रं नानामतमपि तथा कल्पितं स्वस्वरुच्या,
नो चेत्तैषां कथमिव मिथः खण्डने पण्डितत्वम् ।
तत्रोद्देश्यं किमपि परमं भक्तियोगो मुरारेः
निष्कामो यः स हि भगवतोऽनुग्रहेणैव लभ्यः "॥[4]

१ चैतन्यचन्द्रोयम्-अंक १ पृ. ७
२—चै. च. अं. १ श्लोक ३०
३—चै. च. अंक १ श्लोक ४२
४—चै. च. अंक ६ श्लोक ३४

नाटकेऽस्मिन् चैतन्यः प्रभावातिशयसम्पन्नो दृश्यते । तेन प्रभावितः गजपतिः प्रतापरुद्रः जगन्नाथस्य रथयात्रा - दर्शनं लब्ध्वापि न तथा प्रीतिमनुभवति, यथा चैतन्यस्य नृत्यदर्शनेन । तथाहि राजा कथयति--

"रथविजय-सेवा मे नियतापि तथा मां नोत्कण्ठयति यथा महाप्रभोर्नृत्यदर्शन-स्पृहा ॥[1]

चैतन्यस्य गुणानामाकलनेन ज्ञायते यत् नाटकस्य नेता स एव । यतः सर्व एव पार्षदा तस्यैव चरितमुद्घाटयन्ति । क्रूराशयः कलिरपि अस्मादेव भीतः दृश्यते । अतः प्रस्तावनान्ते प्रविश्य तस्यैव गुणान् गायति ।

अन्यपात्राणि

चैतन्यदेवेन सह तद्भक्त्यनुप्राणिता विविधाः पार्षदाः सन्ति, ये चैतन्यस्योन्माद-दशायां तस्योपचर्यां विदधति । तथा च स्वयं भक्तिरसमज्जिता भूत्वा हरिसंकीर्त्तनं कुर्वन्ति । प्रमुखाणां केषाञ्चिन्नामानि ।

" अद्वैताचार्य - नित्यानन्द-श्रीकान्त - श्रीवास-हरिदास -मुरारि- गंगादास सार्वभौमभट्टाचार्य - गोपीनाथाचार्याचार्यरत्न - रामानन्दा इति

एवमेव नाटकेस्मिन् पुरुष-प्रतीक-पात्रेषु " रत्नाकरः विरागादयश्च"

प्रतीक खलपात्रेषु "कलिः अधर्मश्च ।"

स्त्रीपात्रेषु " शचीदेवी " चैतन्यस्य माता, आचार्यपत्नी, जरती, राधादयश्च"

स्त्रीप्रतीक-पात्रेषु " मैत्री, प्रेमभक्तिः गंगादयश्च" दृश्यन्ते ।

पार्षदानां संख्या समधिका विद्यते ।

एतद्व्यतिरिक्तमपि कानिचित् पात्राणि चैतन्यस्य तीर्थाटनकाले मिलन्ति

यथा कर्मक्षेत्रे - कूर्मनामा विप्रः " तत्रैव वासुदेवनामा गलितकुष्ठः कश्चिद्विप्रः " गौडसीमातिक्रमणे कश्चित् भक्तः पार्षदैः सह तरण्या नद्याः पारमुत्तारयति 'कर्णाटपतिः, तस्य सेवकः मल्लभट्टः' कञ्चुक्यादयश्च ।

## संवादः

नाटकस्य चारुता संपादने, भावनामवबोधने, लोकचित्ताह्लादकरे काले

---

१—चै. च. अंक १० पृ. १६८

संवाद एव हि कारणम् । अत संवादो जनानुरञ्जनकरः समासरहितः प्रसादयुक्तः मृदुशब्दविन्यासपूर्णः श्रोत्रपेयश्च भवेदेव । प्रायशः संवादा अस्मिन् संक्षिप्ताः सदुक्तिपूर्णा वक्रोक्तिप्रधानाश्च । किन्तु क्वचित्क्वचित् तादृशी स्थितिः न सर्वत्र दृग्गोचरीभवति । नाटकस्य प्रस्तावनायामेव यत्र सूत्रधारः गजपति-प्रतापरुद्रस्य नाटक-विषयिणीमाज्ञप्तिं सूचयति तत्र भाषायाः समासबाहुल्येन माधुर्य-क्षतिर्दृश्यते । यथा–

" सकलदिग्विहारिहारिनरनिकर – मुखर - मुखरायमाण - जयध्वनिध्वनित जगदण्डभाण्डकुहरे, प्रमोदमोदमानमानसरसाविभक्त – जनजनित - भगवत्कीर्त्तन-कुतूहलहलहलास्वानस्वानन्दित - दिग्वधूनिकरे, सविमर्दमर्दलसाहचर्यलम्पटपटह-महापणपणवस्वनस्वल्प - ढक्काढक्कारगभीरभेरीभांकृति- दुन्दुभिदुङ्कार -कारणा-न्यशब्दाग्रहनिरवधिबधिरायमाणजननिकरे"[१]

सर्वत्रैवात्र यमकानुप्रासयोर्बाहुल्यं दृश्यते' किन्तु क्वचित् सहासवक्रोक्त्या संलापोऽतिरम्यः भवति । यथा तृतीयाङ्के सखीकुसुमासवयोः प्रसङ्गे—

सख्यः—पूजोपकरणपुटिकेयं गोपीश्वरस्य ।

कुसुमासवः—अरे मूर्खाः अयमेव गोपीश्वरः। इममेव पूजयत ।

सख्यः—महाकालो गोपीश्वरः

कुसुमासवः—अयं महाकालः किं न भवति । यस्य रुचिपटलैः सर्वमेव वनं तमालवर्णं कृतम् ।

सख्यः—चन्द्रकशेखर एवार्चितव्यः।

कुसुमासवः—पश्य, पश्य एष चन्द्रकशेखरो न भवति ।

सख्यः—वाचाल ! गौरीपतिं, पूजयिष्यामः ।

कुसुमासवः—यूयं गौर्यो न भवथ ।

जरती—अरे बटुक ! एतासां पतिस्तव वयस्य इति त्वं न जानासि, तिष्ठ, तिष्ठ ग्राममध्ये तव दर्शनं न लप्स्ये ।

सख्यः—अरे वाचाल ! पशुपतिः पूजितव्यः ।

कुसुमासवः—हन्त भोः एतावतीर्धेनूर्यः पालयति स किं पशुपतिर्न भवति ।

---

१—चै. च. प्रस्तावना पृ. २

सख्यः एवं भणत । यस्यैता वयं पशवः स किं पशुपतिर्न भवति ।
कुसुमासवः-भो - सख्यः दर्शयत ।[1]
इत्थमेव चैतन्यरामानन्दयोर्वार्त्ता कथानकदृष्ट्या महत्त्वपूर्णं वर्तते ।[2]

## रसः

चैतन्यचन्द्रोदये भक्तिरेव प्रधानरसरूपेण विराजते । प्राचीनैःकाव्यशास्त्र-निर्मातृभिर्मनीषिभी रसानां संख्या नवैव निर्धारिता । दशरूपके धनञ्जयेनाष्टावेव रसाः स्वीकृताः । तन्मते तु शान्तरसो नाभिनययोग्यः । किन्तु आचार्यमम्मटप्रभृतयः शममपि स्थायित्वेन स्वीकुर्वन्ति । नागानन्दादिषु केचित् शमं स्थायित्वेन स्वीकुर्वन्ति । दशरूपके धनञ्जयः शमं न स्वीकृत्य तत्र दानवीररसं स्वीकरोति ।[3] तथापि केचिदत्र शान्तरसस्वीकारे स्वभावं प्रकटयन्ति ।

नाटककारस्य मुख्यमुद्देश्यमेव राजसतामसादीनां विषयवासनानां समाप्ति-द्वारेण निर्वेदस्थायिभावं विकाश्य भगवद्भावस्याविर्भूतस्य शान्तरसस्य स्थापनमस्ति । चैतन्यादयतस्य रसस्याश्रयास्ते राधाकृष्णयोः लीलामालम्बन-रूपं स्वीकुर्वन्ति । लौकिकवासनाजनितग्लानितः उद्दीप्तीभूय कीर्त्तनं नर्त्तनादिक-मनुभावं तथाऽलौकिककार्यजन्यविस्मयदैन्यानन्दतन्मयतास्तुतिविह्वलतादीन् संचा-रिभावान् व्यक्तीकृत्य शान्तरसं परिपूर्णं स्वीकुर्वन्ति ।

किन्त्वियं स्थितिः तावत्कालपर्यन्तमासीत् यावत् भक्तिरसस्य गणना पृथक्त्वेन रसकोटौ नासीत् । मम्मटाचार्यः देवादिविषयिकां रतिमेव भक्तिं स्वीकरोति । किन्तु परवर्त्तिभिरार्यैर्विशेषतो षोडशशतकस्य भक्तिप्रवर्तकैः चैतन्यपार्षदैः श्रीरूपादिभिः भक्तिः पूर्णतया रसकोटौ संस्थापिता । श्रीरूप-गोस्वामी 'भक्तिरसामृतसिन्धु - उज्जवलनीलमण्याख्ये स्वग्रन्थद्वये शृंगाररस इव भक्तिरसमपि प्रामुख्येण स्वीकरोति । सा च भक्तिः द्विधा भवति - वैधी-रागानुगाभेदात् । रागानुगा भक्तिरपि द्विधा । कामरूपा - संबन्धरूपा च संबन्धरूपा भक्तिः चतुर्धा - दास्य - सख्य - वात्सल्य - दाम्पत्यभेदात् ।[4]

---

१—चै. च. अं. ३ पृ. ६४-६५ काव्यमालया प्रकाशितम् ।
२—चै. च. अं. ७ पृ.-१२८-३० „
३—दशरूपकम् पृ. ८२-८३ डा० मोरारीलाल चन्द्रकान्तदत्त ।
४—भक्तिरसामृतसिन्धुः—पूर्वविभागः (द्वितीया लहरी)

श्रीरूपगोस्वामी उज्ज्वलनीलमणिग्रन्थे दाम्पत्यभावमेव माधुर्यभावेन स्वीकरोति । अनेनैव भावेन विभावादीनां संयोगद्वारेण निष्पन्नो रसो मधुर उज्ज्वलो भक्तिरसः कथ्यते ।

चैतन्यः पार्षदाश्च तस्य माधुर्योपासका दृश्यन्तेऽत्र माधुर्यस्य स्वरूप-निरूपणमीदृशं श्रीरूपेण विहितम् ।

" आत्मोचितैर्विभावाद्यैः पुष्टिं नीता सतां हृदि ।
मधुराख्यो भवेद्भक्तिरसोऽसौ मधुरा रतिः " [१]

स्वानुरूपैः विभावादिभिः सहृदयानां हृदि पुष्टिं नीता मधुराख्या रतिर्मधुरभक्तिरसो निगद्यते । अस्यालम्बनं स्वयं श्रीकृष्णः तथा च तस्य प्रिया राधा ।

एकत्र श्रीरूपगोस्वामी भक्तिरसस्य प्रतिष्ठां कुर्वन् तं पञ्चधा निगदति-शान्तभक्तिः, प्रीतिभक्तिः, प्रेयोभक्तिः, वत्सलभक्तिः, मधुराभक्तिश्च ।

मधुराभक्तौ निरुपमेयं श्रीकृष्णसौन्दर्यमालम्बनम्, गोपीरूपाणां भक्तानां चैतन्यादीनां हृदि रतिः भावः राधागोपिकादिभिः सह प्रेमक्रीडनं, रासलीला-दिकृत्यं मुरलीवादनादिकञ्च अनुभावः भवति । अस्मन्मते नाटकेऽस्मिन् माधुर्य-रसस्यैव परिपाकः सम्यक् वर्तते । यतो चैतन्यस्य चरितमाधारीकृत्यास्मिन् भक्तिरसस्य प्राधान्यं व्यञ्जयितुं तृतीयाङ्के गर्भाङ्कस्य योजनं कविः करोति । अङ्केऽस्मिन् चैतन्यस्य पार्षदाः श्रीकृष्णस्य लीलां कर्तुमना विविधरूपेणागत्य दानलीलामभिनयन्ति । स्वयं महाप्रभुः गौरश्चैतन्यः राधिकायाः भूमिकां गृह्णाति । गौरः महाप्रभुरपि राधावतारत्वेन गौराङ्गः निगद्यते । अत एव राधिकावत् सोऽपि माधुर्योपासकः । अस्मिन् चैतन्यस्य भक्तिः कान्तरुपेण दर्शिता । कान्ताभक्तिमान् भक्तः श्रीकृष्णविषये एवं व्याहरति –

"अहं कान्ता कान्तस्त्वमिति न तदानीं मतिरभू-
न्मनोवृत्तिर्लुप्ता त्वमहमिति नौ धीरपि हता ।
भवान् भर्त्ता भार्याहमिति यदिदानीं व्यवसिति-
स्तथापि प्राणानां स्थितिरिति विचित्रं किमपरम्" ।[२]

दानयाचनकाले श्रीकृष्णः विवादभूमौ समायाति तत्र राधाकृष्णयोः

१—भक्तिरसामृतसिन्धुः कारिका ३६ पृ. ४५

परस्परावलोकनेनानुरागः वर्धते । तस्मिन्नेवावसरे तौ विविधमाधुर्यव्यंग्य-परिहास-वक्रोक्तिपूर्णानि वचनानि मिथः कुरुतः । यदा राधायाः कञ्चुकाभ्यन्तरितौ हेमकुम्भौ द्वौ श्रीकृष्णः दानरूपेण याचते तदा स्मयमानाः सर्वा अन्तर्मुग्धाः प्रत्यक्षं तं निन्दन्ति । इत्थं माधुर्यभावस्य सम्यक् परिपोषो भवति ।

प्रसंगेऽस्मिन् उद्दीपनरूपेण वृन्दारण्यस्य वर्णनं मुरलिकाया वादनं च भवति । तत्र राधिकाया अवचितपुष्पनिक्षेपणं, ततो गमनमित्यादयोऽनुभावाः । अतः नाटकमिदं भक्तिप्रधानं माधुर्यरसयुक्तञ्च वर्तते ।

## प्रकृतिवर्णनम्

**वृन्दारण्यवर्णनम्**—कृष्णभक्तिमेव सर्वस्वं मन्यमानः भक्तवृन्दो वृन्दारण्यस्य कुञ्जवीथिकानां विहारं, उद्यानभूमेः शोभां, वेणोः कलरवनिनादं कदापि विस्मृतिपथं न नयति । स्वयं देवर्षिर्नारद : अस्य शोभां विलोक्य कथयति—

"यत्पारे विरजं विराजि परमव्योमेति यद्गीयते,  
नित्यं चिन्मयभूमि चिन्मयलताकुञ्जादिभिर्मञ्जुलम् ।  
सान्द्रानन्दमहोमयैः खगमृगव्रातैर्वृतं सर्वतः  
तद्वृन्दावनमीक्ष्यते किमपरं संभाव्यमक्ष्णोः फलम् ॥[1]

तस्य नैसर्गिकं रामणीयकं वीक्ष्य स्वयं श्रीकृष्णोऽपि निगदति

हसन्ती वासन्ती, वलितमुकुलो बालबकुलो  
विशोकश्चाशोकः सुलभविचयश्चम्पकचयः ।  
अनागः पुंनागः स्तबककमनः पश्य सुमनः  
कुटीरः पाटीरश्वसनसुरभिर्भाति सुरभिः" ॥[2]

## वंशीवादनम्

एतैः रामणीयकैः सह यदि कदाचिद्वेणोर्मधुरनिनादोऽपि भवति तदा कृतकृत्यतां यान्तो भक्ताः भुक्तिं मुक्तिञ्चापि तिरस्कुर्वन्ति ।

मधुरिमरसवापी मत्तहंसी प्रजल्पः  
प्रणयकुसुमवाटी भृंगसंगीतघोषः  
सुरतसमरभेरी भांकृतिः पूतनारेः  
जयति हृदयदंशी कोऽपि वंशीनिनादः ॥[3]

---

१—चै. च. ३/३१  
२—चै. च. ३/३५  
३—चै. च. ३/३२

## कलापक्षः

**अलंकाराः**—नाटकेऽस्मिन् अलंकाराणामपि महत्त्वं सौन्दर्यावहम् । शब्दालंकारेष्वनुप्रासश्लेषयमकादीनामर्थालङ्कारेषु चोपमा-रूपक - एकावली दृष्टान्त-अर्थापत्ति-संकर-संसृष्टि-अतिशयोक्ति-अर्थान्तरन्यासादयः सुचारुणा प्रकारेण विनिवेशिताः सन्ति ।

**यमकं यथा—**

हेलोद्‌धूलितखेदया विशदया प्रोन्मीलदामोदया
शाम्यच्छास्त्रविवादया, रसदया, चित्तार्पितोन्मादया ।
शश्वद्‌भक्तिविनोदया समदया माधुर्यमर्यादया,
श्रीचैतन्य दयानिधे तव दया भूयादमन्दोदया ॥[1]

श्लेषवक्रोक्तिः यथा—

कस्त्वं भो ननु माधवः कथमहो वैसाख आकारवान्
मुग्धे विद्धि जनार्दनोऽस्मि तदिदं ब्रूते वनावस्थितिः ।
मां गोवर्धनधारिणं न धरणौ को वेत्ति हुं वर्धनं
हिंसां हे वृषहन् विमर्षि तदघद्वारैव गोवर्धनम् ॥[2]

अर्थालंकारेष्वतिशयोक्तिर्यथा—

एतत्स्वर्णसरोरुहं तदुपरि श्रीनीलरत्नोत्पले
तत्पश्चात्कुरुविन्दकन्दलपुटे तत्रापि मुक्तावली ।
सर्वं दृश्यत एव किंतु निभृता या हेमकुम्भद्वयी
किं वान्यन्नयसेऽनयेति तदिदं बाले विचार्यं मम ॥[3]

अत्र भेदेऽप्यभेदरूपातिशयोक्तिरलंकारः ।

गभीरैर्हुंकारैर्निजजनगणान् बर्हिणयति
द्रुतैर्बाष्पाम्भोभिः भुवनमनिशं दुर्दिनयति
महःपूरैर्विद्युद्‌वलययति दिक्षु प्रदमयन्
असौ विश्वं विश्वंभर जलधरो नृत्यति पुरः ॥[4]

---

१—चै. च, ८/१०
२—चै. च. ३ । ५५
३—चै. च. ३ । ३४
४—चै. च. ४ । ६

साङ्गरूपकमलंकारोऽत्र वर्तते । इत्थमेव विविधा अलंकाराः सुसन्निहिता दृश्यन्ते ।

छन्दः

अलंकार इव विविधानि छन्दांस्यपि अस्मिन् सन्ति । वसन्ततिलक-मालिनी-न्द्रवज्रोपेन्द्रवज्रा-मन्दाक्रान्ता-शार्दूल-द्रुतविलंबितादीनि सन्ति ।

सुभाषितानि—

विभिन्नेषु स्थलेषु प्रयुक्ताः सूक्तयोऽपि नाटकस्य रोचकतां वर्धयन्त एव । काश्चिदत्रोद्धृताः सन्ति । यथा—

"स्वतो बलीयः सहजो हि भावः स कृत्रिमं भावमधः करोति ।
अग्न्यातपाभ्यां जनितो जलानां नैवोष्णभावश्चिरकालवर्ती ॥[1]

प्रमदाया विषये स्वयं चैतन्यो निगदति ।

"आकारादपि भेतव्यं स्त्रीणां विषयिणामपि ।
यथाहेर्मनसः क्षोभस्तथा तस्याकृतेरपि" ॥[2]

प्रमदाया विषयिणश्चाकृतिरेव भयदा भवति । तेषां प्रकृतिस्तु कीदृशीति विचारणीया ।

एकस्मिन् स्थले धीराणां प्रशसां विदधन् निगदति कविः

"सदैव तुङ्गः किल काञ्चनाचलः सदैव गम्भीरतमाः पयोधराः ।
सदैव धीरा विनयैकभूषणा लक्ष्मीः प्रकृत्यैव जनैः समीयते" ॥[3]

एकस्मिन् श्लोके उपास्योपासकयोः परस्परसंबंधः वर्णितो वर्तते ।

"ईश्वरो येन पूर्णोऽपि पार्षदैरेव पूर्यते ।
पूर्णोऽपि रजनीनाथो रिक्त एवांशुभिर्विना" ।[4]

अनेन भक्तानां महत्त्वं स्वतो ज्ञातं भवति ।

---

१—चै. च. ४/६०
२—चै. च. ८/४०
३—चै. च. ७/१६
४—चै. च. ८/४२

## भाषा

नाटकेऽस्मिन् पुरुषपात्राणि संस्कृतमाश्रित्य वदन्ति । तेषु केवलं विदूषक एव प्राकृते व्यवहरति । स्त्रियः प्रायशः प्राकृतं वदन्ति । क्वचित्क्वचित् संस्कृतमाश्रित्यापि ता निगदन्ति । गद्यभागा यत्र कुत्रापि दीर्घतराः समास-बहुलाश्च सन्ति । किन्तु प्रायशः सरलाः सप्रसादाः कथोपकथनदृष्ट्या च मनोहारिणः सन्ति । पद्यभागास्तु प्रायशो ललिता सालंकाराश्च ।

## भक्तिः

नाटकमिदं भक्तिरसपूर्णं वर्तते । अतो भक्तेर्वैशिष्ट्यमस्मिन् वर्तत एव । भक्तेश्चरमोत्कर्षो भगवन्तं प्रति सर्वस्वार्पणभक्तिरत्र प्रतिपाद्या । तस्या महिमा सिद्धितो गरीयान् । "भक्तिः सिद्धेर्गरीयसी" तस्यां प्रतिग्रहणस्य भावना स्वप्नेऽपि न दरीदृश्यते । तस्याः समक्षं भुक्तेर्मुक्तेश्च स्पृहा पिशाचीव भवति । श्रीरूप इत्थं वक्ति ।

"भुक्तिमुक्तिस्पृहा यावत् पिशाची हृदि वर्तते ।
'तावद्भक्तिसुखस्यात्र कथमभ्युदयो भवेत्" ॥[1]

मुक्तिं मुक्तिञ्च विहाय भक्तो भक्तिमेव स्वीकरोति । भक्तेर्लक्षणं प्रकटयन् श्रीरूपः कथयति—

"अन्याभिलाषिताशून्यं ज्ञानकर्माद्यनावृतम् ।
आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा" ॥[2]

नारदपंचरात्रे-

"सर्वोपाधिविनिर्मुक्तं तत्परत्वेन निर्मलम् ।
हृषीकेण हृषीकेशसेवनं भक्तिरुच्यते ।[3]

सर्वोपाधिरहितं निर्मलभावनया निखिलैरिन्द्रियैः श्रीकृष्णस्य सेवनमेवोत्तमा भक्तिर्निगद्यते । भक्तिरसामृतसिन्धौ नारदपंचरात्रे च भक्तिलक्षणयोः विशेषसाम्यं दृश्यते ।

भागवतपुराणस्य तृतीये स्कन्धेऽपि तस्या लक्षणमस्ति ।

अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ।
सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ॥ २ ॥

---

१—भक्तिरसामृतसिन्धुः कारिका ११ पृ. २९
२—भक्तिरसामृतसिन्धुः कारिका ११ पृ. १०
३—भक्तिरसामृतसिन्धुः श्लो. १ पृ. ११

दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ।
स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः ॥३।[1]

महाप्रभुश्चैतन्यदेवोऽपि भुक्तिसुखस्याग्रे सर्वहायनं करोति ।-

भगवान् - ' तत्त्वतोऽवधारयन्तु ।

" विना सर्वत्यागं भवति भजनं न ह्यसुपते-
रिति त्यागोस्माभिः कृत इह किमद्वैतकथया ।
अयं दण्डो भूयात्प्रबलतरसो मानसपशो —
रितीवाहं दण्डग्रहणमविशेषादकरवम् ॥[2]

सर्वत्यागेन विना भगवद्भक्तिः सुदुर्लभा । अतो महाप्रभुर्मातरं प्रेयसीं सर्वांश्च स्वजनान् विहाय निरामयं कृष्णभक्तिरसायनं पीत्वोन्मत्तो भवति । तत्र सर्वत्र कृष्णस्यैव प्रतिबिम्बं स पश्यति । तस्य कृते श्रीकृष्ण एव सर्वस्वभूतम् । मातुः सन्निधौ चैतन्यः कथयति-

श्रीकृष्णः परिपालकस्तव पिता माता च पुत्रोऽपि च
शांतिश्च द्रविणं च नित्यसुखदो बन्धुश्च देवोऽपि च ।
संगः शाश्वत एव यस्य तमनुस्मृत्यानिशं चेतसा
संपन्नासि तवाधुना सुखमयं जानीहि दिङ्मण्डलम् ॥[3]

भक्तेरानन्ददशायां लीनश्चैतन्य आहारं, जलग्रहणं, वस्त्राच्छादनं, गमनादिकं सर्वाण्यपि दैनन्दिनकर्माणि विहाय केवलं हरिमेव भजति । नित्यानन्दाख्यः कश्चित्पार्षदस्तस्य दशामित्थं वर्णयति—

नाहारोऽद्य दिनत्रयं न च पयःपानं किमन्याः क्रियाः
कौपीनैकपरिच्छदो निजसुखावेशैकयात्रानुगः
गच्छन्नेव दिनं निशामपि विभुर्नो वेत्ति किं कुर्महे
हे गौराङ्ग कृपाब्धिे कुरु कृपासार्द्रे मयि प्रीयताम् ॥[4]

सर्वत्र चैतन्यः कृष्णविग्रहदर्शनपिपासुर्वन्यगज इव उन्मत्तो भ्रमति । चैतन्यं विलोक्यालये च तस्य पार्षदाः स्वस्वस्मृतिं जहति । भक्तिदशायां

१--भक्तिरसामृतासिन्धुः पृ. १२
२—चै. च. ५/२२
३—चै. च. ४/१
४—चै. च. ५/६

लौकिकाचारविचारयोर्भावना, जातेर्बन्धनञ्च सर्वाण्येव स्वत उन्मूलीक्रियन्ते । स परमहंस इव भवति । जातिवादं खण्डयन् चैतन्यः स्वयं कथयति—

"हरेः स्वतन्त्रस्य कृपापि तद्वद् धत्ते न सा जातिकुलाद्यपेक्षां
सुयोधनस्यान्नमपोह्य हर्षाज्जग्राह देवो विदुरान्नमेव" । [१]

## 'सामाजिकवृत्तम्'

यत्रेदृशं भक्तिवैशिष्ट्यमासीत् तत्र कल्यधर्माभ्यां प्रभावितस्य प्रवृद्धपापाचारस्य जगतः स्थितिरपि दयनीयैवासीत् । वर्णानां, जातीनां, धर्माणां कर्मणाञ्चैतेषां सर्वेषां गतिः शोचनीया । प्रथमाङ्के यदा कलिधर्मश्च परस्परं वार्त्तां कुरुतस्तदा तात्कालिकस्य समाजस्य सम्यक् चित्रणं भवति । कलिं संबोध्याधर्मः कथयति —

" शौचाचारतपःक्षमाशमदमैः सार्धं विवेकादिभिः
सामन्तैरपि येन धर्मनृपतिर्निर्मूलमुन्मूलितः ।
ये दृष्ट्वैव पुनन्ति तेऽपि सहसैवान्धीकृतास्तत्प्रिया
यैनेकेन मया स यस्य वशगः सोऽयं कलिर्निन्द्यते ।।[२]

श्लोकेनानेनेदं ज्ञायते यद् धर्मस्य शौचाचारतपःक्षमादीनि यान्यङ्गानि सन्ति तेषामुन्मूलनं संप्रति कलिना कृतम् । धर्मभावना लोकानां मनसि प्रायः नास्त्येव । कुत्रचिदपि वर्तेत चेत् तत्रापि सा पाषण्डमण्डिता । वास्तविकं स्वरूपं तु तस्याविलुप्तमेव । कुत्रापि शौचादीनां नियमानां शान्तेः क्षान्तेर्मैत्र्या दयायाश्च प्रभावो न दृश्यते । द्वितीयाङ्के विरागोऽन्तःशून्यं बहिर्मुखं जगद् वीक्ष्य सहसा कथयति ।

"न शौचं नो सत्यं न च शमदमो नापि नियमो
न शान्तिर्न क्षान्तिः शिव शिव न मैत्री न च दया ।
अहो मे निर्व्याजप्रणयिसुहृदोऽमी कलिजनैः ।
किमुन्मूलीभूता विदधति किमज्ञातवसतिम् ।। [३]

चतुर्वर्णानां का दशेयमपि विचार्या —

" षष्ठे कर्मणि केवलं कृतधियः सूत्रैकचिह्ना द्विजाः
संज्ञामात्रविशेषितो भुजभुवो वैश्यास्तु बौद्धा इव ।

१—चै. च. ८/१४
२—चै. च. १/१०
३—चै. च. २/१

शूद्राः पण्डितमानिनो गुरुतया धर्मोपदेशोत्सुका ॥
वर्णानां गतिरीदृशीव कलिना हा हन्त संपादिता[1]

यादृशी स्थितिर्वर्णानां तादृश्येव वर्णाश्रमधर्माणामपि—

"विवाहायोग्यत्वादिह कतिचिदाद्याश्रमयुजो
गृहस्थाः स्त्रीपुत्रोदरभरणमात्रव्यसनिनः।
अहो वानप्रस्थाः श्रवणपथमात्रप्रणयिनः
परिव्राजावेशैः परमुपहरन्ते परिचयम् ॥[2]

शास्त्रादीनामध्ययनाध्यापनयोर्न काचिदपि सम्यग्व्यवस्था दृश्यते । बहवो ज्ञातारः केवलं वितण्डावादिनस्तत्त्वविमुखाः । 'ब्रह्म सत्यं जगन्मिथ्या' इति वदतां भण्डवेदान्तिनां सिद्धान्तप्रतिकूलव्यवहारेणोपहासः पदे पदे वर्णितः ।

कपिलकणादगौतमपतञ्जलिजैमिनिप्रभृतीनां शास्त्रनिर्मातॄणां मुनीनां विचारः सांप्रतिकानां पण्डितम्मन्यानां समक्षं केवलं विवादाय । तादृशपण्डितानां विद्या, धनं, शक्तिश्च क्रमशो विवादाय, मदाय, परेषां परपीडनाय सन्ति न तु लोके ज्ञानाय, दानाय, रक्षणाय च । चन्दनादिभिः शरीरं विलिप्य चक्षूंषि निमील्य नदीतीरे बद्धासनं स्थित्वा समाधिं विरचय्य पाषण्डाः साधवो जलं नेतुमागतानां स्त्रीणां मधुरशब्दश्रवणाय रूपदर्शनाय च चेष्टन्ते ।

तमेव भावं शैवशाक्तवैष्णवादिसंप्रदायप्रवर्तका भजन्ते । स्थितिमीदृशीं विचिन्त्येदमावश्यकं भवति यद् यस्य कस्यापि देवांशस्यावतारो लोके भवेन्नाम। गीतानुसारं यदा धर्मस्यावनतिः पूर्णतया भवति तदा भगवान् परित्राणाय साधूनां धर्मसंस्थापनाय च लोके स्वतोंऽशरूपेण वावतरत्येव । महाप्रभोश्चैतन्यस्य प्रादुर्भावो लोकहिताय भवति । प्रादुर्भावेण विततप्रतिष्ठा भक्तिर्लोके भवति ।

## उद्देश्यम्-

नाटकेऽस्मिन् चैतन्यमहाप्रभोः पावनं चरितमधिकृत्य भक्तेः स्वरूपं परम-प्रेयस्त्वञ्च वर्णितम् । कृष्णविषयिणीं भक्तिमाधारीकृत्य विविधाः संप्रदायाः प्रादुर्भूताः । महाप्रभुश्चैतन्यो गौडीयसंप्रदायस्य प्रवर्त्तकः । अस्मिन् राधाया

१—चै. च, २/२
२—चै. च. २।३